योगतन्त्र-ग्रन्थमाला

(४)

# तन्त्रसङ्ग्रहः

[ द्वितीयो भागः ]



सम्पादकः

म० म० श्रीगोपीनाथकविराजमहोदयः



वाराणसेय-संस्कृत-विश्वविद्यालयः

वै० सं० २०२६

# YOGATANTRA-GRANTHMALA

*Vol. IV*

**General Editor**

**BADARINATH SHUKLA**
**Director, Research Institute,**
**Varanaseya Sanskrit Vishvavidyalaya,**
**Varanasi.**




# TANTRASANGRAHA

**[ Part II ]**

**NIRVANATANTRA, TODALATANTRA, KAMADHENU TANTRA, FETKARINITANTRA, JNANASANKALINITANTRA & DEVIKALOTTARĀGAMA**

**with Commentry of NIRANJANA SIDDHA**

**Edited by**

**M. M. Pt. GOPINATHA KAVIRAJA**
**Head of the Dept. of Yogatantra**
**Varanaseya Sanskrit Vishvavidylaya, Varanasi**

**VARANASI**
**1970**

योगतन्त्र-ग्रन्थमाला

(४)

प्रधानसम्पादकः

बदरीनाथशुक्लः

सञ्चालकः

अनुसन्धानसंस्थानम्

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

# तन्त्रसंग्रहः

[ द्वितीयो भागः ]

निर्वाणतन्त्रम्, तोडलतन्त्रम्, कामधेनुतन्त्रम्,
फेत्कारिणीतन्त्रम्, ज्ञानसंकलिनीतन्त्रम्,
सवृत्तिको देवीकालोत्तरागमश्च

सम्पादकः

म० म० प० गोपीनाथकविराजमहोदयः

योगतन्त्रविभागाध्यक्षः

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।




वाराणस्याम्

१८९२ तमे शकाब्दे

# आद्यं निवेदनम्

वाराणसेयसंस्कृतविश्वविद्यालयस्य योगतन्त्रविभागो विपश्चिदपश्चिमानां साधनामय-जीवनानां महामहोपाध्यायश्रीगोपीनाथकविराजमहोदयानामाध्यक्ष्ये प्रवर्तमानो महनीयानां सुदुर्लभानां तन्त्रग्रन्थानामन्वेषणे सम्पादने परिशीलने च प्रारम्भादेव बद्धपरिकरः स्वकीयै-रध्यापकैरनुसन्धातृभिश्च श्रमनिष्ठापूर्णेन सहयोगेन संवर्ध्यमानो निजेन शैक्षिककर्मणा विद्वन्नि-वहमानन्दतुन्दिलमानसं सम्पादयन् विभ्राजते। तस्यास्य महताऽध्यवसायेनोपलब्धस्य तन्त्र-षट्कस्य प्रस्तुतं संग्रहं मुद्रणप्रकाशनाभ्यां पण्डितजनेभ्यः सुलभीकुर्वतो विश्वविद्यालयस्यास्य पक्षेण विभागस्य सर्वान् सदस्यान् हार्दिकैर्धन्यवादैः सम्मानयता मया विदुषां पुरत उपनीयमानस्य संग्रहस्यास्य विग्रहगतानां तन्त्राणां संक्षिप्तो विषयपरिचयस्तेषामीषन्मनोविनोदार्थमत्र समुपन्यस्यते।

संग्रहेऽस्मिन् षट्तन्त्राणि समावेशितानि—निर्वाणतन्त्रम्, तोडलतन्त्रम्, कामधेनुतन्त्रम्, फेत्कारिणीतन्त्रम्, ज्ञानसंकलिनीतन्त्रम् देवीकालोत्तरागमश्च।

**निर्वाणतन्त्रम्**

इदं तन्त्रं चण्डिकाशिवसंवादात्मकं पञ्चदशसु पटलेषु विततमास्ते। तत्र प्रथमे पटले ब्रह्माण्डानामुत्पत्तेः शिवशक्तिविभागेन सृष्टिकल्पनायाश्च मूलभूतं ब्रह्मतत्त्वं निरूपितम्।

द्वितीयपटले सृष्टेरुद्भवक्रमः, जीवनस्य जन्ममृत्युप्रकारः, मरणोत्तर पिण्डदानस्य सम्भवः, वर्णभेदेन मोक्षस्वरूपभेद इत्यादिको विषयो वर्णितः।

तृतीयपटले प्रकृतितो जगतो जन्मलयौ, सर्वे द्विजाः शाक्ता एव, गायत्र्याः स्वरूपं भेदश्च, तदुपासनायाः फलम्, तुरीये धाम्नि स्थिताय परमेश्वराय बहिर्नमस्कारस्योपपत्तिः, भस्म-रक्तांशुक-दण्ड-त्रिशूलानि दधतो दर्शने सति सद्य एव तन्नमस्कारस्यानिवार्यतेत्यादिरूपा विषया वर्णिताः।

चतुर्थपटले संन्यासिनम्, अवधूतम्, ब्रह्मचारिणम्, गृहस्थं च निर्वर्ण्य पातालसमुद्र-कुलाचलानां निरूपणं कृतम्।

पञ्चमे पटले वैकुण्ठलोकः, गोलोकः, राधिका, मुरलीधरः, वेदगानविधिः, राधिका-कृष्णयोरुपासना तत्फलं चैवमादयो विषया निरूपिताः।

षष्ठे पटले रुद्रालयः, रुद्रः, भद्रकाली, काल्या आराधनयैव विष्णोर्लोकपालकस्य सामर्थ्याधिकारयोः प्राप्तिरित्यादिविषयजातं प्रतिपादितम् ।

सप्तमे पटले भूर्भुवःस्वर्लोकेषु ब्रह्मविष्णुशम्भूनां निवासं महर्लोकं च मुख्यतया निर्वर्ण्य भुवनेशीसम्पर्करहितस्य शिवस्य पङ्गुत्वं वदता तदाराधनयैव तस्येश्वरत्वसम्पत्तिः, सैव विविधे विश्वरूपे प्रसरन्ती भोगमोक्षयोर्दात्रीत्यादिरर्थः स्फुटीकृतः ।

अष्टमे पटले गौर्याः शम्भोश्च स्वरूपं निवासस्थानं च निरूप्य गौरीसंसर्गाल्लब्धमहिमैव महेश्वरः सृष्टिनिर्माणादौ प्रभवतीत्यभिहितम् ।

नवमे पटले तपोलोकं प्राधान्येन प्रतिपाद्य शब्दब्रह्मस्वरूपाणां वेदपुराणप्रभृतीनां पाठस्य महाफलत्वं मोक्षप्रदत्वं च प्रण्यगादि ।

दशमे पटले सत्यलोकं प्रतिपाद्य महाकाल्या एव शम्भुप्रभृतीनां देवानामन्यस्य च सर्वस्य वेदजातस्य प्रादुर्भावः । शिवः स्वर्गप्रदो निर्वाणदा तु काली एवेत्यादिविषया वर्णिताः ।

एकादशे पटले देव्यास्तत्त्वनिरूपणायातितरामाग्रहीतेन शङ्करेण पञ्चमकारात्मकं तत्त्वपञ्चकमुपदिष्टम् । पञ्चमकाराश्च मद्यमांसमत्स्यमुद्रामैथुनरूपाः, तत्सेवयैव साधकस्य मुक्तिलाभः, दिव्यभावयुताः साधकास्तत्त्वज्ञानाद् वीरभावयुताश्च तत्त्वसेवनात् सिद्धिं लभन्ते । एभिः पञ्चतत्त्वैः क्रियमाणा श्रीचक्रपूजा सर्वकामेभ्यः कल्पद्रुमायते । पञ्चतत्त्वोपासनायां पुरुषस्य सहयोगं कुर्वती नारी कालिकाभावं पुरुषाश्च शङ्करभावं प्राप्नुवन्तीत्यादि प्रत्यपादि ।

द्वादशे पटले गुरुमन्त्रवर्णभेदभिन्नं तत्त्वत्रयं निपुणं निरूप्य एतत्तत्त्वत्रयविदो विष्णुलोके निवासस्य यममन्दिरेऽप्रवेशस्य पर्यन्तेऽमरत्वस्य च प्राप्तिर्भवतीत्युपवर्णितम् ।

त्रयोदशे पटले दशार्णमन्त्रम्—"मायाबीजं वधूबीजं लक्ष्मी काली च पाशकम् । गगनं पक्षिबीजं च वह्निकान्तां ततः प्रिये ॥" इत्येवं समुपदिश्य तस्य श्रवणं विधेयतया जपनं च त्याज्यतया प्रतिपादयता मुक्तये गृहीतसन्न्यासस्य नारायणरूपता, दारपुत्राद्यभाव एव सन्न्यासस्य ग्रहणीयता, सन्न्यासिनो गृहस्थेन सर्वथा परिपूजनीयता चैवमादयो विषया विशदीकृताः ।

चतुर्दशे पटले अवधूतस्य स्वरूपम्, तस्य शम्भुभावेन पूज्यता, तत्पूजया काल्यास्तुष्टिः, गृहस्थस्य लक्षणं कर्तव्यं चेत्येवमादयो विषया विस्पष्टं वर्णिताः ।

पञ्चदशे पटले पञ्चाक्षरस्य षडक्षरस्य वा मन्त्रस्य जपविधानम्, पार्थिवस्य लिङ्गस्य पूजनविधिः, निषिद्धकर्मणां त्यागः, शिवपूजोत्तरमेव शक्तिपूजा, शिवपूजातः पूर्वं देवान्तरपूजाया वैफल्यमित्याद्यर्थजातं निरूपितम् ।

तोडलतन्त्रम्

इदं तन्त्रं दशसु पटलेषु प्रसृतम् । प्रथमे पटले कस्या महाविद्यायाः सन्निधौ किमाकारो महादेवः पूज्य इति विस्तरेण वर्णयित्वा हृत्कमले स्थितायाः काल्याः सञ्जिहीर्षया व्यक्तभावाश्रयणे शिवो निर्माणरक्षणानुगुणशक्त्योरभिभवेन शवतां प्रतिपद्यते, तदीयं हृदयमारूढा च काली शववाहनतामापद्यत इत्युक्तम् ।

द्वितीयपटले योगसारनिरूपणसन्दर्भे स्वर्गपातालादिकं निरूप्य देहगतमिडापिङ्गलासुषुम्णानामकं नाडीत्रयम्, साधारं चक्रषट्कम्, तदाश्रितदेवतातर्पणविधिः योनिमुद्रासनम्, तदासनसिद्धया मोक्षलाभ इत्यादिकं विशदीकृतम् ।

तृतीयपटले कालिकाया मन्त्रः, तस्या अष्टौ भेदाः अष्टौ मन्त्राः, विद्याया भेदाः, कालिकाया आराधनविधिः, एवमादयो विषयाः स्पष्टमुट्टङ्किताः ।

चतुर्थपटले ताराया बाह्यपूजाविधिर्विस्तरेणोपन्यस्तः ।

पञ्चमे पटले पार्थिवशिवपूजनं सविधि सम्यगुपदिष्टम् ।

षष्ठे पटले महाकालिकामन्त्रः, तारिणीमन्त्रः, पञ्चाक्षरीप्रभृतयो विद्या एवमादयोऽर्थाः प्रतिपादिताः ।

सप्तमे पटले सप्तद्वीपा वसुन्धरा, तदाधारः, साधारं समुद्रसप्तकम्, मानवादीनामाधारो मारुतस्य मानम्, इत्येवमादयो विषया वर्णिताः ।

अष्टमे पटले सार्धत्रिकोटिनाडीभिरुपेतं मानवशरीरम्, बिन्दुमानम्, लिङ्गच्छिद्राकर्षणेन कुण्डल्या अवस्थानमितीमे विषयाः प्रतिपादिताः ।

नवमे पटले नवार्णवासना दीर्घायुष्योपायः, कुण्डल्या मालाकारताप्रकारः, विभिन्नासु मालासु जपस्य पद्धतिः फलं चैवमादयो विषया निरूपिताः ।

दशमे पटले काकीचञ्चुनाम्नी महामुद्रा, देव्या दशावताराश्च प्रतिपादिताः ।

कामधेनुतन्त्रम्

तन्त्रमिदं चतुर्विंशतिपटलेषु विततं देवदेवीसंवादात्मकं बहूनां तान्त्रिकरहस्यानामावेदकम् । अस्मिन् तन्त्रे पञ्चाशद्वर्णात्मकं तत्त्वम्, मातृकाजपस्य विधिः, मातृकाया युवतीत्वम्, विविधमन्त्राणां जपप्रकारः, मन्त्रस्य जीवत्वसाधनविधिः, बीजध्यानम्, मन्त्रबीजभावना, मन्त्रवर्णध्यानम्, बीजाद् रामादीनामुद्भवः, शिवत्वापादिका योगसाधना, वकारतत्त्वम्, सर्ववर्णभावनासाधिका ककारभावना, वर्णज्ञानाभावे जपस्य वैफल्यम्, जनमोहनं तिलकम्, हृत्तत्त्वम्,

तत्र स्वविद्याभावनम्, मन्त्रविक्रयिणो निन्दा, पञ्चाशद्वर्णसंकेताः, मातृकापूजां विना इष्टविद्याजपाद् हानिः, सन्दीपनी विद्या, तदज्ञाने कृत्स्नस्य कर्मणो नैरर्थक्यम्, मातृकापूजया पुरुषो दिव्यभावने वीरभावने च सम्पन्नो धनी गुणी च जायते, नवतत्त्वयुतस्य मन्त्रस्य जपेन विष्णुतुल्यतालाभः, कामिनीध्यानसम्पुटितबीजोच्चारणात् शिवशक्तिमयत्वलाभः, निद्राभङ्गोपायः, कामिनीध्यानोत्तरं तुरीयकूटोच्चारणाद् विनिद्रतालाभः, शूद्रलिखितपटलस्य जपायोग्यत्वम्, कामधेनुमन्त्रस्तज्जपफलम्, बीजतत्त्वम्, कामिनीतत्त्वम्, ज्योतिस्तत्त्वम्, कामिनीजीवनतत्त्वम्, समर्पणपूर्वकमेव जपानुष्ठानम्, चन्द्रसूर्योपरागे कामिनीजपात् सिद्धिलाभः, सूर्यपर्वचन्द्रपर्वणोर्निरीक्षणस्य कर्तव्यता, एवमादयो विषया वर्णिताः ।

## फेत्कारिणीतन्त्रम्

इदं तन्त्रमेकविंशतिपटलेषु विततं विद्यते । अस्मिन् पञ्चाशद्वर्णात्मकमातृकायाः परमेश्वरीत्वं तत एव च चराचरात्मकस्य सम्पूर्णस्य जगतः प्रादुर्भावः, शान्तिकादिकर्मानुरूपाणि कुण्डानि, स्रुक्प्रभृतीनि होमसाधनानि, प्राणायामस्य विधिः, विविधा अङ्गादिन्यासाः, स्तम्भनोच्चाटनमारणादीनां दारुणकर्मणां मन्त्राः, नानाप्रकारा मुद्राः, विविधाभिचारिककर्मानुरूपा मालाभेदाः, विभिन्नेषु रौद्रकर्मसु जपस्य विधिसंख्याहोमसाधनद्रव्यादयः, विभिन्नाभिचारिककर्मानुष्ठानयोग्यानि श्मशानादीनि स्थलानि, मोहनवशीकरणाद्यनुगुणानि जपादीनि कर्माणि, कुक्कुटेश्वर-मातङ्गी-उच्छिष्टचाण्डालिनी-धूमावती-गृध्रकर्णा-भद्रकाली-श्मशानकालिका-एकजटा-महाकाली-जयदुर्गा-ज्वालामुखी-जातवेदाद्यादीनां नवदुर्गाप्रभृतिदेवानां च ध्यानपूजनादिकम्, लवणमन्त्रः, सिद्धियन्त्रम्, मन्त्रसंस्कारा एवमादयोऽनेके रहस्यात्मकास्तन्त्रविषया हृद्यैरनवद्यैः पद्यैरुपवर्णिताः सन्ति ।

## ज्ञानसंकलिनीतन्त्रम्

अस्मिन् तन्त्रे देवीं प्रति सृष्टेः स्वरूपम्, तस्या उदयप्रलयौ, ब्रह्मज्ञानम्, ततः सृष्ट्यादेरुपरम इत्यादिविषयान् ब्रुवता शिवेन ओङ्कारात् सर्वविद्यानामुद्भवः वेदादिविद्यानां गणिकात्वं तन्त्रविद्यायाः कुलवधूत्वम्, सर्वविद्या-सर्वदेवता-सर्वतीर्थानां च मानवदेह एवावस्थानम्, इडा-पिङ्गला-सुषुम्णारूपाणां गङ्गायमुनासरस्वतीनां सङ्गमस्थानत्वेन मनुष्यदेहस्य तीर्थराजत्वम्, खेचरी मुद्रा, शाम्भवी विद्या, अध्यात्मविद्या, पञ्च भूतानि, पञ्चविंशतिर्गुणाः, मानवदेहात्मनःपिण्डस्य ब्रह्माण्डता, सप्त धातवः आत्मान्तरात्मपरमात्मनां लक्षणानि, मनस एव बन्धमोक्षमूलत्वम्, जीवस्य शिवत्वप्राप्त्युपाय एवमादयो विषया विनिरूपिताः ।

देवीकालोत्तरागमः

एष आगमः परमेश्वरेण पार्वतीं प्रति प्रकाशितः, अस्य प्रधानतया प्रतिपाद्यो विषयः कालोत्तरः। स च—

निर्ममः करुणोपेतः सर्वभूताभयप्रदः।
भजेत् कालोत्तरं देवि मुमुक्षुर्योगतत्परः॥ ५॥

इति पद्येन मुमुक्षुजनभजनीयतया निर्दिष्टः। वृत्तौ चास्य तत्रभवता निरञ्जनसिद्धेन कालोत्तरशब्दः "कालस्य चित्तचलनकालस्य, उत्तरम् उपरिभूतम्" इति व्युत्पत्त्या चेतसो नैश्चल्ये समुद्भूतस्य निर्विकल्पकज्ञानस्य बोधकतया व्याख्यातः।

आगमेऽस्मिन् मोक्षस्य साधनं ज्ञानं निरूपयता परमेश्वरेण चेतसश्चाञ्चल्यं विषयाभिमुखप्रवहमानतारूपं संसारनिदानत्वेन परित्याज्यतया तस्य नैश्चल्यं विषयेभ्योऽपकृष्य ज्ञातव्ये स्वाभिन्ने भगवति शिवे सन्निवेशनात्मक मोक्षहेतुत्वेनार्जनीयतया च—

चित्ते चलति संसारो निश्चले मोक्ष एव च।
तस्माच्चित्तं स्थिरं कुर्यात् प्रज्ञया परया बुधः॥१०॥

× × ×

तदेव जन्मसाफल्यं पाण्डित्यमिदमेव च।
चलद्वायुसमं चित्तं निश्चलं ध्रियते हि यत्॥३७॥

+ × ×

अहमेव परं ब्रह्म जगन्नाथो महेश्वरः।
इति स्यान्निश्चितो मुक्तो बद्धः स्यादन्यथा पुमान्॥५०॥

इत्येवमादिभिः पद्यैः प्रतिपादितम्।

मोक्षसाधनस्याचारस्य वर्णनप्रसङ्गे लौकिकस्य शास्त्रान्तरीयस्य च स्नानजपपूजादेः पितृक्रियातीर्थयात्रादेः काष्ठपाषाणपूजनप्रभृतेः क्षुद्रकर्मणः परित्याज्यत्वम्, मित्रामित्रयोर्लोष्ठकाञ्चनयोः समदर्शित्वस्य, सर्वभूतेषु समत्वभावनस्य, पैशुन्यप्रभृतिदोषाणां निरसनस्य चार्जनीयत्वं चोपदिशता—

पञ्चभूतात्मको देहः शिवस्तत्रैव तिष्ठति।
शिवाद्यवनिपर्यन्तो लोकोऽयं शङ्करात्मकः॥८१॥

इति पद्येन स्वदेह एव शिवसान्निध्यस्य चिन्तनं कृत्स्ने लोके शङ्कररूपतया दर्शनं च मोक्षमूलतया संकेतितम्।

इत्थं दुरवबोधानां महाफलानामैहिकामुष्मिकसिद्धिप्रदानां पर्यन्ते निर्वाणनिर्वर्तकानां बहूनां तान्त्रिकसाधनानां प्रतिपादनपरं प्रस्तुतं संग्रहं तन्त्रविद्यारसिकानां ज्ञानवर्धनाय सर्वसाधारणलोकानां कल्याणाय च सर्वजनसुलभतां नयतो विश्वविद्यालयस्य समग्रः परिवारः शिवां शिवं च प्रति मूर्धानमवनमन् संग्रहस्यास्य व्यापकं प्रसारं कामयत इत्यावेदयति—

वाराणसेयसंस्कृतविश्वविद्यालयः,
वाराणसी।
४।४।७०

श्रीबदरीनाथशुक्लः
अनुसन्धानसंस्थानसंचालकः।



# प्रास्ताविकम्

वाराणसेयसंस्कृतविश्वविद्यालये योगतन्त्रविभागस्थापनानुकालं १९६७ ई० वर्षतः प्रवृत्त-मनुसन्धानप्रकाशनादिकार्यम्। तत्र लुप्तप्रायाणामप्रकाशितानामथ च दुर्लभानां योगतन्त्रग्रन्थानां प्रकाशनमेवेदम्प्रथमतया गृहीतम्। तत्रापि सर्वप्रथममितः प्रायः शतवर्षपूर्वं कलिकातानगरीतो रसिकचन्द्रचट्टोपाध्यायमहोदयेन वंगलिपिमुद्रितास्तन्त्रग्रन्था देवनागराक्षरेषु मुद्रिता भवेयुरिति निश्चयः समजायत। तमनुरुध्य प्रायश्चत्वारिंशत्संख्याका ग्रन्थाः सरस्वतीभवनस्थमातृकाभिः पाठसंशोधनादिपुरस्सरं सज्जीकृताः प्रकाशनाय। तस्य प्रथमस्तन्त्रसंग्रहस्य च द्वितीयोऽयं भागः साम्प्रतमुपहारीक्रियते तन्त्रशास्त्रानुशीलनपरायणेभ्यो मनीषिभ्यः। अत्र वर्तन्ते निर्वाण-तोडल-कामधेनु-फेत्कारिणी-ज्ञानसंकलनीतन्त्राणि पूर्वं वंगलिपिमुद्रितानि। अन्ते च वर्तते कन्नड-लिपिमुद्रितो देवीकालोत्तरागमो निरञ्जनसिद्धविरचितया वृत्त्या तमिललिप्यां मुद्रित-पूर्वया समलङ्कृतः।

अस्मिन् संस्करणे पाठसंशोधने प्रयुक्तानां सरस्वतीभवनस्थमातृकाणां परिचयोऽत्र समुपस्थाप्यते।

**निर्वाणतन्त्रस्य**

क.—२४३८८ संख्याका, १८-२१ पत्रात्मिका १३·५ × ४·४ आकारवती वङ्गलिपि-लिखिता, त्रयोदशपटलात् पञ्चदशपटलपर्यन्ता सम्पूर्णा। अत्र प्रतिपृष्ठं दश पङ्क्तयः, प्रतिपङ्क्ति च ५३ अक्षराणि वर्तन्ते।

ख.—२४७७२ संख्याका, १-३ पत्रात्मिका १२·८ × ४·८ आकारवती वङ्गलिपि-लिखिता अपूर्णा मातृका। अत्र प्रतिपृष्ठमेकादश पङ्क्तयः, प्रतिपङ्क्ति च ५६ अक्षराणि राजन्ते।

ग.—२४८६२ संख्यावती, १-५२ पत्रात्मिका, १२ × १.२ परिमाणवती वङ्गलिपि-लिखिता तालपत्रमयी संपूर्णा सुवाच्या प्राचीना शुद्धा च। अत्र प्रतिपृष्ठं चतस्रः पङ्क्तयः, प्रति-पङ्क्ति च ४२ अक्षराणि सन्ति।

घ.—२६०८८ संख्याका, १४ पत्रात्मिका, १५·५ × ३·६ आकारवती वङ्गलिपि-लिखिता, त्रयोदशपटलात्मिका संपूर्णा। अत्र प्रतिपृष्ठं सप्त पङ्क्तयः, प्रतिपङ्क्ति च ४८ अक्षराणि विद्यन्ते।

ङ.—२६४५५ संख्याका, १-१४ पत्रात्मिका १५ × ४·६ परिमाणवती, वङ्गलिपि-लिखिता, १ १४ पटलात्मिका अपूर्णाऽशुद्धा च। अत्र प्रतिपृष्ठं द्वादश पङ्क्तयः, प्रतिपङ्क्ति च ६० अक्षराणि सन्ति।

च.—वङ्गलिपिमुद्रितं मूलपुस्तकम्।

तोडलतन्त्रस्य

क.—२४४५० संख्याका, १-१६, १ पत्रात्मिका, १०·६ × ४ आकारवती, वङ्गलिपि-लिखिता प्राचीना शुद्धाऽप्यपूर्णा। अत्र प्रतिपृष्ठं षट् पङ्क्तयः, प्रतिपङ्क्ति च ३४ अक्षराणि वर्तन्ते।

ख.— २४६१८ संख्याका, १-१७ पत्रात्मिका १२.८ × ३·८ आकारवती, वङ्गलिपि-लिखिताऽशुद्धिभूयिष्ठा नवीनाऽपूर्णा च। अत्र प्रतिपृष्ठमष्टौ पङ्क्तयः, प्रतिपङ्क्ति च ४६ अक्षराणि विद्यन्ते।

ग.—२४७४३ संख्याका, १-२ पत्रात्मिका, ११.२ × ३.१ आकारवती वङ्गलिपि-लिखिता प्राचीनाऽपूर्णा च। अत्र प्रतिपृष्ठमष्टौ पङ्क्तयः, प्रतिपङ्क्ति च ३४ अक्षराणि सन्ति।

घ.—२६३७६ संख्यायुक्ता १-१७ पत्रात्मिका १४·२ × ५.३ आकारवती, वङ्गलिपि-लिखिता १-१० उल्लासात्मिका शुद्धा प्राचीना च अत्र प्रतिपृष्ठं नव पङ्क्तयः, प्रतिपङ्क्ति च ४६ अक्षराणि सन्ति।

ङ.— २६४११ संख्यावती, १२-२६ पत्रात्मिका, १३.५ × ४.८ आकारका, वङ्गलिपि-लिखिता, जीर्णपत्रात्मिका प्रान्तेषु कीटभक्षिताऽपि प्राचीना शुद्धा च। प्रतिपृष्ठमष्टौ पङ्क्तयः, प्रतिपङ्क्ति च ५४ अक्षराणि सन्त्यत्र।

च.—२६४४० संख्याङ्किता १-४, १-५ पत्रात्मिका, १४.२ × ४.६ आकारयुक्ता, वङ्गलिपिलिखिता नवीनाऽपूर्णा च। अत्र प्रतिपृष्ठमेकादश पङ्क्तयः प्रतिपङ्क्ति च ७४ अक्षराणि सन्ति।

छ.—वङ्गलिपिमुद्रितं पुस्तकम्।

कामधेनुतन्त्रस्य

क.—२४२०७ संख्याचिह्निता, १, ३-७, २१-३६ ४०-४१, ४५-४६ पत्रात्मिका, ६.३×४.१ आकारसंवलिता देवनागराक्षराऽपूर्णाऽशुद्धिबहुला खण्डिता च। प्रतिपृष्ठमष्टौ पङ्क्तयः, प्रतिपङ्क्ति च ३५ अक्षराणि सन्त्यत्र।

ख.—२४६०६ संख्याङ्किता, १-१३ पत्रात्मिका २१.१×५.२ आकारयुक्ता वङ्गलिपि-लिखिता १-१३ पटलपर्यन्ता संपूर्णा सुवाच्या शुद्धा च! अत्र प्रतिपृष्ठं सप्त पङ्क्तयः प्रति-पङ्क्ति च ७६ अक्षराणि सन्ति।

ग.—२५०११ संख्याका, १–१४ पत्रात्मिका १४.५×३.२ आकारवती, वङ्ग-लिपिलिखिता, १–१७ पटलात्मिका, प्राचीनाऽपूर्णाऽतिजीर्णा प्रान्तेषु गलिताऽपि रम्याक्षरा शुद्धा च। अत्र प्रतिपृष्ठं दश पङ्क्तयः, प्रतिपङ्क्ति च ५७ अक्षराणि शोभन्ते।

घ.—२५३३८ संख्याका १–१५, १८, २०–२५ पत्रात्मिका १२.९×४ आकारका वङ्गलिपिलिखिता अपूर्णा। खण्डिता नवीनाऽशुद्धिबहुला च। प्रतिपृष्ठं नवपङ्क्तयः, प्रतिपङ्क्ति ४५ अक्षराणि वर्तन्ते।

ङ—वङ्गलिपिमुद्रितं पुस्तकम्।

फेत्कारिणीतन्त्रस्य

क.—२४८२३ संख्याका, १–६६ पत्रात्मिका, १०.७×४.६ आकारवती, देव-नागराक्षरा, अपूर्णाऽपि सशोधिता शुद्धा च। अत्र प्रतिपृष्ठं दश पङ्क्तयः, प्रतिपङ्क्ति च ४६ अक्षराणि सन्ति।

ख.—२४९७३ संख्याङ्किता, १–५३ पत्रात्मिका १०.५×४.७ आकारसंयुक्ता, देवनागराक्षराऽपूर्णाऽत्यशुद्धा नवीना च। प्रतिपृष्ठं द्वादश पङ्क्तयः, प्रतिपङ्क्ति च २६ अक्षराणि सन्त्यत्र।

ग.—२५१०० संख्यासंवलिता ८० पत्रात्मिका, ९.५×५.२ आकारका, देवनाग-राक्षराऽपूर्णा व्यत्यस्तपत्रात्मिका कीटभक्षिता च। अत्र प्रतिपृष्ठं दश पङ्क्तयः, प्रतिपङ्क्ति च २५ अक्षराणि विद्यन्ते।

घ.—२६३९२ संख्यायुक्ता, ३-६७ पत्रात्मिका, १३.६×५.१ आकारवती वङ्ग-लिपिमयी नवीनाऽपूर्णा खण्डिताऽपि शुद्धा। अत्र प्रतिपृष्ठं सप्त पङ्क्तयः, प्रतिपङ्क्ति च ४५ अक्षराणि सन्ति।

ङ.—वङ्गलिपिमुद्रितं पुस्तकम्।

**ज्ञानसंकलिनीतन्त्रस्य**

अस्य तन्त्रस्य नास्ति कापि मातृका सरस्वतीभवनपुस्तकालय इत्यस्य वङ्गलिपिमुद्रितं स्वरूपमेव यथावदत्र स्थापितम् ।

**देवीकालोत्तरागमस्य**

हुबलीनगरतः कर्णाटकलिप्यां वातुलशुद्धाख्यतन्त्रम्, सूक्ष्मतन्त्रम्, पारमेश्वरतन्त्रम्, देवीकालोत्तरागमश्चेति ग्रन्थचतुष्टयं मुद्रितम् । अस्यागमस्य निरञ्जनसिद्धविरचिता वृत्तिश्च मुद्रिताऽऽसीद् ग्रन्थाक्षरेषु तस्यागमग्रन्थस्यात्र प्रकाशनं तत्साहाय्येनैव संजातम् ।

एवमत्र षड्ग्रन्थात्मकस्तन्त्रसंग्रहस्य द्वितीयोऽयं भागोऽद्य प्रकाश्यते । शिष्टास्तन्त्र-ग्रन्था अपि देवनागरलिपिषु प्रकाशिता अस्मिन्नेव संग्रहे यथावसरं प्रकाशिताः स्युरिति प्रयत्यतेऽत्र विषये योगतन्त्रविभागेनेति साम्प्रतमेतावदेवोच्यते ॥

विदुषां वशंवदः—
गोपीनाथकविराजशर्मदेवः
योगतन्त्रविभागाध्यक्षः
वाराणसेयसंस्कृतविश्वविद्यालयस्य ।

सिगरा २A, वाराणसी
चैत्रशुक्लप्रतिपत्, सं० २०२७
७–४–७०



# विषयानुक्रमणिका



## निर्वाणतन्त्रस्य

—०—

## तोडलतन्त्रस्य

—०—

## कामधेनुतन्त्रस्य

—०—

## फेत्कारिणीतन्त्रस्य

---

## ज्ञानसंकलिनीतन्त्रस्य

—–०–—

## देवीकालोत्तरागमस्य

## श्लोकार्धानुक्रमणी



—०—

ब्रजवल्लभ द्विवेदी
१५-११-७२

# निर्वाणतन्त्रम्

ॐ नमः परमदेवतायै ॥

कैलासपर्वते रम्ये नानारत्नोपशोभिते ।
विपरीतरतासक्ता चण्डी पप्रच्छ शङ्करम् ॥ १ ॥

श्रीचण्डिका उवाच—

निराकारं निर्गुणञ्च स्तुतिनिन्दाविवर्जितम् ।
सुनित्यं सर्वकर्तारं वर्णातीतं सुनिश्चलम् ॥ २ ॥
संज्ञाविरहितं शान्तं किमाकारं प्रतिष्ठितम् ।
तस्मादुत्पत्तिर्देवेश किमाकारेण जायते ॥ ३ ॥

श्रीशङ्कर उवाच—

शृणु देवि परं तत्त्वं वर्णातीताञ्च वैखरीम् ।
गुणालयां गुणातीतां स्तुतिनिन्दाविवर्जिताम् ॥ ४ ॥
आकाररहितां नित्यां रोगशोकादिवर्जिताम् ।
पूजायोगञ्च देवेशि स्वयमुत्पत्तिकारणम् ॥ ५ ॥
येन रूपेण ब्रह्माण्डा जायन्ते शृणु तत् शिवे ।
आकाशाज्जायते वायुर्वायोरुत्पद्यते रविः ॥ ६ ॥
रवेरुत्पद्यते तोयं तोयादुत्पद्यते मही ।
पञ्चभूतैश्च ब्रह्माण्डा भवेयुः पर्वतात्मजे ॥ ७ ॥
ब्रह्माण्डस्थापनार्थाय कूर्मपृष्ठे ह्यनन्तकः ।
तन्मूर्ध्नि वालुकाकारा ब्रह्माण्डा बहवः स्थिताः ॥ ८ ॥
कारुण्यवारिमध्ये तु कूर्मश्चरति नित्यशः ।
अहमेव त्रिशूलेन पालयामि पुनः पुनः ॥ ९ ॥

---

१. तस्माद् योगादिवर्जिताम् । पूजायागार्थं (?) देवेशि स्वयमुत्पत्तिकारिणी ॥—ङ. ।

श्रीचण्डिका उवाच—

किमाकारन्तु ब्रह्माण्डं तन्मे ब्रूहि महेश्वर ।
सृष्टिप्रकारं तन्मध्ये किमाकारं हि तत्त्ववित् ॥१०॥

श्रीशङ्कर उवाच—

जन्तोराकारं ब्रह्माण्डं नानाविग्रहं पार्वति ।
ब्रह्माण्डं विग्रहं प्रोक्तं स्थूलक्षुद्रादिकं हि तत् ॥११॥
मेरु[1]ः पर्वतस्तन्मध्ये तथा सप्तकुलाचलाः ।
मूलादिमस्तकान्तं वै सुमेरुर्नाम पर्वतः ॥१२॥
स्थितं मेरोरधोभागे द्व्यङ्गुल्याश्चोर्ध्वदेशतः ।
भूर्लोकादि महेशानि सप्तस्वर्गं क्रमेण हि ॥१३॥
द्व्यङ्गुल्याः सप्तपातालास्तिष्ठन्ति परमेश्वरि ।
सत्यलोके निराकारा महाज्योतिःस्वरूपिणी ॥१४॥
माययाच्छादितात्मा(नं ? सौ) चणकाकाररूपिणी ।
हस्तपादादिरहिता चन्द्रसूर्याग्निरूपिणी ॥१५॥
मायावल्कलसंत्यज्या द्विधा भिन्ना यदोन्मुखी ।
शिवशक्तिविभागेन जायते सृष्टिकल्पना ॥
प्रथमे जायते पुत्रो ब्रह्मसंज्ञो हि पार्वति ॥१६॥

श्रीकालिका उवाच—

शृणु पुत्र [2]महावीर विवाहं कुरु यत्नतः ।
[3]एतच्छ्रुत्वा ततो ब्रह्मा उवाच सादरं प्रिये ॥१७॥
त्वां विना जननी नास्ति शक्तिं मे देहि सुन्दरीम् ।
तच्छ्रुत्वा जगतां माता स्वदेहान्मोहिनीं ददौ ॥१८॥

---

१. मेरुस्तन्मूलके देवेशि—ङ. ।
२. महाधीर—ङ. ।
३. एतच्छ्रुत्वा...उवाच कालिकां प्रति—ङ. ।

द्वितीया सा महाविद्या सावित्री परमा कला ।
अस्याः सङ्गं समासाद्य वेदविस्तारणं कुरु ॥१९॥
अनायासं सृष्टिकर्ता भव त्वं महिमण्डले ।
द्वितीये जायते पुत्रो विष्णुः सत्त्वगुणाश्रयः ॥२०॥
शृणु पुत्र महावीर[1] विवाहं कुरु यत्नतः ।
तव दर्शनमात्रेण निष्कामी जायते पुमान् ॥२१॥
कथं करोमि हे मातर्मोहिनीं[2] देहि मे शिवे ।
देहाच्छक्तिश्च निर्गत्य ददौ तस्मै च कालिका ॥२२॥
वैष्णवीं तां महाविद्यां श्रीविद्यां परमेश्वरीम् ।
तामाश्रित्य महाविष्णुः पालयत्यखिलं जगत् ॥२३॥
तृतीये जायते पुत्रो महायोगी सदाशिवः ।
तं दृष्ट्वा सा महाकाली तुष्टियुक्ताऽभवन्मुदा ॥२४॥
शृणु पुत्र महायोगिन् मद्वाक्यं हृदये कुरु ।
त्वां विना पुरुषः को वा मां विना कापि मोहिनी ॥
अतस्त्वं परमानन्द विवाहं कुरु मे शिव ॥२५॥

श्रीशिव उवाच—

यदुक्तं मयि हे मातस्त्वां विना नास्ति मोहिनी ।
सत्यमेतज्जगन्मातर्मां विना पुरुषो न च ॥२६॥
अस्मिन् देहे संस्थिते च न करोमि विवाहकम् ।
कुरु देहान्तरं मातः करुणा यदि वर्तते ॥२७॥
तत्क्षणे सा महाकाली ददौ भुवनसुन्दरीम् ।
आदिभूता यथा काली तथा भुवनसुन्दरी ॥२८॥
तामाश्रित्य महायोगी संहरत्यखिलं जगत् ।
श(म्भो ? म्भु)रष्टविभागश्च शक्तिश्चाष्टविधा भवेत् ॥२९॥

---

१. महाधीर—ङ. ।
२. विवाहं वद सुन्दरि—ङ. ।

कालिकाद्या महाविद्या ह्यनेन परमेश्वरि ।
इति ते कथितं कान्ते यथा ब्रह्मनिरूपणम् ॥
गोपनीयं प्रयत्नेन विद्योत्पत्तिर्यथा प्रिये ॥३०॥

इति निर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे चण्डिकाशङ्करसंवादे
परब्रह्मनिरूपणं नाम प्रथमः पटलः ॥

---

श्रीचण्डिका उवाच—

त्वत्प्रसादाच्छ्रुतं नाथ परब्रह्मनिरूपणम् ।
इदानीं श्रोतुमिच्छामि क्षितौ सृष्टिर्यथा भवेत् ॥१॥

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि यथा सृष्टिः प्रजायते ।
सत्यलोके महाकाली महारुद्रेण संपुटा ॥२॥
चणकाकृतिविस्तारा चन्द्रसूर्यादिरूपिका ।
अनादिरूपसंयुक्ता तदंशा जीवसंज्ञकाः ॥३॥
ज्वलदग्नेर्यथा देवि स्फुरन्ति विस्फुलिङ्गकाः ।
तस्याश्च्युतं परं विन्दु यदा भूमौ पतत्यपि ॥४॥
तदैव सहसा देवि शक्त्या युक्तो भवत्यपि ।
स्थावरादिषु कीटेषु पशुपक्षिषु शैलजे ॥५॥
चतुरशीतिलक्षं वै जन्म चाप्नोति सोऽव्ययः ।
ततो लभेत् परेशानि मानुषीं दुर्लभां तनुम् ॥६॥
यतो मानुषदेहस्तु धर्माधर्माधिपश्च सः ।
ततोऽपि लभते जन्म पुनर्मृत्युमवाप्नुयात् ॥७॥
जायन्ते च म्रियन्ते च कर्मपाशनियन्त्रिताः ।
चतुरशीति(सहस्रेषु ? लक्षेषु) नानायोनिषु शैलजे ॥८॥

श्रीचण्डिका उवाच—

कथं वा लभते जन्म कथं मृत्युर्भवेत् प्रभो ।
तत्प्रकारं महादेव श्रोतुमिच्छामि तत्त्वतः ॥९॥

श्रीशङ्कर उवाच—

इह यत् क्रियते कर्म तत् परत्रोपभुज्यते ।
जीवस्तृणजलौकेव देहाद् देहान्तरं व्रजेत् ॥१०॥
संप्राप्य चोत्तमं देहं देहं त्यजति पूर्वकम् ।
इति श्रुत्वा च सा चण्डी पप्रच्छ परमेश्वरम् ॥११॥

श्रीचण्डिका उवाच—

प्राप्तं चोत्तरदेहन्तु पिण्डदानादिकं कथम् ॥१२॥

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि मायादेहं तदैव हि ।
मायादेहं परेशानि वायुरूपेण[1] चान्यथा ॥१३॥
वायुरूपो यतो देह आकाशस्थो निराश्रयः ।
ततश्च पिण्डदानेन वायुः स्थिरतरो भवेत् ॥१४॥

प्रथमे मस्तकं देवि जायते च क्रमावधि ।
ततो यमपुरं गत्वा धर्माधर्मादिकञ्च यत् ॥१५॥

तद्भुक्त्वा चाप(रे?रं) किञ्चिद् यदा कर्म न विद्यते ।
यदाज्ञया तदा जीवः प्रययौ ब्रह्मशासनम् ॥१६॥
तस्मात् कर्मानुसारेण यदि स्याद् दुर्लभा[2] तनुः ।
महाविद्यां भाग्यवशाद् यदि प्राप्नोति सद्गुरुम् ॥१७॥

तत्त्वज्ञानं महेशानि यदि भाग्यवशाल्लभेत् ।
तदैव परमं मोक्षं यावद् ब्रह्माण्डं तिष्ठति ॥१८॥
ब्राह्मणस्य महामोक्षं सायुज्यं क्षत्रियस्य च ।
सारूप्यं चोरुजातस्य शूद्रस्य सहलौकिकम् ॥१९॥

---

१. वायुरूपो न चान्यथा—ग. ङ. ।
२. दुर्लभां तनुम्—क. ख. ङ. ।

महाविद्याप्रसादेन पुनरागमनं नहि ।
बृहद्ब्रह्माण्डनाशे तु सर्वमोक्षं सदाशिवे[1] ॥
तदा सर्वस्य निर्वाणं भवत्येव न संशयः ॥२०॥

श्रीचण्डिका उवाच—

बृहद्ब्रह्माण्डबाह्ये तु किं पुनः परमेश्वर ।
तत्सर्वं श्रोतुमिच्छामि यदि स्नेहोऽस्ति मां प्रति ॥२१॥

श्रीशिव उवाच—

ब्रह्माण्डस्य बाह्यदेशे[2] ब्रह्माण्डा बहवः स्थिताः ।
अनन्तस्य प्रमाणन्तु किं वक्तुं शक्यते मया ॥
(स एव ? तयैव) निर्मितं सर्वं सैव सर्वं महेश्वरि ॥२२॥

इति निर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे श्रीशङ्करचण्डिकासंवादे
द्वितीयः पटलः ॥

---

श्रीशिव उवाच—

प्रकृत्या जायते पुंसां प्रकृत्या सृज्यते जगत् ।
तोयात्तु बुद्बुदं देवि यथा तोये विलीयते ॥१॥
प्रकृत्या जायते सर्वं पुनस्तस्यां प्रलीयते ।
तस्मात् प्रकृतियोगेन जायते नान्यथा क्वचित् ॥२॥
ब्रह्मा विष्णुः शिवो देवि प्रकृत्या जायते ध्रुवम् ।
तथा प्रलयकाले तु प्रकृत्या लुप्यते पुनः ॥३॥
शाक्ता एव द्विजाः सर्वे न शैवा न च वैष्णवाः ।
उपासन्ते यतो देवीं गायत्रीं परमाक्षरीम् ॥४॥
गायत्रीं शृणु चार्वङ्गि चतुर्वेदप्रपूजिताम् ।
वेदमातेति विख्यातां त्रिवर्गफलदायिनीम् ॥५॥

---

१. यदा शिव—क. ख. घ. ।
२. बाह्यदेहो—क. ख. घ. ।

[1]हालाहलं समुद्धृत्य नाभ्यक्षरं समुद्धरेत् ।
वामकर्णसमायुक्तं पुनर्नाभिं समुद्धरेत् ॥६॥
कर्णयुक्तं मूर्ध्नि रेफं ततश्च सुरवन्दिते ।
वारुणं रसनायुक्तं चन्द्रबीजं ततः परम् ॥७॥
शान्तयुक्तं स्वर्गयुतं चैवं व्याहृतिमुद्धरेत् ।
तत्पदञ्च समुद्धृत्य सवितुस्तदनन्तरम् ॥८॥
वरेण्यमिति चोच्चार्य भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् प्रणवं तदनन्तरम् ॥९॥
इति जप्त्वा महेशानि साक्षान्नारायणो भवेत् ।
धिनयोर्मध्यभागे च यकारद्वयमेव च ॥१०॥
अत एव महादेवि अनन्तश्रुतिरेव च ।
इति जप्त्वा महेशानि मुक्तो भवति तत्क्षणात् ॥११॥
[2]अन्त्ययकारयोः स्थाने यकारं इति यः पठेत् ।
स चण्डाल इति ख्यातो ब्रह्महत्या दिने दिने ॥१२॥
अत एव महेशानि तव स्नेहात् प्रकाशितम् ।
सावित्री परमा विद्या त्रैलोक्येषु च दुर्लभा ॥१३॥
अस्या ग्रहणमात्रेण भूब्रह्मा नात्र संशयः ।
षडङ्गन्यासमन्त्रं यत्तच्छृणुष्व प्रियंवदे ॥१४॥
प्रणवद्वयञ्च हृत्पद्मे भूःकारं शीर्षदेशके ।
भुवः शिखायां स्वःकारं कवचे तु न्यसेत् सुधीः ॥१५॥
नेत्रद्वयोर्भूर्भुवः स्वः स्वःकारं करयुग्मके ।
नमः स्वाहा वषट् कुर्यात् वौषट् फट् क्रमतो न्यसेत् ॥
ध्यानं शृणु वरारोहे यथा ध्यात्वा यजेन्नरः ॥१६॥

---

१. 'हालाहलं' इत्यतः 'तत्क्षणात्' पर्यन्तं नास्ति—ङ. ।
२. 'अन्त्ययकारयोः' इत्यतः 'वरानने' पर्यन्तं नास्ति—ङ. ।

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता ॥१७॥
आदित्यमण्डलान्तःस्था ब्रह्मलोकगतान्तरा ।
अक्षसूत्रधरा देवी पद्मासनगता तथा ॥१८॥
ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि
प्रियं देवानामनाधृष्टं देवयजनमसि ॥१९॥
गायत्री चैकपदी द्विपदी त्रिपदी चतुष्पद्यपि ।
नमस्ते तुरीयाय दर्शनाय पदाय परोरजसे ॥२०॥
एवं यजेत तां देवीं गायत्रीं परमाक्षरीम् ।
पुनर्ध्यात्वा यन्त्रपीठे पुष्पं दद्याद् वरानने ॥२१॥
आदौ त्रिकोणं विन्यस्य षट्कोणं तद्बहिर्न्यसेत् ।
वृत्तं चाष्टदलं पद्मं तद्बहिश्चतुरस्रकम् ॥२२॥
चतुर्द्वारसमायुक्तं सावित्रीयन्त्रमीरितम् ।
जीवन्यासादिकं कृत्वा पूजयेत्तां त्रिवर्गदाम् ॥२३॥
हालाहलादिकं मन्त्रं समस्तं परमेश्वरि ।
समुच्चार्य वदेत् पाद्यं सावित्रीं ङेयुतां ततः ॥२४॥
त्यागात्मकं पदं पश्चात् यथाविभवविस्तरैः ।
पूजयेद्बहुयत्नेन चान्यथा ब्राह्मणाच्च्युतः १ ॥२५॥
द्रव्याभावे वरारोहे पाद्याद्यैरुदकात्मकैः ।
पूजयित्वा जपेद् देवीं गायत्रीं परमाक्षरीम् ॥२६॥
दशभिर्जन्मजनितं शतेन च पुरा कृतम् ।
त्रियुगन्तु सहस्रेण गायत्री हन्ति पातकम् ॥२७॥

---

१. 'आदौ त्रिकोणं' इत्यतः 'ततः परं' पर्यन्तं—नास्ति—ङ. ।

महेशवदनोत्पन्ना विष्णोर्हृदयसंस्थिता ।
ब्रह्मणा समनुज्ञाता गच्छ देवि यथेच्छया ॥२८॥

इति मन्त्रं समुच्चार्य देव्या वामकरे बुधः ।
समर्पयेदपि फलं ततः स्तोत्रादिकं पठेत् ॥२९॥

विधिवल्लक्षजापेन पुरश्चरणमीरितम् ।
तद्दशांशं हुनेत् पश्चात् पुरश्चरणसिद्धये ॥३०॥

होमस्य तद्दशांशेन तर्पणं तदनन्तरम् ।
तर्पणस्य दशांशेन अभिषेकं ततः परम् ॥३१॥

[1]अभिषेकदशांशैकं कुर्याद् ब्राह्मणभोजनम् ।
ततः सिद्धा भवेद् देवी त्रिवर्गफलसाधिनी ॥३२॥

माहात्म्यं चास्य मन्त्रस्य चतुर्वेदेन भापितम् ।
आपोमार्जनमन्त्रस्य प्रकारं शृणु यत्नतः ॥३३॥

भूमौ शिरसि चाकाशे आकाशे भुवि मस्तके ।
मूर्ध्नि भूमौ तथाकाशे यजुर्वेदे सुरेश्वरि ॥३४॥

सामाथर्वे त्विदं देवि ऋग्वेदे शृणु शैलजे ।
शून्ये शिरसि चावन्यां भूमौ शून्ये शिरे तथा ॥३५॥

भूमौ शून्ये तथा मूर्ध्नि चापोमार्जनमाचरेत् ।
आपोहिष्ठेति मन्त्रेण अष्टाक्षरपदेन तु ॥३६॥

मार्जनं तत्क्रमेणैव सर्वपापप्रणाशनम् ।
व्यक्तिक्रमेण चार्वङ्गि ब्रह्महत्या पदे पदे ॥३७॥

अत एव क्रमं सर्वं तव स्नेहात् प्रकाशितम् ।
स्तुतिं च कवचं देवि पठित्वा प्रणमेत् सुधीः ॥३८॥

---

१. 'अभिषेकदशांशैकं' इत्यतः 'प्रणमेत् सुधीः' पर्यन्तं नास्ति–ङ. ।

श्रीदेवी उवाच—

तुरीयधामे यो देवः परमात्मा स एव हि।
शिरःपद्मे स्थिते बाह्ये नमस्कारः कथं भवेत् ॥३९॥

श्रीशिव उवाच—

शिरःपद्मे महादेवस्तथैव परमो गुरुः।
तत्समो नास्ति देवेशि पूज्यो हि भुवनत्रये ॥४०॥
तद्रूपं चिन्तयेन्मन्त्री बाह्ये गुरुचतुष्टयम्।
तदंशा भावसम्भूता ये चान्ये गुरवो जनाः ॥४१॥
तदैव ब्राह्मणाः सर्वे चांशावतारसंस्थिताः।
यदैव बाह्ये चैतांश्च प्रत्यक्षे भावयेत्तदा ॥४२॥
सहस्रारे महापद्मे तदा चिन्तां विवर्जयेत्।
प्रत्यक्षे दर्शने देवि बाह्ये तद्ब्रह्म चिन्तयेत् ॥४३॥
नमस्कारादिकं देवि कुर्यात् साधकसत्तमः।
एभ्यो दर्शनमात्रेण नमस्कारादिकं चरेत् ॥४४॥
न कुर्याद् यदि मोहेन स भवेदापदाश्रयः।
ब्राह्मणादीन् समालोक्य ब्रह्मचारी यतित्रयम् ॥४५॥
दृष्टिमात्रेण गिरिजे प्रणमेद् दण्डवद् भुवि।
महापातकयुक्तोऽपि मुक्तो भवति नान्यथा ॥४६॥
न कुर्याद् यदि मोहेन महापातकवान् भवेत्।
रक्तवस्त्रं समालोक्य तथा भस्माङ्गभूषितम् ॥४७॥
दण्डहस्तं त्रिशूलं च दृष्ट्वा प्रदक्षिणत्रयम्।
प्रकुर्यात् साधकश्रेष्ठश्चान्यथा पातकी भवेत् ॥४८॥

इति निर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे श्रीशङ्करचण्डिकासंवादे तृतीयः पटलः ॥

———

श्रीचण्डिका उवाच--

संन्यासं कीदृशं नाथ अवधूतश्च कीदृशः ।
कीदृशो वा ब्रह्मचारी गृहस्थो वाथ कीदृशः ॥१॥

श्रीशिव उवाच—

दिव्यप्रकाशिकां मूर्त्तिं चिन्तयेद् दण्डधारिणीम् ।
वीरस्य मूर्त्तिं देवेशि सदा भस्माङ्गभूषणाम् ॥२॥

कौलिकस्य गृहस्थस्य मूर्त्तिं तद्ब्रह्मचारिणः ।
गृहस्थस्य दिव्यमूर्त्तिं चन्दनादिविभूषिताम् ॥३॥

सर्वेषां पितृरूपोऽसौ गृहस्थः साधुरूपकः ।
शृणु देवि प्रवक्ष्यामि बृहद्ब्रह्माण्डलक्षणम् ॥४॥

मेरुपर्वततन्मध्ये सर्वदेवाश्रयः प्रिये ।
महाधीरा नदी तत्र मध्यदेशे सदा स्थिता ॥५॥

सुमेरोश्चोर्ध्वदेशे तु सत्यलोकं वरानने ।
अधोभागे महेशानि प्रतिष्ठति रसातलम् ॥६॥

एवं क्रमे मेरुमध्ये भुवनानि चतुर्दश ।
पातालसप्तकं चोर्ध्वे ब्रह्मपद्मं महेश्वरि ॥७॥

अधोवक्त्रं हि तत्पद्मं धरामध्ये चतुर्दलम् ।
पद्ममध्ये बीजकोषे क्षितिचक्रं मनोहरम् ॥८॥

वलयाकाररूपेण समुद्राः सप्त संस्थिताः ।
जम्बुद्वीपं मध्यदेशे चतुष्कोणं मनोहरम् ॥९॥

त्रिकोणं मदनागारं कन्दर्पश्चाधिदेवता ।
ऐन्द्ररूपं हि लंबीजं गजेन्द्रवाहनं शिवे ॥१०॥

त्रिकोणे मदनागारे लिङ्गरूपी महेश्वरः ।
मायाशक्तिर्महेशानि भुजगाकाररूपिणी ॥११॥

तयैव वेष्टितं लिङ्गं सार्धत्रिवलयाकृति ।
लिङ्गच्छिद्रं तद्वक्त्रेण समाच्छाद्य स्थिता सदा ॥१२॥
ऐन्द्रबीजं वरारोहे लिङ्गस्य वामदेशके ।
सुसिद्धं ब्रह्मसदनं नादोपरि सुसुन्दरम् ॥१३॥
तत्रैव निवसेद् ब्रह्मा सृष्टिकर्ता प्रजापतिः ।
वामभागे च सावित्री वेदमाता सुरेश्वरी ॥१४॥
तस्याः प्रसादमासाद्य सृष्टिं वितनुते सदा ।
यद्रूपं ब्रह्मसदनं लक्षयोजनविस्तृतम् ॥१५॥
तत्सर्वं परमेशानि ऋग्वेदाख्यं मयोदितम् ।
त्रिकोणे परमेशानि द्विषष्टितमकोष्ठकाः ॥१६॥
तदेव पर्वतं प्रोक्तं सर्वदेवाग्रजं हि तत् ।
त्रिकोणमध्ये तद्वाह्ये पश्चात् पूर्वं वरानने ॥१७॥
स्थावरं पर्वतं पश्य. कीटं पशुमनुत्तमम् ।
खगं नरादिकं देवि नास्ति किं पृथिवीतले ॥१८॥
त्रिकोणवाह्ये गिरिजे पर्वतं बहुरूपकम् ।
नीलाचलं मन्दरं च पर्वतं चन्द्रशेखरम् ॥१९॥
हिमालयं सुवेलं च मलयं भस्मपर्वतम् ।
चतुष्कोणे वसेद् देवि एतत् सप्तकुलाचलम् ॥२०॥
एतेषां शिखराज्जातं पर्वतं[1] बहुरूपकम् ।
नानादेवालयो देवि तथैव दानवालयम् ॥२१॥
तृणगुल्मलतालक्षां नानारूपाणि तत्र वै ।
जायन्ते च म्रियन्ते च पूर्वोक्तेनैव वर्त्मना ॥२२॥

इति निर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे हरगौरीसंवादे
योगविवरणं नाम चतुर्थः पटलः ॥

---

१. पर्वताः–ङ. ।

श्रीशिव उवाच—

एतत् पद्मस्योर्ध्वदेशे भीमाख्यं पङ्कजं शुभम् ।
पत्रषट्कं तथा वृत्तं चतुर्द्वारविभूषितम् ॥१॥

पद्ममध्ये राजकोषे भुवर्लोकं मनोहरम्
सिन्दूरसदृशं रक्तं वर्णेन शोभितं सदा ॥२॥

सिन्दूराभरक्ताभ्रेण निर्मितं चक्रपाणिना ।
तस्योर्ध्वं निवसेद् विष्णुः श्रीर्वाणी वामदक्षिणे ॥३॥

ब्रह्मणा सृज्यते लोकः पाल्यते चक्रपाणिना ।
वैकुण्ठं नाम तत् स्वर्गं नानादेवालयं हि तत् ॥४॥

वैकुण्ठस्य दक्षभागे गोलोकं सर्वमोहनम् ।
तत्रैव राधिका देवी द्विभुजो मुरलीधरः ॥५॥

नारदाद्यैर्मुनिगणैः शोभितं वेदपारगैः ।
वैकुण्ठसदृशं स्थानं नास्ति ज्ञाने च मामके ॥६॥

अत्र मध्ये तथा बाह्ये ज्योतिषं परिपश्यति ।
नानाभोगयुताः सर्वे नानारत्नेन भूषिताः ॥७॥

इन्द्राद्या[1] देवताः सर्वे यथा सर्वं प्रपश्यति ।
तथैव भूमिगाः सर्वे तिष्ठन्ति स्तुतिहेतवे ॥८॥

महासत्त्वमयं लोकं वेदबाहुविराजितम् ।
पीताम्बरं शान्तमूर्त्तिं वनमालाविभूषितम् ॥९॥

एवं भक्तजनं सर्वं वैकुण्ठे चोपशोभितम् ।
विष्णुशब्दं विष्णुज्ञानं वैष्णवं विष्णुरूपकम् ॥१०॥

विष्णुगानं विना नास्ति वैकुण्ठे परमेश्वरि ।
यद्रूपं धाम गोलोकं तद्रूपं नास्ति मामके ॥११॥

---

१. इन्द्रादिदेवाः सकलास्तिष्ठन्ति स्तुतिहेतवे–ङ. ।

ज्ञाने वा चक्षुपि किं वा ध्यानयोगे न विद्यते ।
शुद्धसत्त्वमयं देवि नानावेदेन[1] शोभितम् ॥१२॥

तत्रैव भाति कैलासस्तत्रैव ब्रह्मणः पुरम् ।
वैकुण्ठनगरं तत्र तत्रैव रविकालयम् ॥१३॥

चन्द्रालयं हि तत्रैव कन्दर्पनिलयं प्रिये ।
सर्वं देवालयं तत्र देवकन्यादिशोभितम् ॥१४॥

मध्यदेशे गोलोकाख्यं श्रीविष्णोर्भोगमन्दिरम् ।
श्रीविष्णोस्तत्स्वरूपस्य यत्स्थानं चित्तमोहनम् ॥१५॥

तस्य स्थानस्य माहात्म्यं किं मया कथ्यतेऽधुना ।
यत्रैव सततं भाति द्विभुजो मुरलीधरः ॥१६॥

निराकारो महाविष्णुः साकारोऽपि क्षणे क्षणे ।
यदा साकाररूपोऽसौ तदैव मुरलीधरः ॥१७॥

तदा सत्त्वमयो विष्णुर्भुवनं पाति निश्चयम् ।
वैष्णवस्य महामोक्षो यत्रैव परमेश्वरि ॥१८॥

इति स्थानस्य माहात्म्यं संक्षेपेण मयोदितम् ।
विस्तारेण[2] च शक्नोमि जन्मान्तरशतेन च ॥१९॥

बीजकोपस्य बाह्ये तु वेष्टितं तोयमण्डलम् ।
प्रमाणं सुन्दरं तोयं यदा क्षीरोदसागरम् ॥२०॥

धूम्रस्य ज्योतिषाकारं कोटिचन्द्रसमद्युतिम् ।
वलयाकाररूपेण सुशुभ्रं तोयमण्डलम् ॥२१॥

गङ्गादिसरितः सर्वास्तत्रैव भान्ति सुन्दरि ।
इन्द्रादिदेवताः सर्वाः स्तूयमाना निरन्तरम् ॥२२॥

---

१. नानादेवेन–ङ. ।

२. विस्तारे न च शक्नोमि–ग. ङ. ।

गन्धर्वयक्षनागादि कुष्माण्डा भैरवास्तथा ।
नानासुखविशेषेण सदा चैकाग्रचेतसः ॥२३॥

विष्णुगानं प्रकुर्वन्ति स्तुतिभक्तिपरायणाः ।
वेदगानं प्रकुर्वन्ति चतुर्वक्त्रेण वेधसा ॥२४॥

मालवादि च षड्रागाः षट्त्रिंशद्रागिणी तथा ।
वेदगानेन भाषन्ते मूर्त्तिमन्तः सदैव हि ॥२५॥

मालवेनैव रागेण सामगानं सदा प्रिये ।
मल्लारेण सदाऽथर्वं वसन्तेन तथा पुनः ॥२६॥

हिल्लोलेन यजुःपाठं सदा कुर्वीत वेधसा ।
कर्णाटेनैव ऋग्वेदं श्रीरागेण तथा शिवे ॥२७॥

निर्द्दिष्टपाठमेतत्तु अनिर्द्दिष्टमतः परम् ।
तत्रैव रागा वर्तन्ते सहस्राणि च षोडश ॥२८॥

तत्रैव भान्ति तासां च सहस्राणि च षोडश ।
मुरारेर्मुरलीगानाद् जायन्ते सर्वतालकाः ॥२९॥

तेन तालेन रागेण सदा गायन्ति वेधसः ।
तद्रागस्य विभागं हि कुर्वन्ति मुनयो जनाः ॥३०॥

वसन्ताद्याश्च ऋतवस्तिष्ठन्ति तत्र सन्ततम् ।
नानाऋतुप्रसूनेन भूषितो मुरलीधरः ॥३१॥

तत्रैव राधिका देवी नानासुखविलासिनी ।
वदन्ती मुरलीगानं कुरु कान्त प्रमोहणम् ॥३२॥
येन शब्देन कामस्य उत्पत्तिर्जायते सदा ।
तद्रागं चैव तत्तालं कुरु गानं प्रयत्नतः ॥३३॥

एवमानन्दसंयुक्ता महावेशविलासिनी ।
वामभागे सदा भाति राधिका भक्तवत्सला ॥
प्रार्थनैकां प्रकुर्वीत राधिका भक्तिसंयुता ॥३४॥

श्रीराधिका उवाच—

तव भक्तियुता मर्त्यास्तथैव भक्तिसंयुताः ।
गोलोकस्थं महाविष्णुं द्विभुजं मुरलीधरम् ॥३५॥
सदानन्दयुतं देवं मम सङ्गे विराजितम् ।
एवं ध्यायति यो मर्त्यस्तस्योपायं तु कीदृशम् ॥
तद्वदस्व विशेषेण यद्यहं तव वल्लभा ॥३६॥

श्रीभगवान् उवाच—

ये यथा मां भजन्त्येव तेन मार्गेण सद्गतिम् ।
दास्यामि शृणु चार्वङ्गि सदा त्वं भक्तवत्सला ॥३७॥
आदौ राधां ततः कृष्णं जपन्ति ये च मानवाः ।
तेषां च सद्गतिं चात्र दास्यामि नात्र संशयः ॥३८॥
गुरुणा भावमार्गेण मन्त्रमार्गेण चैव हि ।
ये जना मां भजन्त्येव ते नरा मत्समाः सदा ॥३९॥
या नारी मामभेदेन भजते पुरुषं सदा ।
त्वत्समा सा सदा नारी जायते नात्र संशयः ॥४०॥
भक्त्या वाप्यथवाऽभक्त्या जपन्ति युगलं यदि ।
तव भक्त्या प्रदास्यामि सद्गतिं शृणु राधिके ॥४१॥
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं हि राधिके ।
मद्भक्ता नैव गच्छन्ति कदाचिद्यममन्दिरम् ॥४२॥
इति श्रुत्वा च सा देवी राधिका प्रेमवत्सला ।
चाङ्गे शेते महाविष्णोः कामभावेन पीडिता ॥
विष्णुलोकमिदं देवि चापरं शृणु यत्नतः ॥४३॥

इति निर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे चण्डिकाशङ्करसंवादे
पञ्चमः पटलः ॥

———

श्रीशङ्कर उवाच—

एतत्पद्मस्योर्ध्वदेशे महापद्मं सुदुर्लभम् ।
दशपत्रं नीलवर्णं सजलं व्योमरूपकम् ॥
डादिफान्तैः सचन्द्रैश्च पङ्कजैश्चातिशोभितम् ॥१॥

तन्मध्ये बीजकोषे निवसति सततं वह्निबीजं सुसिद्धम् ।
बाह्ये तत्त्रैपुराख्यं नवतपननिभं स्वस्तिकं तत्त्रिभागम् ॥२॥

स्वर्लोकाख्यमिदं देवि सर्वदेवैः प्रपूजितम् ।
माकारं वह्निबीजञ्च सदैव मेषवाहनम् ॥३॥

रुद्रालयं हि तत्रैव महामोहस्य नाशनम् ।
भद्रकाली महाविद्या वामभागेन शोभिता ॥४॥

भद्रकाली महाविद्या सदा संहारकारिणी ।
ब्रह्मणा सृज्यते लोकः पाल्यते विष्णुरूपिणा ॥५॥

परदेवो रुद्ररूपः सदा संहारकारकः ।
संहाररुद्ररूपेण भद्रकालिकया सह ॥६॥

रुद्रस्य भावनाद् देवि किं न सिध्यति चण्डिके ।
यद्रूपं कथितं पूर्वं गोलोकं सर्वमोहनम् ॥७॥

तस्माद्वै सर्वतोभावे रुद्रलोकं चतुर्गुणम् ।
रुद्रलोकं महास्वर्गं गोलोकाद्वै चतुर्गुणम् ॥८॥

महामोक्षप्रदं नित्यं रुद्रं भस्माङ्गभूषणम् ।
भद्रकाली महाविद्या रुद्रस्य वामदेशके ॥९॥

विष्णुना पाल्यते यद्वत् कालीरूपेण युज्यते ।
अतः कालीं महादेवीं सदैव मुरलीधरः ॥१०॥

आराध्य बहुयत्नेन वैकुण्ठाधिपतिर्भवेत् ।
गोलोकाधिपतिर्देवि स्तुतिभक्तिपरायणः ॥११॥

कालीपादप्रसादेन स भवेल्लोकपालकः ।
लोकानां रक्षणार्थाय सश्रीको मुरलीधरः ॥१२॥

समाराध्य भद्रकालीं गोलोके निवसेत्तदा ।
प्रसा(दा:१दात्) कालिकायाश्च भुज्यते विष्णुना सदा ॥
अतश्च पालको विष्णुर्महासत्त्वपरायणः ॥१३॥

इति श्रीनिर्वाणतन्त्रे षष्ठः पटलः ॥

—:०:—

श्रीशिव उवाच—

एतत्पद्मस्योर्ध्वदेशे विमलं पद्मसुन्दरम् ।
शोभितं द्वादशैः पत्रैः शोणवर्णसमन्वितम् ॥१॥

वाञ्छातिरिक्तफलदं शुद्धसिन्दूरसन्निभम्[1] ।
पद्ममध्ये बीजकोषे षट्कोणमण्डलं शुभम् ॥२॥

मण्डलस्य मध्यदेशे वायुवीजं मनोहरम् ।
सजीवं वायुबीजञ्च वेदबाहुविराजितम्[2] ॥३॥

या विद्या भुवनेशानी त्रिषु लोकेषु पूजिता ।
ईश्वरस्य वामभागे सा देवी परितिष्ठति ॥४॥

महर्लोकमिदं भद्रे पूजास्थानं सुरेश्वरि ।
अत्रैव मानसं यागं कुरुते योगवित्तमः ॥५॥

सिन्दूरारक्तं चार्वङ्गि स्फाटिकैर्निर्मितं ततः ।
अतश्च मानवाः सर्वे ज्योतिः संपरिपश्यति ॥६॥

सर्वावयवसंयुक्ता देवास्तिष्ठन्ति सन्ततम् ।
भूमिगाः परिपश्यन्ति चक्राकारं हि तेजसाम् ॥७॥

---

१. सोदरम्–ग. ङ. ।

२. इतोऽग्रे—'लोकत्रयस्य ईशानमीश्वरं सर्वपूजितम्' इत्यधिकः–ग. ङ. ।

स्वर्लोकगामिनः सर्वे साकारं परिपश्यति ।
अङ्गभेदं न पश्यन्ति स्थूलरूपनिरीक्षणम् ॥८॥
तथैव[1] भूमिगा लोकाः प्रचरन्ति महीतले ।
तथैव देवताः सर्वाः स्वर्गे तिष्ठन्ति पार्वति ॥९॥

भूर्लोके निवसेद् ब्रह्मा भुवर्लोके जनार्दनः ।
स्वर्लोके निवसेत् शम्भुः सदा संहारकारकः ॥१०॥
ब्रह्मादीनां च ईशानः सर्वकर्ता च ईश्वरः ।
सर्वस्वामित्वरूपं च सर्वकर्ता सुरेश्वरः ॥११॥

सृष्टिस्थितिलयादीनां कर्ता च परमेश्वरः ।
गोलोकं कथितं देवि यद्रूपं शोभितं सदा ॥१२॥
तस्माच्छतगुणं देवि महर्लोकं सुसुन्दरम् ।
विस्तीर्णं च शतगुणं सर्वं शतगुणं शिवे ॥१३॥
महर्लोकस्य माहात्म्यं किं वक्तुं शक्यते मया ।
गोलोकस्य शतगुणं सर्वत्र परमेश्वरि ॥१४॥
महर्लोके वसेत् यो हि सामान्यभावतत्परः ।
तस्मादेव शतांशैकं गोलोके मुरलीधरः[2] ॥१५॥
तदाज्ञां प्राप्य सहसा सृज्यते पद्मयोनिना ।
तदाज्ञया पाति लोकान् द्विभुजो मुरलीधरः ॥१६॥
एवं हि रुद्ररूपेण संहरत्यखिलं जगत् ।
सर्वकर्ता यतो देवि अतः स परमेश्वरः ॥१७॥
ईश्वरः सर्वकर्ता च निर्गुणस्यालयः शिवः ।
भुवनेशीं विना देवि स्पन्दितुं नैव शक्यते ॥१८॥

---

१. यथैव—ग. ङ. ।
२. मुरलीधरम्—क. ग. ।

पङ्गुप्रायः सदा ईशो गन्तुं च नहि शक्यते।
भुवनेशीं समाराध्य सर्वस्वामी च ईश्वरः ॥१९॥

अत एव महेशानि तथैव मोक्षदायिनी।
विश्वमाता च सा देवी विश्वपालनकारिणी ॥२०॥

मोक्षदा सर्वलोकानां मुक्तिदा विश्वमातृका।
भुवनेशीं विना ईशः किञ्चित् कर्तुं न शक्यते ॥२१॥

अत एव हि सा देवि मोक्षदा सर्वरूपिणी।
इति ते कथितं किञ्चिद् महर्लोकस्य लक्षणम् ॥
समासेन परेशानि अथान्यत् शृणु सादरम् ॥२२॥

इति श्रीनिर्वाणतन्त्रे सप्तमः पटलः ॥

—:०:—

श्रीशङ्कर उवाच—

अस्योर्ध्वे निर्मलं पद्मं सर्वमोहनकारणम्।
षोडशैः पत्रकैर्युक्तं मोहान्धकारनाशनम् ॥१॥

धूममध्ये यथा वह्निस्तथा ज्योतिर्मयं प्रिये।
पद्ममध्ये वराटे च जनलोकं सुसुन्दरम् ॥२॥

महामोहान्धशमनं तद्बाह्ये चन्द्रमण्डलम्।
देववृन्दैर्गायकैश्च मुनिभिः परिशोभितम् ॥३॥

गोलोकस्य लक्षगुणमिह स्थानं सुदुर्लभम्।
देवत्वं च मनोज्ञं च विस्तीर्णं च तथा पुनः ॥४॥

सर्वं लक्षगुणं देवि गोलोकान्नात्र संशयः।
वीजकोषे मणिद्वीपे षट्कोणयन्त्रमुत्तमम् ॥५॥

---

१. गमितुं–क. ङ.।

यन्त्रमध्ये च वृत्ताभं महासिंहार्धदेहकम् ।
तस्योपरि सदा गौरी दक्षभागे सदाशिवः ॥६॥

त्रिनेत्रः पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनः ।
विभूतिभूषिताङ्गश्च रजताचलसोदरः ॥७॥

व्याघ्रचर्मधरो देवः फणिमालाविभूषितः ।
लोकानामिष्टदाता च लोकानां भयनाशनः ॥८॥

लोकानां मुक्तिजनको लोकानां ज्ञानदायकः ।
आराधकस्य ब्रह्मत्वदायको विष्णुपूजितः ॥९॥

सर्वानन्दकरो देवः अर्धनारीश्वरो विभुः ।
क्वचिज्ज्योतिर्मयो देवो क्वचिदाकारवर्जितः ॥१०॥

देवानां पूज्यरूपश्च देवानां स्वामिरूपकः ।
भक्तस्य मुक्तिदो नित्यं विष्णुत्वदायको विभुः ॥११॥

विल्वपत्रैः पूजकस्य निजसायुज्यदायकः ।
गोलोकाधिपतिं कृत्वा भक्तं रक्षति यः शिवः ॥१२॥

तस्य देवस्य माहात्म्यं विस्तारेण च किं प्रिये[1] ।
या गौरी लोकमाता च शम्भोरर्धाङ्गधारिणी ॥१३॥

त्रिगुणा सा महागौरी गुणैकेन पिनाकधृक् ।
तस्याः सङ्गं समासाद्य सर्वकर्ता सदाशिवः ॥१४॥

इति श्रीनिर्वाणतन्त्रेऽष्टमः पटलः ॥

—:०:—

श्रीशङ्कर उवाच—

एतत्पद्मस्योर्ध्वदेशे ज्ञानपद्मं सुदुर्लभम् ।
पत्रद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम् ॥१॥

---

१. विस्तरेण च चण्डिके—ग. ङ. ।

पद्ममध्ये बीजकोषे स्मरेच्चिन्तामणिं पुरीम् ।
तन्मध्ये नवकोणञ्च यन्त्रं परमदुर्लभम् ॥२॥

शम्भुबीजं हि तन्मध्ये साकारः हंसरूपकः ।
हंसः परंब्रह्मरूपः साकारः[1] शिवरूपकः ॥३॥

तारश्चक्षुर्वरारोहे निगमागमपक्षवान् ।
शिवशक्तिपदद्वन्द्वं बिन्दुत्रयविलोचनम् ॥४॥

विहारश्चास्य हंसस्य हेमपङ्कजपूरिते ।
एवं हंसो मणिद्वीपे तस्य क्रोडे परः शिवः ॥५॥

वामभागे सिद्धकाली सदानन्दस्वरूपिणी ।
तस्याः प्रसादमासाद्य सर्वकर्ता महेश्वरः ॥६॥

तपोलोकमिदं भद्रे सर्वदेवस्य दुर्लभम् ।
यत्र ब्रह्मादयो देवा ध्यानयोगं सदाभ्यसेत् ॥७॥

मनसापि न लभ्येत योगेन तपसा न च ।
तपोलोकं गोलोकस्य चतुर्लक्षगुणं शिवे ॥८॥

ब्रह्मलोकेषु ये देवा वैकुण्ठे ये सुरादयः ।
शम्भुलोके वसेद् यो यैस्ते[2] च भक्तिपरायणाः ॥९॥

तपसापि न लभ्येत तपोलोकमतः शिवे ।
तपोलोकसमो- नास्ति लोकमध्ये सुलोचने ॥१०॥

सालोक्यं महर्लोकः स्यात् सारूप्यं जनलोकके ।
सायुज्यं तपोलोकेषु निर्वाणं हि तदूर्ध्वके ॥११॥

अतो[3] ब्रह्मादयो देवास्तपोलोकार्थिनः सदा ।
तस्य लोकस्य माहात्म्यं मया वक्तुं न शक्यते ॥१२॥

---

१. साकारं शिवरूपकम्–क. ।
२. यो हि ये च भक्तिपरायणाः–ङ. ।
३. ततो–ग. ङ. ।

इति ते कथितं कान्ते स्वर्गषट्कस्य लक्षणम् ।
यज्ज्ञानादमरत्वञ्च जीवन्मुक्तश्च साधकः ॥१३॥

यज्ज्ञानाज्जननीगर्भं न विशन्ति कदाचन ।
आयुरारोग्यमैश्वर्यं स प्राप्नोति न संशयः ॥१४॥

पुराणानि च सर्वाणि मयैवोक्तानि पार्वति ।
एतद्रूपञ्च तन्मध्येऽव्यक्तरूपो न विद्यते ॥१५॥

गूढज्ञानञ्च तन्मध्ये अतः किञ्चिन्न बुध्यते ।
एवं हि वेदशास्त्रेषु ज्ञानमध्ये सुलोचने ॥१६॥

शब्दज्ञानं यतो नास्ति अतः किञ्चिन्न बुध्यते ।
अष्टादशपुराणानि साङ्गं वेत्ति च यो नरः ॥१७॥

तस्य स्थाने पुराणानां सदा श्रवणमाचरेत् ।
मूढे चाल्पपाठज्ञे च न श्रोतव्यं कदाचन ॥१८॥

शास्त्रस्य लक्षणं ह्येतत् व्याख्या चान्यत् प्रकाशते ।
शब्दः[1] ब्रह्मस्वरूपश्च मम वक्त्राद् विनिर्गतः ॥१९॥

सन्देहो नैव कर्तव्यो यदि मुक्तिं प्रयच्छति ।
सन्देहात् पामरो याति रौरवं पितृभिः सह ॥२०॥

ज्ञानं च निर्मलं कृत्वा बुद्धिं च निर्मलां ततः ।
महाभक्तियुतो भूत्वा सर्वप्राणिहिते रतः ॥२१॥

शब्दब्रह्ममयं देवि शृणोति तन्त्रविद्यदि ।
तदा मुक्तिमवाप्नोति सत्यं सत्यं न संशयः ॥२२॥

अष्टादश पुराणानि श्रवणेनैव यत्फलम् ।
चतुर्वेदानि साङ्गानि श्रवणेनैव यत्फलम् ॥२३॥

---

१. शम्भुः···विनिर्गताः–क. ङ. ।

मेरुतुल्यं सुवर्णञ्च गुरवे ब्रह्मरूपिणे ।
सशस्यां परमेशानि सप्तद्वीपां वसुन्धराम् ॥२४॥
प्रदद्यात् भक्तिभावेन यदि स्याद् वेदपारगः ।
तस्माद्वै परमेशानि फलं बहुविधं शिवे ॥२५॥
अस्य तन्त्रस्य चार्वङ्गि शृणोति पटलं यदि ।
तत्फलात् कोटिगुणितं फलं स लभते ध्रुवम् ॥२६॥

इति श्रीनिर्वाणतन्त्रे नवमः पटलः ॥

—:०:—

श्रीशङ्कर उवाच

ज्ञानपद्मस्योर्ध्वदेशे सहस्रदलपङ्कजम् ।
अधोवक्त्रं महावक्त्रं सुमेरोर्मूर्ध्नि संस्थितम् ॥१॥
यस्य पत्रं महेशानि सर्वशक्तिसमन्वितम् ।
शुक्लं रक्तं तथा पीतं कृष्णं हरितमेव च ॥२॥
नानाविचित्ररूपेण नानावर्णेन शोभितम् ।
शुक्लं क्षणे क्षणे रक्तं क्षणे पीतं सुशोभनम् ॥३॥
कस्मिन् क्षणे शुक्लवर्णं हरितं वर्णमुत्तमम् ।
चित्ररूपं च चार्वङ्गि धत्ते कस्मिन् क्षणे प्रिये ॥४॥
एवं नानाविधैर्देवि तत्पद्मं शोभितं सदा ।
तथैव गोलोकं धाम प्रतिपत्रे तथैव हि ॥५॥
गोलोकस्य पतिस्तत्र भक्तिभावपरायणः ।
कैलासाधिपतिर्देवि ध्यानयोगं सदाभ्यसेत् ॥६॥
एवं ब्रह्मादयो देवा इन्द्राद्यास्त्रिदशेश्वराः ।
स्तुतिभक्तिपराः सर्वे दिव्यभावैः[1] सदा स्थिताः ॥७॥

---

१. दीनभावैः–ग. ङ. ।

लक्षं लक्षं महेशानि तथैव मुरलीधरः।
शतलक्षं शिवस्तत्र ब्रह्मा लक्षशतं प्रिये ॥८॥

प्रत्यहं परमेशानि ब्रह्माण्डा बहवो भवेत् ? ।
तन्मध्ये स्थापयेद् ब्रह्मा तथैव कमलापतिम् ॥९॥

शिवं बहुविधाकारं तत्रैव स्थापनं चरेत् ।
एवं हि परमेशानि नानाशक्तिं प्रविन्यसेत् ॥१०॥

प्रतिब्रह्माण्डमध्ये तु ब्रह्मादिदेवतात्रयम् ।
नानाशक्तियुतं कृत्वा ब्रह्माण्डस्थापनं चरेत् ॥११॥

ब्रह्मपद्मे पृथिव्यां तु वर्तन्ते मानुषादयः ।
ते सर्वे देवि ब्रह्माण्डास्तन्मध्ये भुवनानि च ॥१२॥

पातालसप्तकं तत्र तत्रैव स्वर्गसप्तकम् ।
एवं क्रमात् सर्वदेहे भुवनानि चतुर्दश ॥१३॥

प्रतिदेहं परेशानि ब्रह्माण्डं नात्र संशयः ।
कथितं बाह्यदेशस्य ब्रह्माण्डस्य च लक्षणम् ॥१४॥

यन्मध्ये वर्तते साक्षाद् भुवनानि चतुर्दश ।
तदेव विग्रहं देवि महाब्रह्माण्डमध्यगम् ॥१५॥

एवं बहुविधं देवि तत्र ब्रह्माण्डके क्षितौ ।
बृहद्ब्रह्माण्डे ये सर्वे तेऽपि जन्यशरीरिणः ॥१६॥

पृथिव्यां तेऽपि वर्तन्ते जन्तोराकारविग्रहाः ।
महाब्रह्माण्डमध्ये तु बृहद्ब्रह्माण्डस्तिष्ठति ॥१७॥

तन्मध्ये जन्तवो देवि तन्मध्ये भुवनानि च ।
सृष्टिमार्गेण भेदोऽस्ति स्थूलसूक्ष्मादिभेदतः ॥१८॥

महाब्रह्माण्डके यद् यत् प्रकारं परमेश्वरि ।
तत्तत् सर्वं हि देवेशि बृहद्ब्रह्माण्डमध्यतः ॥१९॥

तद्रूपं च देहमध्ये भुवनानि चतुर्दश ।
सृष्टिप्रकारब्रह्माण्डे भेदो नास्ति सुनिश्चितम् ॥२०॥

स्थूलं क्षुद्रो हि चार्वङ्गि भेदकः परिचायकः ।
पद्ममध्ये बीजकोषे भुवनानि चतुर्दश ॥२१॥

स्थानं बहुविधाकारं सर्वदेवस्य चाश्रयम् ।
तन्मध्ये सत्यलोकं च महारुद्रस्य कारणम् ॥२२॥

दशकास्तेन स्वर्गेण निर्मितं चक्रपाणिना ।
दिक्षु तोयमण्डलश्च यथा पूर्णेन्दुमण्डलम् ॥२३॥

परितः[1] परिजानीयान्मध्ये कल्पद्रुमं पुनः ।
कल्पवृक्षस्य निकटे ज्योतिर्मण्डलमुत्तमम् ॥२४॥

उद्यदादित्यसङ्काशं चतुर्द्वारविभूषितम् ।
मन्दवायुसमायुक्तगन्धधूपैरलङ्कृतम् ॥२५॥

तन्मध्ये वेदिका देवि रत्नसिंहासनं प्रिये ।
महाकाली परमात्मा चणकाकाररूपतः ॥२६॥

माययाच्छादितात्मानं तन्मध्ये समभागतः ।
महारुद्रः स एवात्मा महाविष्णुः स एव हि ॥२७॥

महाब्रह्मा स एवात्मा नाममात्रविभेदतः ।
एकमूर्तिस्त्रयं नाम ब्रह्मविष्णुमहेश्वराः ॥२८॥

नानाभावे मनो यस्य तस्य मोक्षो न विद्यते ।
ब्रह्माण्डास्तत्र जायन्ते लक्षं लक्षं सुलोचने ॥२९॥

तत्र ब्रह्मा तत्र हरिस्तत्र रुद्रः प्रविन्यसेत् ।
एवं ब्रह्माण्डनिर्माणं[2] कृत्वा विष्णुः सनातनः ॥३०॥

---

१. परितः पारिजातानि–ग. । २. निर्वाणम्,–च. ।

सजीवमूर्तिं निर्माय यथा जन्तोश्च विग्रहम् ।
एवं ब्रह्माण्डं विविधं नित्यं सृजति निर्गुणः ॥३१॥

निर्गुणे बिन्दुरूपश्च सिद्धिकारणमेव हि ।
केचिद् वदन्ति स ब्रह्मा कैश्चिद् विष्णुः प्रकथ्यते ॥३२॥

केचिद् रुद्रो महापूर्व एको देवो निरञ्जनः ।
आद्याशक्तियुतो देवश्चणकाकाररूपकः ॥३३॥

इन्द्रजालस्य दीपाभः चन्द्रसूर्याग्निरूपकः ।
महाक्षोभी[1] निर्विकारः सत्यं सत्यः सनातनः ॥३४॥

सत्यलोके बीजकोषे चिन्तामणिगृहे शुभे ।
ध्यायेन्निरञ्जनं देवि रत्नसिंहासनोपरि ॥३५॥

तस्यान्तिके निजगुरुं पूजाध्यानपरायणम् ।
सकान्तं पूजयेद् देवं रजताचलसोदरम् ॥३६॥

सुवक्त्रं चारुवदनं सुप्रकाशस्वरूपिणम् ।
एवं कान्तायुतं देवं स्वमूर्ध्निस्थं विचिन्तयेत् ॥३७॥

यथा दर्पणगर्भे तु परिपश्यन्ति पर्वतम् ।
सहस्रारे महापद्मे तथा देवं विचिन्तयेत् ॥३८॥

परं ब्रह्मालयं ह्येतत् परं मोक्षालयं प्रिये ।
निर्गुणस्यालयं साक्षाद् महाकाल्यालयं शिवे ॥३९॥

तत्रैव[2] वर्तते नित्यो निराकारश्च निश्चलः ।
यस्य रूपं परानन्दं परापरजगत्पतिम्[3] ॥४०॥

नित्यानन्दपरा देवी काली कालप्रकाशिनी ।
आद्याशक्तिर्महाकाली देवनिर्माण[4]कारिणी ॥४१॥

---

१. महाज्योतिर्निर्विकारं सुदक्षं चायगोलकम्–ग. ङ. ।

२. यत्रैव–ग. ङ. ।

३. पतिः–ङ. ।

४. निर्वाण–ग. ।

जायते च क्षितौ ब्रह्मा यथा पृथ्व्यां प्रलीयते ।
तोयाच्च बुद्बुदं जातं यथा तोये विलीयते ॥४२॥
जलदे तडिदुत्पन्ना लीयते च यथा घने ।
तथा ब्रह्मादयो देवाः कालिकायां प्रजायते ॥४३॥
तथा प्रलयकाले तु पुनस्तस्यां प्रलीयते ।
शक्तिज्ञानं विना देवि मुक्तिर्हास्याय कल्पते ॥४४॥
एकांशेन भवेद् ब्रह्मा एकांशेन जनार्दनः ।
एकांशेन भवेत् शम्भुः कालिकायाः सुलोचने ॥४५॥
अपरा सा महाकाली नद्यादीनां समुद्रवत् ।
गोष्पदे च यथा तोयं ब्रह्माद्या देवतास्तथा ॥४६॥
गोपदं किं न जानीयात् समुद्रस्य जलं शिवे ।
तेन ब्रह्मा न जानाति विष्णुः किं वेत्ति शङ्करः ॥४७॥
सृष्टिकर्ता यदा काल्यां तन्यन्ते च सुरादयः ।
तथा प्रलयकाले तु पुनस्तस्यां प्रलीयते ॥४८॥
अतो निर्वाणदा काली पुरुषः स्वर्गदायकः ।
दक्षिणस्यां दिशि स्थाने संस्थितश्च रवेः सुतः ॥४९॥
कालीनाम्ना पलायेत भीतियुक्तः समन्ततः ।
ततः सा दक्षिणा नाम्ना त्रिषु लोकेषु गीयते ॥५०॥
पुरुषो दक्षिणः प्रोक्तो वामा शक्तिर्निगद्यते ।
वामाया दक्षिणा जिह्वा महामोक्षप्रदायिनी ॥५१॥
अतः सा दक्षिणा नाम्ना त्रिषु लोकेषु गीयते ।
वैश्वरी या महाविद्या कालिका जगदम्बिका ॥५२॥
साकाररूपा सा देवी चणकाकाररूपिणी ।
हस्तपादादिरहिता चन्द्रसूर्याग्निरूपिणी ॥५३॥

तस्याः स्थानं हि कथितं सत्यलोकं वरानने ।
यत् स्थानं सर्वदेवस्य प्रार्थनीयं सदानघे ॥५४॥

तस्य स्थानस्य माहात्म्यं किं मया कथ्यतेऽधुना ।
सहस्रदलपद्मस्य चैकपत्रे सुलोचने ॥५५॥

सहस्रगोलोकं धाम अतो वक्तुं न शक्यते ।
जन्मान्तरसहस्रेण जिह्वाकोटिशतेन च ॥५६॥

तद्वक्तुं नहि शक्नोमि एकपत्रस्य शोभनम् ।
अतस्त्वं हि वरारोहे विरता भव पार्वति ॥५७॥

किञ्जल्कमध्ये सा देवी किं वक्तुं शक्यते मया ।
तन्मध्ये कर्णिकां देवि तन्मध्ये बीजकोपकम् ॥५८॥

बीजकोपस्य मध्ये तु सुधासागरमुत्तमम् ।
लक्षयोजनविस्तारं सुशुभं[1] तोयमण्डलम् ॥५९॥

तन्मध्ये तु मणिद्वीपं सहस्रयोजनं शिवे ।
परितः पारिजातानि कदम्बवनमुत्तमम् ॥६०॥

मध्ये कल्पद्रुमं तत्र ज्योतिर्मन्दिरमुत्तमम् ।
चतुर्द्वारसमायुक्तं हेमप्राकारभूषितम् ॥६१॥

मन्दवायुसमायुक्तं गन्धधूपसमन्वितम् ।
देवकन्यासहस्राणि[2] परिचर्यापरायणाः ॥६२॥

तन्मध्ये वेदिकां देवि पञ्चाशदक्षरात्मिकाम् ।
तस्योपरि महेशानि रत्नसिंहासनं शिवे ॥६३॥

महाकाली महारुद्रश्चणकाकाररूपकः ।
इन्द्रजालस्य दीपाभं महाज्योतिः सनातनम् ॥६४॥

---

१. सुशुभ्रम्–ग. ।
२. सहस्रादि–ङ. ।

इति ते कथितं कान्ते सप्तस्वर्गं क्रमेण हि ।
श्रुत्वा गोपय यत्नेन न प्रकाश्यं कदाचन ॥६५॥
अतिस्नेहेन देवेशि तव स्थाने प्रकाशितम् ।
संक्षेपेण मयाऽप्युक्तं विस्तारे नहि शक्यते ॥६६॥

इति श्रीनिर्वाणतन्त्रे सत्यलोककथनं नाम दशमः पटलः ॥

—:०:—

श्रीचण्डिका उवाच—

त्वत्प्रसादान्महादेव पवित्राहं न चान्यथा ।
इदानीं श्रोतुमिच्छामि तत्त्वज्ञानं सुदुर्लभम् ॥१॥

श्रीशङ्कर उवाच—

तत्त्वज्ञानादिकथने न[1] शक्यं मम मानसम् ।
एतत् प्रशंसाश्रवणे[2] विरता[3] भव सुन्दरि ॥२॥
येन ज्ञानप्रसादेन विष्णुः सत्त्वगुणाश्रयः ।
शृणु देवि प्रवक्ष्यामि ब्रह्मा लोकपितामहः ॥३॥
तत्त्वज्ञानप्रसादेन शम्भुः संहारकारकः ।
अन्ये मुक्ताश्च ये सर्वे तेऽपि तत्त्वप्रसादतः ॥४॥
तत्त्वज्ञानं परेशानि कथं वा कथ्यते मया ।
विरता भव देवेशि न वै पृच्छ पुनः पुनः ॥५॥
इति तस्य वचः श्रुत्वा शङ्करी वाक्यमब्रवीत् ।
यदि तत्त्वं महादेव न मे कथयसि विभो ॥६॥
प्राणत्यागं करिष्यामि पुरतस्ते न संशयः ।

---

१. शक्यते मम मानसम्–ग. ङ. ।

२. प्रसङ्ग–क. ।

३. एतत्प्रसङ्गमात्रेण पवित्रा भव पार्वति–ग. ।

श्रीशङ्कर उवाच—

शृणु देवि प्रवक्ष्यामि तत्त्वं परमदुर्लभम् ॥७॥
श्रुत्वा गोपय यत्नेन स्वयोनिरिव सुन्दरि ।
मद्यं मांसं तथा मत्स्यं मुद्रां मैथुनमेव च ॥८॥

पञ्चतत्त्वमिदं देवि निर्वाणमुक्तिहेतवे ।
अष्टैश्वर्यं परं मोक्षं मद्यपानेन शैलजे ॥९॥

मांसभक्षणमात्रेण साक्षान्नारायणो भवेत् ।
मत्स्यभक्षणमात्रेण कालीप्रत्यक्षता भवेत् ॥१०॥
मुद्रासेवनमात्रेण भूपूज्यो विष्णुरूपधृक् ।

मैथुनेन महायोगी मम तुल्यो न संशयः ॥११॥
तन्त्रान्तरे तु देवेशि मयैव कथितं पुरा ।

माहात्म्यं चास्य धर्मस्य पुरैव कथितं मया ॥१२॥
तत्त्वज्ञानमिदं कान्ते निर्वाणमुक्तिकारणम् ।

एकत्र पञ्चतत्त्वं तु यत्रैव मिलितं भवेत् ॥१३॥
तत्रैव तु प्रगच्छन्ति नरा मत्सदृशाः सदा ।[1]

सा नारी कालिकारूपा मृते तस्यां प्रलीयते ॥१४॥
ये नराः साधुरूपाश्च तत्त्वज्ञानपरायणाः ।

जीवन्मुक्ताश्च ते प्रोक्ता ब्रह्मरूपा न चान्यथा ॥१५॥
सायुज्यादिमहामोक्षं नियुक्तं क्षत्रियादिषु ।

ब्राह्मणः परमेशानि यदि तत्त्वपरायणः ॥१६॥
सत्यं सत्यं पुनः सत्यं परे तत्त्वे प्रलीयते ।

यथा तोयं तोयमध्ये लीयते परमेश्वरि ॥१७॥
तथैव तत्त्वसेवायां लीयते परमात्मनि ।

---

१. तत्रैवाहं प्रगच्छामि ते नरा मत्समाः सदा—क. ग. ङ. ।

इति ते कथितं कान्ते तत्त्वज्ञानं हि मोक्षदम् ॥१८॥
येन ज्ञानप्रसादेन मोक्षसिद्धिर्न संशयः ।

क्षितिं विना यथा नास्ति संस्थितेः कारणं सदा ॥१९॥
तोयं विना यथा नास्ति पिपासानाशकारणम् ।

तमोहन्ता यथा नास्ति भास्करेण विना प्रिये ॥२०॥
विना वह्निप्रयोगेण यथा किञ्चिन्न पश्यते ।

विना[1] तन्त्रेण देवेशि सुधावृष्टिर्न जायते[2] ॥२१॥
मातृगर्भं विना कान्ते उत्पत्तिर्न यथा भवेत् ।

तत्त्वज्ञानं विना देवि तथा मुक्तिर्न जायते ॥२२॥
अत एव महेशानि गोपनं कुरु यत्नतः ।

दिव्यभावयुतानाञ्च तत्त्वज्ञानं सदा भवेत् ॥२३॥
वीरभावयुतानां वै तत्त्वं सेव्यं सदानघे ।

न पशोरालये कुर्यान्न पशोर्ज्ञानगोचरे ॥२४॥
अन्यथा पक्षिकीटस्य दर्शने नहि कारयेत् ।

सिद्धेर्वर्त्म शृणु प्राज्ञे यत् कृत्वा सिद्धिमाप्नुयात् ॥२५॥
एकां शक्तिं समानीय एकैकः[3] साधकः सदा ।

पूजयेद् बहुयत्नेन पञ्चतत्त्वेन कौलिकः ॥२६॥
एवं कृत्वा लभेत् सिद्धिं नान्यस्य दृष्टिगोचरे ।

श्रीचक्रपूजा यत्रैव तत्रैव ध्यानसिद्धये ॥२७॥
सिद्धिर्न जायते तत्र कदाचिदन्यसन्निधौ ।

---

१. विना चन्द्रेण—ग. ङ. ।

२. इतः परम्—"न पशोः सन्निधानेन च न पशोर्दृष्टिगोचरैः" इत्यधिकः पाठः—क. ग. ङ. ।

३. एकैकः साधुः सदा—च. ङ. ।

तत्रैव कामनासिद्धिर्यत्र चक्रं प्रपूजयेत् ॥२८॥
आयुरारोग्यमैश्वर्यं श्रीचक्रपूजनाल्लभेत् ।
कीर्तिवृद्धिर्यशोवृद्धिर्मुक्तिभागी न संशयः ॥२९॥
वाञ्छासिद्धिर्ज्ञानसिद्धिर्देव्याः प्रीतिश्च जायते ।
श्रीचक्रपूजां यः कुर्यात् स एव शम्भुरव्ययः ॥३०॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
इष्ट्वा यत् फलमाप्नोति तत्फलं कौलिकार्चने ॥३१॥
वापीकूपतडागादि दत्त्वा यत् फलमाप्नुयात् ।
तत्फलात् कोटिगुणितं यदि चक्रं प्रपूजयेत् ॥३२॥
तदन्नं[1] मेरुवत्तुल्यं बिन्दुः सिन्धुसमोपमः ।
पुष्पञ्च मेरुसदृशं यदि चक्रं प्रपूजयेत्[2] ॥३३॥
तन्मध्ये वर्तते देवि यदि व्याधियुतो नरः ।
शिवब्रह्मा प्रपूज्यो हि भ्रान्तिं तत्र विवर्जयेत् ॥३४॥
सूर्यस्य प्रतिबिम्बं यत् तत्तोयं परिपश्यति ।
गङ्गातोये यथा सूर्यो हीनतोये तथा पुनः ॥३५॥
सूर्यस्य दूषणं नास्ति सूर्यैकः परितिष्ठति ।
तथैव परमेशानि साधके नास्ति दूषणम् ॥३६॥
मन्त्रधारणमात्रेण तदात्मा शोभनो भवेत् ।
अत एव महेशानि दूषणं नास्ति रेतसि ॥३७॥
रेतः पवित्रं परमं शक्तिर्मोक्षस्य कारणम् ।
पूजाहीना च या शक्तिर्जपहीना च या पुनः ॥३८॥
धृत्वा साधकरेतश्च सा नारी कालिका स्वयम् ।

---

१. उदकं मेरुतुल्यं हि—ग. ङ. ।
२. तदन्नमित्यतः चक्रं प्रपूजयेदिति श्लोको नास्ति—क. ।

भ्रान्तिरत्र न कर्तव्या यदि मुक्तिं समिच्छति ॥३९॥
या नारी भ्रान्तिसंयुक्ता आगता चक्रमण्डले ।
सप्तजन्मनि सा नारी चाण्डाली पतिवर्जिता ॥४०॥
एवं विरूपां यां नारीमवज्ञां कुरुते यदि ।
धनपुत्रैर्विवर्जितश्च स चाण्डालो न चान्यथा ॥४१॥
इति ते कथितं कान्ते तत्त्वज्ञानं विमोक्षदम् ।
येषां देहे महेशानि तत्त्वज्ञानं मयोदितम् ॥४२॥
ते पुनर्जननीगर्भे न विशन्ति कदाचन ।
जीवन्मुक्ताश्च ते प्रोक्ताः शिवरूपाश्च ते नराः ॥४३॥
शृणु देवि प्रवक्ष्यामि कौलिकस्य च लक्षणम् ।
[1]यस्मिन् देशे तु यद्द्वारो निर्दिष्टो मन्त्रसाधने ॥४४॥
तद्द्वारेण विशिष्टो यः कौलिकः स च कीर्तितः ।
शैवे शाक्ते च गाणेशे सौरे चान्द्रे सुलोचने ।
तत्त्वज्ञानमिदं प्रोक्तं वैष्णवे शृणु यत्नतः ॥४५॥

इति श्रीनिर्वाणतन्त्रे तत्त्वविवरणं नाम एकादशः पटलः ॥

---

श्रीचण्डिका उवाच—

शृणु नाथ परानन्द मम प्राणेश्वर प्रभो ।
वैष्णवस्य यथा तत्त्वं तन्त्रे ब्रूहि जगत्पते ॥ १ ॥

श्रीशिव उवाच—

शृणु तत्त्वं वरारोहे वैष्णवस्य त्रिलोचने ।
गुरुतत्त्वं मन्त्रतत्त्वं वर्णतत्त्वं सुरेश्वरि ॥ २ ॥

---

१. यस्मिन् देशे यदाचारो निर्दिष्टो मन्त्रसाधने ।
तदाचारविशिष्टो यः स एव कौलिकः स्मृतः ॥—क. ग. ङ. ।

देवतत्त्वं ध्यानतत्त्वं पञ्चतत्त्वं वरानने ।
तत्रादौ श्रीगुरोस्तत्त्वं[1] स्नेहाद् वक्ष्यामि पार्वति ॥ ३ ॥

सतैलं वर्त्तिकायुक्तं देहस्थब्रह्मतेजसम् ।
गुरुणा मन्त्रदानेन[2] तत् सूत्रं दीपितं भवेत् ॥ ४ ॥

देवतायाः शरीरं हि बीजादुत्पद्यते ध्रुवम् ।
अत एव हि तस्यात्मा देवरूपो न संशयः ॥ ५ ॥

ईश्वरस्य तु यद्वीर्यं तदेव अक्षरात्मकम् ।
तेन वर्णात्मकं देहं जन्तोरेव न संशयः ॥ ६ ॥

[3]मन्त्रवर्णे च ते वर्णा लीयन्ते परमेश्वरि ।
वर्णतत्त्वमिदं देवि मम सर्वं स्वयं भवेत् ॥ ७ ॥

स्वयं देवो न चान्यस्मिन्निर्मलो देवरूपकः ।
सर्वत्र देवतां ध्यायेत् तृणगुल्मलतादिषु ॥ ८ ॥

ध्यानेन लभते सर्वं ध्यानेन विष्णुरूपकम् ।
ध्यानेन सिद्धिमाप्नोति विना ध्यानैर्न सिध्यति ॥ ९ ॥

इति ते कथितं कान्ते वैष्णवस्य सुरेश्वरि ।
यज्ज्ञानादमृतत्वञ्च विष्णुरूपो भवेन्नरः ॥१०॥

यः कुर्यात् परमेशानि तत्त्वज्ञानं मयोदितम् ।
[4]स्वर्गमार्गो भवेन्मर्त्त्यो विष्णुलोके वसेत् सदा ॥११॥

---

१. गुरोर्ध्यानम्–ङ. ।

२. मस्त्रदानेन–ख. ।

३. मनुवर्णे सर्ववर्णा लीयन्ते परमेश्वरि ।
मन्त्रतत्त्वमिदं देवि सर्वस्वं सम्भवं भवेत्–ख. ।

४. स्वर्गगामी–ग., स्वर्गभागी–ङ. ।

इति भक्तियुतो मर्त्यो मनसा चिन्तयन् सदा ।
ते नरा नहि गच्छन्ति कदाचिन्मम मन्दिरे ॥१२॥

इति[1] ते कथितं तत्त्वं वैष्णवस्य सुरेश्वरि ।
यज्ज्ञानादमरत्वञ्च लभते नात्र संशयः ॥१३॥

इति निर्वाणतन्त्रे विष्णोस्तत्त्वकथनं नाम द्वादशः पटलः ॥

—×—

श्रीचण्डिका उवाच—

सृष्ट्यात्मकं दशार्णञ्च पुरैव कथितं तु मे ।
प्रकाशरूपे तन्मन्त्रं कथयस्व दयानिधे ॥१॥

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि मन्त्रं दशाक्षरं परम् ।
यस्य श्रवणमात्रेण मूढोऽपि विष्णुरूपधृक् ॥२॥
पुंमन्त्रो यदि देवेशि शक्तिमन्त्रं जपेद् यदि ।
अज्ञात्वा तन्महामन्त्रं स भवेद् ब्रह्मराक्षसः ॥३॥
अज्ञात्वा[2] तन्महामन्त्रं तत्त्वज्ञानी भवेद् यदि ।
तथापि नरकं गच्छेदिति देवस्य सम्मतम् ॥४॥
शृणु देवि प्रवक्ष्यामि दशार्णं मन्त्रमुत्तमम् ।
मायाबीजं वधूबीजं लक्ष्मी[3] काली च पाशकम् ॥५॥
गगनं पक्षिबीजञ्च वह्निकान्तां ततः प्रिये ।
इति ते कथितं चण्डि दशाक्षरमनुत्तमम् ॥६॥

---

१. 'इति ते कथितम्' नास्ति–ख. ।

२. अज्ञात्वा तन्महामन्त्रमित्यतः···भवेद् यदि पर्यन्तं नास्ति–घ. ।

३. लक्ष्मी कालीत्यतः संशयः पर्यन्तं श्लोकद्वयं नास्ति–ख. ।

यज्ज्ञानादमरत्वञ्च लभते नात्र संशयः ।
अस्य ग्रहणमात्रेण नरो नारायणो भवेत् ॥७॥
[1]अस्य प्रसादेन दण्डी सद्यो निर्वाणतां व्रजेत् ।
दण्डोपरि जपेदेतत् दशार्णं परमेश्वरि ॥८॥
[2]अस्य मन्त्रान्महामन्त्रा जायन्ते न कदाचन ।
सर्वे देवाः सदाराश्च दशार्णाज्जायते ध्रुवम् ॥९॥
महाविद्योपासकश्च दशार्णं नहि पश्यति ।
इहलोके दरिद्रश्च परे च ब्रह्मराक्षसः ॥१०॥
तस्माद् यत्नेन देवेशि दशार्णं श्रावयेद् गुरुः ।
केवलं श्रवणं कुर्यान्न जपेत् साधकोत्तमः ॥११॥
[3]यः श्रावयेद् दशार्णञ्च स नरो गुरुरुत्तमः ।
मन्त्रदाता यथा देवि तथैव स गुरुः स्मृतः ॥१२॥
दशार्णदाता यो देवि स एव परमो गुरुः ।
यथैवं[4] च तरङ्गिण्या न समाः सकलापगाः ॥१३॥
दशार्णस्य समो नास्ति मन्त्रोऽपि सुरपूजिते ।
त्वत्समा यदि नारी च मत्समः पुरुषोऽस्ति च[5] ॥१४॥
दशार्णस्य समं मन्त्रं कथयामि वरानने ।
दशकार्णस्य स्वर्गस्य सदृशं मोहमस्ति[6] च ॥१५॥
दशार्णस्य समं मन्त्रं कथयेयुस्तदा प्रिये ।
श्रीप्रसादः अयं मन्त्रो दशार्णः परमेश्वरि ॥१६॥

---

१. अस्य प्रसादमात्रेण—ग. ।

२. अस्य मन्त्रान्महामन्त्रा ज्ञायन्ते नात्र संशयः—ग. ।

३. यः श्रावयेदिति श्लोकार्धं नास्ति—ङ. ।

४. यथाऽमरतरङ्गिण्या—ग. ।

५. सः—ग. ङ. ।

६. लौहमस्ति चेत्—ग. ड. ।

ऊर्ध्वाम्नायमहातन्त्रे कथयामि वरानने ।
अतः परं प्रवक्ष्यामि यद्रूपं दण्डधारणम् ॥१७॥

साधुरूपो गृहस्थश्च ब्राह्मणा ब्रह्मवादिनः ।
[1]सर्वमायापरित्यक्तः सदा धर्मपरायणः ॥१८॥

जितेन्द्रियो जितक्रोधः समत्वं सर्वजातिषु ।
पुत्रे रिपौ समत्वञ्च समं स्वर्गे च पार्थिवे ॥१९॥

[2]दयाभावश्च सर्वत्र पुत्रे मित्रे रिपौ भवेत् ।
लाभालाभे जये नाशे निन्दायां पौष्टिके तथा ॥२०॥

काये प्राणे न सम्बन्धः सर्वदा समभावुकः[3] ।
ब्रह्मज्ञानं विना ज्ञानं यस्य चित्ते न विद्यते ॥२१॥

संन्यासधर्मस्तस्यैव नान्यस्य सुरपूजिते ।
संन्यासधारणं कार्यं विप्रस्य मुक्तिहेतवे ॥२२॥

यो विप्रो धारयेद् दण्डं सैव नारायणः स्वयम् ।
चतुर्भुजाः प्रजायन्ते दण्डधारणमात्रतः ॥२३॥

सर्वलक्षणसंयुक्तो ब्राह्मणो गमनं चरेत् ।
गत्वा च दण्डिनं दृष्ट्वा प्रणमेद् दण्डवत् क्षितौ ॥२४॥

त्वमेव देवदेवेश त्वमेव त्राणकारकः ।
त्वमेव जगतां बन्धुः[4] त्राहि मां शरणागतम् ॥२५॥

इति श्रुत्वा दण्डधारी [5]पप्रच्छ सादराञ्जलिम् ।
कस्त्वं कस्य सुतस्त्वं हि कथमागमनं वद ॥२६॥

---

१. सर्वमायात्यक्तबुद्धिः सदाध्यानपरायणः—ग. घ. ।

२. दयाभावश्चेति श्लोको नास्ति—ख. घ. ।

३. मृत्युवन्ध्य युगान्तिके—ग. ङ. ।

४. वन्द्यः—ख. घ. ङ. ।

५. च शृणु सादरं वचः—ख. ।

श्रुत्वा तद्वचनं विप्रः प्रोवाचात्मनिवेदनम् ।
विप्रवंशे समुद्भूतः ह्यमुकोऽहं विवेकवान् ॥२७॥

नास्ति मे पितरौ साक्षाद् नास्ति मे स्त्रीसुतादयः ।
मृतौ च मातापितरौ मृता भ्रात्रादयः सुताः ॥२८॥

पश्चात् स्वकान्तानाशे तु ह्यहमत्यन्ततापवान् ।
अत एव हि भो स्वामिन् देहि मे परमाश्रयम् ॥२९॥

सत्यं कुरु द्विजश्रेष्ठ यदुक्तं वै ममान्तिके ।
मिथ्याभाषणदोषेण ब्रह्मवर्त्मविवर्जितः ॥३०॥

भवत्येव न सन्देहो द्विज मत्पुरतो वद ।
स्थितायां यौवनायां च कान्तायां परमेश्वरि ॥३१॥

सर्वं[1] हि विफलं तस्य यः कुर्याद् दण्डधारणम् ।
पितरौ विद्येते देवि यः कुर्याद् दण्डधारणम् ॥३२॥

संन्यासं विफलं तस्य रौरवाख्यं स गच्छति ।
विद्यते बालभावे च यस्य कान्ता सुतस्तथा ॥३३॥

संन्यासधारणं तस्य वृथा हि परमेश्वरि ।
स गुरुश्चापि शिष्यश्च रौरवाख्यं प्रगच्छति ॥३४॥

इत्यादि दृढवाक्यन्तु श्रुत्वा दण्डी जितेन्द्रियः ।
संन्यासदानं तस्यैव दद्यान्मुक्तिं च शाश्वतीम् ॥३५॥

आदौ दशाक्षरं मन्त्रं प्रथमं श्रावयेद् गुरुः ।
तत् श्रुत्वा च महावर्त्मगमनं कारयेत् ततः ॥३६॥

क्रोशं वा क्रोशयुग्मं वा वेगेन गमनं चरेत् ।
गुरुणा सह शिष्येण पृष्ठे पृष्ठे विधानयेत्[2] ॥३७॥

---

१. सर्वं हीत्विति श्लोको नास्ति–ख. ।

२. विधावतः–ख. ग. ।

तिष्ठ तिष्ठ महाबाहो मां त्यक्त्वा नहि गच्छतु ।
शिष्यः परमहंसस्त्वं त्वत्समो नास्ति भूतले ॥३८॥
क्षन्तव्यमपराधं मे त्वमेव विष्णुरूपधृक् ।
त्वमेव जगतां बन्धुस्त्वमेव सर्वपूजितः ॥३९॥
त्वमेव परमो हंसस्तिष्ठ तिष्ठ तु मा व्रज ।
स शिष्यो दण्डिनं देवि इति वाक्यं वदेद्यतः ॥४०॥
अतः स परमो हंसः पथिकैः प्रथमोदितः ।
तस्यैव दर्शनार्थाय चान्तरिक्षे च देवताः ॥४१॥
सस्त्रीकाः परिवाराश्च आयान्ति दिग्विदिक्षु च ।
एतस्मिन् समये दण्डी शान्तयेत् शिष्यमुत्तमम् ॥४२॥
फुत्कारं बहुशो दत्त्वा मन्त्रेणानेन सुव्रते ।
फुत्कारैर्वायुयोगैश्च पुनः प्राणे नियोजयेत् ॥४३॥
जन्मान्तरं तु तस्यैव तत्क्षणे जायते किल ।
जन्मान्तरं समालोक्य संस्कारमाचरेद् गुरुः ॥४४॥
कुण्डान्तिके समानीय अन्नप्राशनमाचरेत् ।
अमुकस्त्वं समाभाष्य पुष्पं वह्नौ विनिक्षिपेत् ॥४५॥
इति नाम्ना तु संस्थाप्य महासंस्कारमाचरेत् ।
ततोऽपि दण्डिना देवि शिष्याय ज्ञानहेतवे ॥४६॥
शृणु शिष्य महाभाग मद्वाक्यं हृदयं कुरु ।
जन्मान्तरं तु तस्यैव पृथिव्यां नाधिकारिता ॥४७॥
मृतदेहस्वरूपोऽयं शरीरोऽयं न संशयः ।
विरतो भव सर्वत्र तोयाद्याहारचेष्टया ॥४८॥

---

१. बन्द्यः—घ. ।
२. 'पथि शेते प्रमोहितः—ग. ङ. ।

ब्रह्मणेऽपि[1] च यद्दत्तं तन्मात्रभोजनं तव ।
पञ्चतत्त्वं समासेव्यं[2] गुप्तभावेन पार्वति ॥४९॥

सदैव मानसीं पूजां सदा मानसतर्पणम् ।
त्रिसन्ध्यं मानसं यागं नाभिकुण्डे प्रयत्नतः ॥५०॥

सदैव मानसं भोगं त्यागं कुरु प्रयत्नतः ।
षड्वर्गेषु जितो भूत्वा नरो नारायणः स्वयम् ॥५१॥

भवत्येव न सन्देहो दण्डधारणमात्रतः ।
पितृवंशे सप्तदश मातृवंशे त्रयोदश ॥५२॥

कान्तायाः सप्तमश्चैव लक्ष्मीनारायणो भवेत् ।
इति श्रुत्वा वचस्तस्य शिष्यश्चैतदब्रवीद्[3] वचः ॥५३॥

यदुक्तं मयि मुक्त्यर्थं तत् करोमि निरन्तरम् ।
पञ्चतत्त्वं सदा सेव्यं कस्माद् भावाद् वदस्व मे ॥५४॥

यत्रैव वर्तते दण्डी बहुशिष्यसमावृतः ।
तत्र गत्वा प्रयत्नेन पञ्चतत्त्वविचेष्टया ॥५५॥

अथवा वीरमध्ये तु यत्नेन गमनं चरेत् ।
तत्त्वज्ञानी गृहस्थस्य सन्निधाने व्रजेत् किल ॥५६॥

सुदूरमपि गन्तव्यं यत्रास्ते कुलनायकः ।
भिक्षा कार्या न च स्वार्थं देवतायाः कृते पुनः ॥५७॥

आचार्यपत्नीं दृष्ट्वा तु भिक्षां कुर्यात् समाहितः ।
हे मातर्देहि मे भिक्षां कुण्डलीं तर्पयाम्यहम् ॥५८॥

---

१. ब्राह्मणेनैव यद्दत्तम्—ग. ङ. ।
२. सदा सेव्यं गुप्तभावे जितेन्द्रियः—ख. घ. ।
३. व्रजेद् व्रतम्—ख. ।

एवमुक्त्वा ततो दण्डी महासंस्कारमाचरेत् ।
कुण्डान्तिके[1] समानीय होमयेद् विधिपूर्वकम् ।।५९।।

ततो हुनेत् करं धृत्वा आज्यैरप्याहुतिं पुनः ।
विपरीतक्रमेणैव कुर्याद् बन्धुविशोधनम् ।।६०।।

ततः कुर्यात् प्रयत्नेन अन्तर्यज्ञोपवीतकम् ।
शिखां तस्य शिखामन्त्रैः पूगमध्ये निधापयेत् ।।६१।।

मूलेन यज्ञसूत्रं तु तस्मिन्नेव निवेशयेत् ।
घृतैश्च मृत्तिकापूगं विलिप्य शोपयेत्ततः ।।६२।।

तत्पूगं मूलमन्त्रेण दण्डमध्ये विनिक्षिपेत् ।
पूर्णाहुतिं ततो दद्यात् तत्पूगमानयेत् सुधीः ।।६३।।

सयज्ञसूत्रं सशिखं तत्पूगं प्रेषयेत् प्रिये ।
मूलमन्त्रं जपेत् तत्र गजान्तकसहस्रकम् ।।६४।।

ततश्च श्रावयेन्मन्त्रं कालिकायाश्च सुन्दरि ।
अथवा श्रावयेन्मन्त्रं तारायाश्च सुदुर्लभम् ।।६५।।

मूलमन्त्रं समुच्चार्य पूगस्यापि प्रयत्नतः ।
भक्षणे तत्फलात् साक्षाद् अन्तर्यज्ञोपवीतवान् ।।६६।।

भवत्येव न सन्देहो नरो नारायणः स्वयम् ।
विल्वदण्डं समानीय वंशस्यैकं समानयेत् ।।६७।।

ततो दण्डे न्यसेन्न्यासान् कालिकायाः प्रयत्नतः ।
जीवन्यासं ततः कृत्वा दण्डे देवीं विचिन्तयेत् ।।६८।।

विल्वदण्डस्थचैतन्यं वंशदण्डे नियोजयेत् ।
इष्टदेवीस्वरूपेण दण्डोऽयं परमेश्वरि ।।६९।।

---

१. दण्डान्तिके–ख. घ. ।

शिष्यस्य दक्षिणे हस्ते दण्डस्थापनमाचरेत् ।
कमण्डलुं समानीय वारुणं प्रजपेत् सुधीः ॥७०॥

वारुणीं निक्षिपेत्तत्र ततो मूलमनुं जपेत् ।
अष्टोत्तरशतं जप्त्वा तस्य वामकरे न्यसेत् ॥७१॥

गैरिकं[1] कपिलं वस्त्रं यत्नेन परिधापयेत् ।
दण्डधारणमात्रेण नरो नारायणो भवेत् ॥७२॥

अद्यावधि महामायां दण्डोपरि विभावयं[2] ।
कुरु पूजां महाकालीं दण्डोपरि विभावयेत् ॥७३॥

साक्षान्नारायणस्त्वं हि दयाधर्मपरो भव ।
तव माता पिता स्वामी सर्वं[4] दण्डात्मिके स्थितम् ॥७४॥

सोऽ[3]नुपद्गमनं गेहे गृहस्थस्य द्विजस्य च ।
नारायणं समाभाष्य द्वारे तस्य व्रजेत् सुधीः ॥७५॥

इति श्रुत्वा गृहस्थस्तु पुटाञ्जलिपरो भवेत् ।
द्वारे[4] च दण्डिनं दृष्ट्वा प्रणमेद् ब्राह्मणो वरः ॥७६॥

भिक्षां दद्यात् प्रयत्नेन मधु मांसं विना प्रिये ।
आदाय भिक्षां देवेशि चौरवद् गमनं चरेत् ॥७७॥

गृहस्थस्यालये चैव रात्रिवासं च कारयेत् ।
तथा हि नगरं गत्वा त्रिरात्रं वसतिं चरेत् ॥७८॥

तीर्थभूमिं ततो गत्वा सप्ताहं वसतिं चरेत् ।
ब्राह्मणो दण्डिनं दृष्ट्वा प्रणमेद् विधिपूर्वकम् ॥७९॥

---

१. गैरिकं कौपीनम्—ङ. ।
२. गैरिकमित्यतो विभावयेति यावद् नास्ति—ख. ।
३. गुरुवद् गमनम्—ग. ।
४. द्वारे चेत्यतो गमनं चरेदिति यावद् नास्ति—ख. ।

तोयपूर्णं च देवेशि किं वा शून्यकमण्डलुम् ।
दृष्टिमात्रेण तत्पात्रं पूर्णं कुर्याद् द्विजोत्तमः ॥८०॥

कुशाग्रमानं यद् बिन्दु यदि दद्यात् कमण्डलौ ।
समुद्रसमदानस्य फलं स लभते ध्रुवम् ॥८१॥

देद्यादन्नं यो मोहेन स भवेत् परमाश्रयः ।
त्रिंशद्वर्षसहस्राणि ऊपरे विटपो भवेत् ॥८२॥

इति ते कथितं दण्डिसंन्यासधारणं परम् ।
न वक्तव्यं पशोरग्रे प्राणान्तेऽपि कदाचन ॥८३॥

इति श्रीनिर्वाणतन्त्रे संन्यासविवरणं नाम
त्रयोदशः पटलः ॥

———

श्रीशङ्कर उवाच—

श्रृणु देवि प्रवक्ष्यामि अवधूतो यथा भवेत् ।
वीरस्य मूर्तिं जानीयात् सदा तपपरायणः ॥ १ ॥

यद्रूपं कथितं पूर्वं संन्यासधारणं परम् ।
तद्रूपं सर्वकर्माणि प्रकुर्यात् वीरवल्लभः ॥ २ ॥

दण्डिनां मुण्डनं चैवामावास्यायां चरेद् यथा ।
तथा नैव प्रकुर्यात्तु वीरस्य मुण्डनं प्रिये ॥ ३ ॥

असंस्कृतकेशजालमुक्तालम्बितमूर्द्धजः ।
अस्थिमालाविभूपश्च रुद्राक्षान् वापि धारयेत् ॥ ४ ॥

दिगम्बरो वीरेन्द्रश्च अथवा कौपिनी भवेत् ।
रक्तचन्दनदिग्धाङ्गः कुर्याद् भस्मविभूषणम् ॥ ५ ॥

---

१. न दद्याद्यदि मोहेन स भवेदापदाश्रयः—ग. ।

क्षमा दानं तपो ध्यानं बालभावेन शैलजे ।
शिवोऽहं भैरवानन्दः सम्मुण्डो कुलनायकः ॥ ६ ॥

एवं भावपरो मन्त्री हेतुयुक्तः सदा भवेत् ।
संविदासेवनं कुर्यात् सदा कारणसेवनम् ॥ ७ ॥

भवेत् साक्षात् स पुरुषः शम्भुरूपो न संशयः ।
निर्वाणमुक्तिमाप्नोति ब्राह्मणो वीरभावतः ॥ ८ ॥

अवधूतक्षत्रियश्च सहयोगी न संशयः ।
स्वरूपोऽपि भवेद् वैश्यः शूद्रोऽपि सहलोकवान् ॥ ९ ॥

सम्पूर्णफलमाप्नोति विप्रो निर्वाणतां व्रजेत् ।
त्रिभागफलमाप्नोति क्षत्रियो वीरभावतः ॥१०॥

पादद्वयस्य वैश्यस्य शूद्रस्य चैकपादकम् ।
ब्राह्मणस्य विनाऽन्यस्य संन्यासो नास्ति चण्डिके ॥११॥

कुर्यान्मोहेन चान्यत्र सैव पापाश्रयो नरः ।
गुप्तभावेन देवेशि शृणु मत्प्राणवल्लभे ॥१२॥

संन्यासिना सदा सेव्यं पञ्चतत्त्वं वरानने ।
द्वादशाब्दस्य मध्ये च यदि मृत्युर्न जायते ॥१३॥

दण्डं तोये विनिक्षिप्य भवेत् परमहंसकः ।
अवधूताचाररतः हंसः परमपूर्वकः ॥१४॥

सैव सानन्दविख्याता द्वादशाब्दे सरस्वती ।
अवधूतस्य चाख्यानं शृणुष्व पर्वतात्मजे ॥१५॥

वनेऽरण्ये प्रान्तरे च गिरौ च पुर एव च ।
एकस्थाने च संस्थाय इष्टध्यानादिकं चरेत् ॥१६॥

योऽमन्त्रदानतत्प्राज्ञः शरणं परिकीर्तितः ।
श्रेष्ठ[1]केशो जटाजूटः सदात्मवत् समाचरेत्[2] ॥१७॥

अन्त[3]र्यामी महावीरो ह्यवध्यः स च शैलजे ।
नानाशास्त्रेषु यो विज्ञो नानाकर्मविशारदः ॥१८॥

सदेष्टदेवीभावेन भावयेद् यो हि चाबलाम् ।
स एष भारती वीरो महाज्ञानी जितेन्द्रियः ॥१९॥

ऊर्ध्ववाहुः सदा वीरो मुक्तकेशो दिगम्बरः ।
सर्वत्र समभावो यः स च नरोत्तमो भवेत् ॥२०॥

नानादेशेषु पीठेषु क्षेत्रेषु तीर्थभूमिषु ।
भ्रमणं कुरुते नित्यं कुर्याद् यत्नेन पूजनम् ॥२१॥

देवतायाः सदा ध्यानं श्रीगुरोः पूजनं तथा ।
अन्तर्योगेषु यो निष्ठः स वीरः परिकीर्तितः ॥२२॥

अवधूताश्रमे देवि यस्य भक्तिश्च निश्चला ।
तस्य तुष्टा भवेत् काली किं न सिध्यति भूतले ॥२३॥

अवधूतं समालोक्य शम्भुं[4] ज्ञात्वा तु पूजयेत् ।
शक्तितः पञ्चतत्त्वानि यत्नेनैव निवेदयेत् ॥२४॥

अशक्तः परमेशानि भक्तितः परितोषयेत् ।
अवश्यं पूजयेद् वीरं गृहस्थः साधुरूपकः ॥२५॥

यो नार्चयति तं वीरं स भवेदापदाश्रयः ।
ब्रह्मचर्यं प्रवक्ष्यामि शृणु देवि समाहिता ॥२६॥

---

१. त्यक्तकेशो जटाजूटः सदा वातुलवत् चरेत्–ख., लम्बकेश च. ग. ङ. ।
२. इतः परम्–'इच्छादेवी विना स गिरिः परिकीर्तितः' इत्यधिकः–ग. ङ. ।
३. अन्तर्यामीत्यतोऽग्रे नास्ति–ख. ।
४. शम्भुवत् पूजनं चरेत्–ग. ङ. ।

यस्याचरणमात्रेण नरो नारायणो भवेत् ।
गैरिकं वसनं कुर्याद् देवताध्यानतत्परः ॥२७॥

फलमूलाहाररतो दुग्धं गव्यं समाहरेत्[1] ।
शाल्युद्भवं न गृह्णीयात् शूद्रानीतं तथा फलम् ॥२८॥

ऋतुकालं विना नैव स्वकान्तागमनं चरेत् ।
गृहस्थोऽपि महेशानि ब्रह्मचारी सदा गुरुः ॥२९॥

उदासीनः कदाचिद्वै गुरुकर्माधिपो भवेत् ।
तस्य शिष्यस्य कल्याणं कदाचिन्नास्ति चण्डिके ॥३०॥

नखलोमादिकं देवि न त्याज्यं ब्रह्मचारिणा ।
सर्वत्रैव दयाभावं सदैव ध्यानतत्परः ॥३१॥

त्रिशूलं धारयेच्चैकं त्रिशिखं वापि धारयेत् ।
ताम्रयुक्तञ्च रुद्राक्षं कर्णयुग्मे निवेशयेत् ॥३२॥

यद्देशे विद्यते देवि ब्रह्मचारी तपोधनः ।
तद्देशे च स्थिरा लक्ष्मीर्जायते नात्र संशयः ॥३३॥

अथ वक्ष्ये गृहस्थस्य लक्षणं शृणु चण्डिके ।
पाणौ होमश्चातिथीनां सेवनं देवपूजनम् ॥३४॥

पितृश्राद्धं कुलाचारं तत्त्वज्ञानं सदाचरेत् ।
निजकान्ता सदा पूज्या निजकान्ता हि देवता ॥३५॥

मानसं पूजनं कुर्यात् मानसं जपमाचरेत्[2] ।
मानसो हि महाधर्मो मानसे नास्ति पातकम् ॥३६॥

सर्वेषां पितृरूपोऽसौ गृहस्थः साधुरूपकः ।
सदाचाररतः श्रीमान् सदा यज्ञपरायणः ॥३७॥

---

१. जलं–क. ।
२. ततः सं जपमाचरेत्–क. ।

स्थापयेत् पञ्चतत्त्वानि गेहमध्ये प्रयत्नतः ।
तदैव सर्वसिद्धीशो भवत्येव न संशयः ॥३८॥

यस्मिन्मन्त्रे विचारोऽपि सिद्धारिगणदूषणम् ।
तत्तत् सर्वं महेशानि गृहस्थस्य सुनिश्चितम् ॥३९॥

सुविचार्य महामन्त्रं गृह्णीयात् साधकोत्तमः ।
एकाक्षरे तथा कूटे मालामुद्रादि[1] वैदिके ॥४०॥

विचारो नास्ति देवेशि स्वप्नलब्धे तथैव च ।
तथापि च गृहस्थस्य सुविचार्यो महामनुः ॥४१॥

दण्डिनो दूषणं नास्ति सर्वमन्त्रस्य दीक्षणे ।
गृहस्थाश्रममासाद्य तत्त्वज्ञानेषु योगतः ॥४२॥

स मुक्तः सर्वपापेभ्यः स च साक्षान्महेश्वरः ।
अन्नदानेन यत् पुण्यं तोयदानेन यत् फलम् ॥४३॥

तत्तत् सर्वं गृहस्थस्य नानाफलमवाप्नुयात् ।
इति ते कथितं कान्ते चतुराश्रमलक्षणम् ॥
न वक्तव्यं पशोरग्रे प्राणान्तेषु सुरेश्वरि ॥४४॥

इति निर्वाणतन्त्रे चण्डिकाशङ्करसंवादे चतुर्दशः पटलः समाप्तः ॥

---

श्रीदेवी उवाच—

त्वत्प्रसादाद् महादेव पवित्राहं न चान्यथा ।
शम्भुनाथार्चनं देव श्रोतुमिच्छामि साम्प्रतम् ॥ १ ॥

शृणु पार्वति वक्ष्यामि यन्मां त्वं परिपृच्छसि ।
नकुलीशं समुद्धृत्य मनुस्वरविभूषितम् ॥ २ ॥

---

१. मणिमन्त्रादि वैदिके–क०, मणिमन्त्रादिके शिवे–ग. ।

बिन्दुनादकलायुक्तं प्रदास्यं महामनुम् ।
वारुणमर्धवृत्तञ्च वायुललाटसंयुतम् ॥ ३ ॥

ध्येयं पञ्चाक्षरं मन्त्रं पञ्चाम्नायफलप्रदम् ।
प्रणवादि यदा देवि तदा मन्त्रं षडक्षरम् ॥ ४ ॥

प्रसादाख्यं समुद्धृत्य अर्धनारीश्वराय च ।
पूर्णप्रासादमुद्धृत्य मन्त्रं परमगोपनम् ॥ ५ ॥

एवं बहुविधाकारं विग्रहं मेनकात्मजे ।
कण्ठे तु गरलं देवि नरो नो भावयेत् क्वचित् ॥ ६ ॥

यदीच्छेदात्मनो मृत्युं यदि उन्मत्तमिच्छति ।
तदैव सहसा देवि नीलकण्ठमुपास्महे ॥ ७ ॥

त्वरदष्टञ्च मां देवि नीलकण्ठस्तवादिकम् ।
करोति कारयेद्वापि मम हत्यां करोति सः ॥ ८ ॥

अत एव महेशानि स पापिष्ठो न चान्यथा ।
निषिद्धाचरणं पापं करोति यदि मानवः ॥ ९ ॥

पुत्रदाराधनं तस्य नाशयामि न संशयः ।
कण्ठे तु गरलं देवि यदि पूजापरो भवेत् ॥१०॥

इह लोके दरिद्रः स्यान्मृते सूकरतां व्रजेत् ।
पौराणिकं तान्त्रिकं वा न पठेन्मम सन्निधौ ॥११॥

नीलकण्ठस्य यन्मन्त्रं यदि कुर्यात् पुरस्क्रियाम् ।
लक्षान्तरे तु देवेशि तस्य मृत्युर्न चान्यथा ॥१२॥

शृणु देवि प्रवक्ष्यामि पार्थिवं शिवपूजनम् ।
तत्रादौ परमेशानि गुरुदेवं नमेत् पुनः ॥१३॥

नमो हराय नमस्कारं मृत्तिकामाहरेत् सुधीः ।
महेश्वराय नमस्कारं लिङ्गं निर्माय यत्नतः ॥१४॥

शूलपाणे इहोच्चार्य सुप्रतिष्ठितो भव ।
अनेन मनुना देवि जीवन्यासं समाचरेत् ॥१५॥
सकारं बिन्दुरूपं च दीर्घयुक्तं षडक्षरम् ।
अस्य ध्यानं प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥१६॥
ध्यायेन्नित्यं महेशमित्यादि ।
पुष्पं शिरसि संधार्य मानसैः पूजनं चरेत् ।
पुनर्ध्यात्वा महेशानि शिवे पुष्पं निवेदयेत् ॥१७॥
पिनाकधृगिति चोच्चार्य इहागच्छ द्विधा वदेत् ।
इह तिष्ठ ततो द्वन्द्वं सन्निधेहि द्वयमिह ॥१८॥
इह सन्निहितो रुन्धस्वशब्दं ततो वदेत् ।
यावत् पूजां समुच्चार्य ततश्चैव करोम्यहम् ॥१९॥
स्नानीयं च पशुपतिं नियतं च नमश्चरेत् ।
वेदाद्यं योजयेद् देवि ब्राह्मणः साधकोत्तमः ॥२०॥
एतत्पाद्यं महेशानि षडक्षरमनुं ततः ।
नमस्कारं समुच्चार्य सर्वं दद्याद् विचक्षणः ॥२१॥
क्षितिं जलं तथा चाग्निं वायुं चाकाशमेव च ।
यजमानं च सोमं च सूर्य्यं च मूर्तिना सह ॥२२॥
सर्वत्र नियुतं कृत्वा पूजयेत् साधकोत्तमः ।
प्रणवादिनमोऽन्तेन वामावर्तेन पूजयेत् ॥२३॥
मूर्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेयान्ताः प्रपूज्यास्ता वेद्यां लिङ्गे शिवं जपेत् ॥२४॥
अष्टोत्तरशतं सहस्रं वा शतं वा प्रजपेत्ततः ।
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥२५॥
सिद्धिर्भवतु मे देव त्वत्प्रसादाद् मयि स्थिते ।
ततः स्तोत्रं समादाय जपं चैव समर्पयेत् ॥२६॥

मुखवाद्यं ततः कृत्वा चाष्टाङ्गैः प्रणमेत् सुधीः ।
संहारेण महादेव क्षमस्वेति विसर्जनम् ॥२७॥

एवं पूजा प्रकर्तव्या शक्तिमन्त्रान् जपेद्यदि ।
स शैव इति विख्यातः सर्वतन्त्रेश्वरो भवेत् ॥२८॥

अथातः संप्रवक्ष्यामि सूत्रं परमगोपनम् ।
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ॥२९॥

पशुपतिः शिवश्चैव महादेवेति तत्क्रमात् ।
अष्टमूर्तिस्ततो देवि पूजयेत् साधकोत्तमः ॥३०॥

ततो जपेद् महेशानि शङ्खवाद्यं ततः परम् ।
एतदन्यं प्रकर्तव्यं शक्तिदीक्षापरो यदि ॥३१॥

निषिद्धाचरणाद् देवि पापभाग् जायते नरः ।
न्यूनाधिकं महेशानि यदि पूजादिकं चरेत् ॥३२॥

सद्‌गुरुश्चापि शिष्यश्च शिवहत्यां प्रयच्छति ।
न्यूनाधिकं महेशानि यदि चैकाक्षरं भवेत् ॥३३॥

वर्णसंख्या महेशानि ब्रह्महत्या भविष्यति ।
अत एव स पापिष्ठः सत्यं सत्यं सुरेश्वरि ॥३४॥

एवं पूजां विधायादौ ततश्चान्यं प्रपूजयेत् ।
आदौ शिवं पूजयित्वा शक्तिपूजा ततः परम् ॥३५॥

यत्किञ्चिदुपचारं हि तस्य किञ्चिद् निवेदयेत् ।
अन्यथा मूत्रवत्सर्वं गङ्गातोयं भवेद्यदि ॥३६॥

अत एव महेशानि आदौ लिङ्गं प्रपूजयेत् ।
शिवस्नानोदकं देवि मूर्ध्नि संधारयेद्यदि ॥३७॥

सत्यं सत्यं महेशानि शिवतुल्यो न संशयः ।
शिवरूपः स्वयं भूत्वा देवि पूजां समाचरेत् ॥३८॥

शैववैष्णवदुर्गार्कगाणपत्येन्द्रसंभवान् ।
आदौ शिवं पूजयित्वा पश्चादन्यं प्रपूजयेत् ॥३९॥

आदौ लिङ्गं पूजयित्वा यदि चान्यं प्रपूजयेत् ।
तत्फलं कोटिगुणितं सत्यं सत्यं न संशयः ॥४०॥

अन्यदेवं पूजयित्वा शिवं पश्चाद् यजेद्यदि ।
तस्य पूजाफलं सर्वं भुज्यते यक्षराक्षसैः ॥४१॥

इति ते कथितं कान्ते तन्त्राणां सारमुत्तमम् ।
बहु किं कथ्यते देवि भूयः किं श्रोतुमिच्छसि ॥४२॥

इति श्रीनिर्वाणतन्त्रे चण्डिकाशिवसंवादे
पञ्चदशः पटलः सम्पूर्णः ।

ग्रन्थश्च समाप्तः ॥

—:०:—

ॐ नमो गणेशाय

# तोडलतन्त्रम्

श्रीदेवी उवाच—

ब्रूहि मे जगतां नाथ सर्वविद्यामय प्रभो ।
महाविद्यासु सर्वासु पूज्यासु भुवनत्रये ॥ १ ॥

एतासां दक्षिणे भागे नानारूपं पिनाकधृक् ।
पृथक् पृथक् महादेव कथयस्व मयि प्रभो ॥ २ ॥

श्रीशिव उवाच—

शृणु चार्वङ्गि सुभगे कालिकायाश्च भैरवम् ।
महाकालं दक्षिणाया दक्षभागे प्रपूजयेत् ॥ ३ ॥

महाकालेन वै सार्धं दक्षिणा रमते सदा ।
ताराया दक्षिणे भागे अक्षोभ्यं परिपूजयेत् ॥ ४ ॥

समुद्रमथने देवि कालकूटं समुत्थितम् ।
सर्वे देवाः सदाराश्च महाक्षोभमवाप्नुयुः ॥ ५ ॥

क्षोभादिरहितं यस्मात् पीतं हालाहलं विषम् ।
अत एव महेशानि [1]अक्षोभ्यः परिकीर्तितः ॥ ६ ॥

तेन सार्धं महामाया तारिणी रमते सदा ।
महात्रिपुरसुन्दर्या दक्षिणे पूजयेच्छिवम् ॥ ७ ॥

पञ्चवक्त्रं त्रिनेत्रं च प्रतिवक्त्रे सुरेश्वरि ।
तेन सार्धं महादेवी सदा कामकुतूहला ॥ ८ ॥

---

१. अक्षोभ्यम् परिकीर्तितम्—क. ख. ग. ।

अत एव महेशानि पञ्चमीति प्रकीर्तिता ।
श्रीमद्[१]भुवनसुन्दर्या दक्षिणे त्र्यम्बकं यजेत् ॥ ९ ॥
स्वर्गे मर्त्ये च पाताले या चाद्या भुवनेश्वरी ।
एतासु रमते येन त्र्यम्बकस्तेन कथ्यते ॥१०॥
सशक्तिश्च समाख्यातः सर्वतन्त्रप्रपूजितः ।
भैरव्या दक्षिणे भागे दक्षिणामूर्तिसंज्ञकम् ॥११॥
पूजयेत् परयत्नेन पञ्चवक्त्रं तमेव हि ।
छिन्नमस्तादक्षिणांशे कबन्धं पूजयेच्छिवम् ॥१२॥
कबन्धपूजनाद्देवि सर्वसिद्धीश्वरो भवेत् ।
धूमावती महाविद्या विधवारूपधारिणी ॥१३॥
वगलाया दक्षभागे एकवक्त्रं प्रपूजयेत् ।
महारुद्रेति विख्यातं जगत्संहारकारकम् ॥१४॥
[२]मातङ्गीदक्षिणांशे च मतङ्गं पूजयेच्छिवम् ।
तमेव दक्षिणामूर्तिं जगदानन्दरूपकम् ॥१५॥
कमलाया दक्षिणांशे विष्णुरूपं सदाशिवम् ।
पूजयेत् परमेशानि स सिद्धो नात्र संशयः ॥१६॥
पूजयेदन्नपूर्णाया दक्षिणे ब्रह्मरूपकम् ।
महामोक्षप्रदं देवं दशवक्त्रं महेश्वरम् ॥१७॥
दुर्गाया दक्षिणे देशे नारदं परिपूजयेत् ।
नाकारः सृष्टिकर्ता च दकारः पालकः सदा ॥१८॥
रेफः संहाररूपत्वान्नारदः परिकीर्तितः ।
अन्यासु सर्वविद्यासु [३]ऋषिर्यः परिकीर्तितः ॥१९॥
स एव तस्या भर्ता च दक्षभागे [४]प्रपूजयेत् ।

---

१. त्रिपुर–क. ख. ङ. । २. मातङ्गिनीदक्षिणांशे मातङ्गं पूजयेच्छिवम्–क. ख. ग. ।
३. ऋषिर्यस्य निगद्यते–क. ख. । ४. प्रतिष्ठितः–ङ. ।

श्रीदेवी उवाच—

या चाद्या परमा विद्या द्वितीया भैरवी परा ।
त्रैलोक्यजननी नित्या सा कथं शववाहना ॥२०॥

श्रीशिव उवाच—

या चाद्या परमेशानि स्वयं कालस्वरूपिणी ।
श्रीशिवस्य[1] हृदम्भोजे स्थिता संहाररूपिणी ॥२१॥
अत एव महाकालो जगत्संहारकारकः ।
संहाररूपिणी काली यदा व्यक्तस्वरूपिणी ॥२२॥
तदैव सहसा देवि शवरूपः सदाशिवः ।
तत्क्षणाचञ्चलापाङ्गि सा देवी शववाहना ॥२३॥

श्रीदेवी उवाच—

शवरूपो महादेव मृतदेहः सदाशिवः ।
मृतदेहं महादेव सलिलं[2] वा कथं नहि ॥२४॥

श्रीशिव उवाच—

यस्मिन् व्यक्ता महाकाली शक्तिहीनः सदाशिवः ।
शक्त्या युक्तो यदा देवि तदैव शिवरूपकः ॥
शक्तिहीनः शवः साक्षात् पुरुषत्वं न मुञ्चति ॥२५॥

इति तोडलतन्त्रे सर्वतन्त्रोत्तमोत्तमे हरगौरीसंवादे
प्रथमः पटलः ॥

—:०:—

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि योगसारं समासतः ।
ऊर्ध्वमूलमधःशाखं वृक्षाकारं कलेवरम् ॥ १ ॥

---

१. श्रीशिवस्य हृदम्भोजेति श्लोकार्धो नास्ति–क. ख. ।
२. गलितं–घ. ङ ।

ब्रह्माण्डे यानि तीर्थानि तानि सन्ति कलेवरे ।
बृहद्ब्रह्माण्डं यद्रूपं तद्रूपं क्षुद्ररूपकम् ॥ २ ॥
ब्रह्माण्डे वर्तते तीर्थं सार्द्धकोटित्रयात्मकम् ।
द्विसप्ततिसहस्राणि प्रकाशं वीरवन्दिते ॥ ३ ॥
चतुर्दशं तु तन्मध्ये तन्मध्ये त्रितयं शुभम् ।
तन्मध्ये परमेशानि महाधीरा च मुक्तिदा ॥ ४ ॥
वासुकी या महामाया भुजगाकाररूपिणी ।
सार्धत्रिवलयाकारा पातालतलवासिनी ॥ ५ ॥
सप्तस्वर्गं परेशानि क्रमेण शृणु सादरम् ।
भूर्लोकश्च भुवर्लोकं स्वर्लोकं [1]महसं तथा ॥ ६ ॥
जनलोकं तपश्चैव सत्यलोकं वरानने ।
सप्तस्वर्गमिदं भद्रे पातालं शृणु यत्नतः ॥ ७ ॥
अतलं वितलश्चैव सुतलश्च तलातलम् ।
महातलश्च पातालं रसातलमतः परम् ॥ ८ ॥
रसातलाच्च सत्यान्तं महाधीरा प्रतिष्ठिता ।
मेरुमध्यस्थिता नाडी महाधीरा च मुक्तिदा ॥ ९ ॥
[2]सत्यलोके महाविष्णुं [3]शिवं ब्रह्माण्डसंज्ञकम् ।
तस्य संदर्शनार्थाय वासुकी व्याकुला सदा ॥१०॥
स्वर्गषट्कं भेदयित्वा उत्थिता वासुकी यदा ।
सर्वाः समुद्रगामिन्य ऊर्ध्वस्रोता भवन्ति हि ॥११॥
एवं क्रमेण देवेशि [4]शरीरे नाडयः स्थिताः ।
इडा च पिङ्गला चैव सुषुम्णा [5]मध्यवर्तिनी ॥१२॥

---

१. महसंज्ञकम्—क. ख. । २. सत्यकेन—ग. च. ।
३. शिवश्चाब्रह्मसंज्ञकम्—क. ख. घ. ङ. । ४. शरीरं—क. ख. घ. ङ. ।
५. मध्यरूपिणी—च. ।

नाडीद्वयेन देवेशि [1]समीरं पूरयेद् यदि ।
ततस्तु प्राणमन्त्रेण कुण्डली च क्रमं चरेत् ॥१३॥
सहस्रारे महापद्मे नित्ये चाव्ययपङ्कजे ।
त्रासयुक्ता कुण्डलिनी प्रविशेन्नित्यमन्दिरम् ॥१४॥
सर्वाः पातालगामिन्य ऊर्ध्वस्रोता भवन्ति हि ।
[2]एतस्मिन् समये देवि वर्णमालां विचिन्तयेत् ॥१५॥
अष्टोत्तरशतं मूलमन्त्रं ज्ञानेन संजपेत् ।
आनयेत्तेन मार्गेण मूलाधारे पुनः सुधीः ॥१६॥
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ।
अथान्यत् संप्रवक्ष्यामि योनिमुद्रासनं प्रिये ॥१७॥
उपविश्यासने मन्त्री प्राङ्मुखो वाऽप्युदङ्मुखः ।
[3]जानुद्वयं कराभ्याञ्च प्रकुर्याद् दृढबन्धनम् ॥१८॥
ऋजुकायेन देवेशि आजानुनासिकां नयेत् ।
प्राणमन्त्रेण देवेशि [4]समीरं बहुयत्नतः ॥१९॥
पूरयेत् परमेशानि किञ्चिद्वायुं न रेचयेत् ।
ऋजुकायं परेशानि विपरीतं प्रयत्नतः ॥२०॥
पूर्वोक्तेनैव विधिना अष्टोत्तरशतं जपेत् ।
षट्चक्रदेवतास्तत्र संतर्प्यामृतधारया ॥२१॥
आनयेत्तेन मार्गेण मूलाधारे वरानने ।
[5]अशेषरोगशमनं योनिमुद्रासनं प्रिये ॥२२॥
बहु किं कथ्यते देवि महाव्याधिविनाशनम् ।
बहु किं कथ्यते देवि मन्त्रचैतन्यकारणम् ॥२३॥

---

१. शरीरं—क. ख. घ. ङ. । २. एतस्मिन्नन्तरे—ङ. ।
३. जानुद्वयेनेति श्लोकार्धो नास्ति—क. ङ. । ४. शरीरं—क. ख. ङ. ।
५. समस्तशोकशमनं—क. ख. ङ ।

आत्मसाक्षात्करी मुद्रा महामोक्षप्रदायिनी ।
शतवक्त्रं यदि भवेत् तदा वक्तुं न शक्यते ॥२४॥
पञ्चवक्त्रेण देवेशि किं मया कथ्यतेऽधुना ।
कुष्ठरोगविशिष्टोऽपि[1] स भवेत् कामरूपकः ॥२५॥

इति तोडलतन्त्रे द्वितीयः पटलः ॥

—:०:—

श्रीदेवी उवाच—

देवदेव महादेव संसारार्णवतारक ।
वद्धयोनिं महामुद्रां कथयस्व दयानिधे ॥ १ ॥

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि बद्धयोनिं समासतः ।
उपविश्यासने मन्त्री प्राङ्मुखो वाऽप्युदङ्मुखः ॥ २ ॥
गुदच्छिद्रे महेशानि स्वलिङ्गाग्रं निवेशयेत्[2] ।
श्रोत्रे चैव तथा नेत्रे नासायाश्च ततो मुखे ॥ ३ ॥
अङ्गुष्ठादि महेशानि क्रमेण योजयेत् सुधीः ।
नासिकायां मुखे चैव समीरं वहुयत्नतः ॥ ४ ॥
पूरयेत् परमेशानि किञ्चिदपि न रेचयेत् ।
शब्दप्रत्यक्षतां कृत्वा वर्णमालां विचिन्तयेत् ॥ ५ ॥
अष्टोत्तरशतं मूलमन्त्रं तु प्रजपेत् सुधीः ।
सोऽहंमन्त्रेण देवेशि आनयेत्तेन वर्त्मना ॥ ६ ॥
षट्चक्रदेवतास्तत्र संतर्प्यामृतधारया ।
कृते फलं महेशानि कथयिष्यामि तेऽनघे ॥ ७ ॥

---

१. कुण्ड—ग. ।
२. नियोजयेत्—घ. ङ. ।

श्रीपार्वती उवाच—

वद ईशान सर्वज्ञ सर्वतत्त्वविदांवर ।
मन्त्रमार्गेण[1] देवेश कालिकायाः[2] सुदुर्लभम् ॥ ८ ॥

श्रीशिव उवाच—

शृणु देवि सदानन्दे कालिकामन्त्रमुत्तमम् ।
यस्याः प्रसङ्गमात्रेण[3] जीवन्मुक्तो भवेन्नरः ॥ ९ ॥
शिवाद्यं विन्दुनादाढ्यं वामनेत्राग्निसंयुतम् ।
सिद्धविद्या त्वियं भद्रे विद्याराज्ञी सुदुर्लभा ॥१०॥
इदं बीजत्रयं चाद्यं गगनं विन्दुभूषितम् ।
वामश्रवणसंयुक्तं द्वन्द्वं चापरकं शृणु ॥११॥
ईशानं वह्निसंयुक्तं वामनेत्रेन्दुसंयुतम् ।
द्वितीयं परमेशानि सम्बोधनपदं ततः ॥१२॥
पुनर्वीजत्रयं कूर्चं मायाद्वन्द्वञ्च ठद्वयम् ।
द्वाविंशत्यक्षरं मन्त्रं विद्याराज्ञी[4] सुदुर्लभा ॥१३॥
वाग्भवाद्या महाविद्या श्रीकाली देवता स्मृता ।
प्रणवाद्या महाविद्या देवता सिद्धिकालिका ॥१४॥
निजवीजद्वयं कूर्चं बीजैकं परमेश्वरि ।
त्र्यक्षरी परमा विद्या चामुण्डा कालिका स्मृता ॥१५॥
एतस्याः सदृशी विद्या सिद्धिदा नास्ति सुन्दरि ।
यथा षडक्षरी विद्या तथा विद्या च त्र्यक्षरी ॥१६॥

---

१. मन्त्रमार्गं च देवेशि–ख. ग. च. ।
२. कालीविद्या सुदुर्लभा–च. ।
३. प्रसाद–ङ. ।
४. वह्नि–ग. च. ।

निजबीजत्रयं भद्रे श्मशानकालिका[1] ततः ।
पुनर्बीजत्रयं भद्रे वह्निकान्तां समुच्चरेत् ॥१७॥
चतुर्दशाक्षरी विद्या त्रिषु लोकेषु पूजिता ।
दक्षिणाकालिका सिद्धकालिका गुह्यकालिका ॥१८॥
श्रीकालिका भद्रकाली चामुण्डाकालिका परा ।
श्मशानकालिका देवि महाकालीति चाष्टधा ॥१९॥
निजबीजं महेशानि सम्बोधनपदं ततः ।
पुनश्च कालिकाबीजं ततो वह्निवधूं न्यसेत् ॥२०॥
इति चाष्टविधं मन्त्रं सर्वतन्त्रेषु गोपितम् ।

श्रीदेवी उवाच—

श्रुतं महाकालिकाया मन्त्रं परमगोपनम् ॥२१॥
तारायाः मन्त्रराजं तु श्रोतुमिच्छामि साम्प्रतम् ।
यस्याः प्रसङ्गमात्रेण[2] भवाब्धौ न निमज्जति ॥२२॥
तन्मन्त्रं वद ईशान यदि स्नेहोऽस्ति मां प्रति ।

श्रीशिव उवाच—

चन्द्रबीजं समुच्चार्य आद्यं वह्निसमागतम् ॥२३॥
वामनेत्रेन्दुसंयुक्तं मन्त्रराजमिमं प्रिये ।
एकाक्षरी[3] महाविद्या त्रिषु लोकेषु पूजिता ॥२४॥
ईशानबिन्दुसंयुक्तं वामकर्णविभूषितम् ।
एकाक्षरी महाविद्या मन्त्रराजद्वितीयकम् ॥२५॥
शिरं बिन्दुसमारूढं वामनेत्रेन्दुसंयुतम् ।

---

१. श्मशानकालिके—क. ख. ङ. ।
२. प्रसादमात्रेण—ङ ।
३. एकाक्षरीति श्लोको नास्ति—ङ. ।

आद्यबीजं द्वितीयं च अस्त्रमन्त्रं समुच्चरेत्[1] ॥२६॥
प्रणवाद्या यदा विद्या सोग्रतारा प्रकीर्तिता ।

विद्या चैकजटा[2] प्रोक्ता महामोक्षप्रदायिनी ॥२७॥
ताराख्वरहिता त्र्यर्णा महानीलसरस्वती ।

वाग्भवाद्या यदा विद्या वागीशत्वप्रदायिनी ॥२८॥
श्रीबीजाद्या महाविद्या सदा[3] लक्ष्मीप्रदायिनी ।
मायाद्या परमा विद्या सदा सिद्धिप्रदायिनी ॥२९॥
कूर्चबीजादिका चैषा शब्दराशिप्रकाशिनी ।
गगनाद्या महाविद्या निर्वाणमोक्षदायिनी ॥३०॥
प्रासादाद्या[4] महाविद्या शिवसायुज्यदायिनी ।

प्राणबीजादिका चैषा वाञ्छासिद्धिप्रदायिनी ॥३१॥
कालिकाद्या महाविद्या मुक्तिदा सिद्धिदा सदा ।

कालिकायाश्च ताराया आराधनमिहोच्यते ॥३२॥
प्रातरुत्थाय मन्त्रज्ञः सहस्रारे गुरुं यजेत् ।

षट्चक्रं भेदयित्वा तु चाष्टोत्तरशतं जपेत् ॥३३॥
ततः प्रणम्य विधिवत् स्नानकर्म समारभेत् ।

अद्येत्यादि समुच्चार्य सौरमासं समुच्चरेत् ॥३४॥
देवताप्रीतये पश्चात् स्नापयेच्छुद्धवारिणा ।

ओंकारश्च समुच्चार्य गङ्गे चेति समुच्चरेत् ॥३५॥
यमुनेति ततः पश्चाद् गोदावरि सरस्वति ।

---

१. समुद्धरेत्—ङ ।
२. वितारैकजटा—क. ख. ग. घ. ।
३. महालक्ष्मी—घ. ङ. च. ।
४. प्रासादाद्या···सिद्धिदा सदा—पर्यन्तं सार्धैकश्लोको नास्ति—ख. ।

नर्मदेति समुच्चार्य सिन्धुकावेरिसंयुतम् ॥३६॥
अस्मिन् जले च सन्निधिं कुरु शब्दमथो वदेत् ।
आनयेदङ्कुशाख्येन रविसंयुक्तमण्डलात् ॥३७॥
मुद्राचतुष्टयं देवि दर्शयेद् बहुयत्नतः[1] ।
रुद्रसंख्यं जपेन्मन्त्रमाच्छाद्य मीनमुद्रया ॥३८॥
सूर्यायाभिमुखं तोयं निःक्षिप्य रविसंख्यया ।
मूलमन्त्रं समुच्चार्य क्षालयेच्चरणद्वयम् ॥३९॥
चरणान्निःसृते तोये त्रिर्निमज्य जपेन्मनुम् ।
मूलमन्त्रं त्रिर्जप्त्वा तु मुद्रया कुम्भसंज्ञया ॥४०॥
जलादुत्थाय देवेशि तिलकं [1]कुलवर्त्मतः ।
आत्मविद्याशिवै[2]स्तत्त्वैराचामेत् पयसा ततः ॥४१॥
वह्निजायान्विता मन्त्रा विज्ञेयाः प्रणवादिकाः ।
गङ्गे चेत्यादिना देवि तीर्थमावाहनं चरेत् ॥४२॥
मूलेन दर्भया भूमौ त्रिवारं निक्षिपेत् सुधीः ।
तज्जलेन सप्तवारं आत्माभिषेकमाचरेत् ॥४३॥
अङ्गन्यासं ततः कृत्वा वामहस्ते सुरेश्वरि ।
गगनं वायुबीजञ्च वरुणं भूमिबीजकम् ॥४४॥
वह्निबीजं विन्दुयुक्तं त्रिवारं जपमाचरेत् ।
अनेन मनुना देवि तज्जलं चाभिमन्त्रितम् ॥४५॥
मूलमन्त्रं समुच्चार्य सप्तधा तत्त्वमुद्रया ।
[3]अभिषेचनमात्रेण मुच्यते सर्वपातकैः ॥४६॥
शेषं जलं महेशानि दक्षहस्ते समानयेत् ।

---

१. कुरु यत्नतः–ङ., कुलवत्ततः–क. ख. ।
२. शिवैस्तत्त्वैराचामेत् पाथसा ततः–क. ख. ।
३. आत्माभिषेकमात्रेण–घ. ङ. च. ।

इडया पूरयेत्तोयं क्षालयेद् देहमध्यगम् ॥४७॥
ततः पिङ्गलया देवि तत्तोयं तु विरेचयेत्[1] ।
कृष्णवर्णं तदुदकं पापरूपं विचिन्तयेत् ॥४८॥
पुरतो वज्रपाषाणे फट्कारेण[2] विनिक्षिपेत् ।
हस्तं प्रक्षाल्य चाचम्य प्राणायामपुरःसरम् ॥४९॥
तर्पयेत् कुलदेवञ्च सूर्यायार्घ्यं निवेदयेत् ।
देवतार्घ्यं ततः पश्चाद् गायत्रीं परमाक्षरीम् ॥५०॥
प्रणवञ्च समुद्धृत्य कालिकायै ततो वदेत् ।
विद्महे इति संलिख्य श्मशानञ्च समुद्धरेत् ॥५१॥
वासिनीं ङेयुतां देवि धीमहीति ततो वदेत् ।
तन्नो घोरे महेशानि प्रजपेत्तु प्रचोदयात् ॥५२॥
गायत्रीं प्रपठेद् धीमान् त्रिवारं जलमुत्क्षिपेत् ।
ततो जपेन्महामन्त्रं गायत्रीं परमाक्षरीम् ॥५३॥
अङ्गन्यासं ततः कृत्वा आचम्य परमेश्वरि ।
इष्टदेवीं महेशानि ध्यात्वा तु परिमण्डले ॥५४॥
ॐ तारायै विद्महे इति महोग्रायै ततो वदेत् ।
धीमहीति ततः पश्चात्ततो देवि प्रचोदयात् ॥५५॥
प्राणायामं ततः कृत्वा चाष्टोत्तरशतं जपेत् ।
सूत्राकारेण देवेशि पूजाविधिरिहोच्यते ॥५६॥
स्वस्तिवाचनसङ्कल्पं घटं संस्थाप्य यत्नतः ।
मन्त्रेणाचमनं कार्यं सामान्यार्घ्यं ततो न्यसेत् ॥५७॥
तज्जलैर्द्वारमभ्युक्ष्य द्वारपूजां समाचरेत् ।
त्रिविधं विघ्नमुत्सार्य भूतापसरणं ततः ॥५८॥

---

१. इतः परम्—'प्राणायामं ततः कृत्वा तर्पयेत् जलसर्वगम्' इत्यधिकः—घ. ।
२. हूंकारेण—ख. ।

आसनञ्च समभ्यर्च्य गुरुदेवं नमेत् सुधीः ।
करशुद्धिञ्च तालञ्च त्रयं दिग्बन्धनं ततः ॥५९॥

वह्निना वेष्टनं कार्यं भूतशुद्धिमथाचरेत् ।
मातृकायाः षडङ्गञ्च कुर्यादान्तरमातृकाम् ॥६०॥

मातृकाध्यानमु[1]च्चार्य बाह्ये तु मातृकां न्यसेत् ।
पीठन्यासं ततः कृत्वा प्राणायामं समाचरेत् ॥६१॥

ऋष्यादिकं कराङ्गञ्च वर्णन्यासं समाचरेत् ।
षोढान्यासं ततो देवि व्यापकं तदनन्तरम् ॥६२॥

एवं समाहितमनास्तत्त्वन्यासं समाचरेत् ।
बीजन्यासं ततो देवि व्यापकं विन्यसेत् सुधीः ॥६३॥

मूलेन सप्तधा ध्यानं मानसैः पूजनं चरेत्[2] ।
विशेषार्घ्यं पीठपूजां पुनर्ध्यानं सनेत्रकम् ॥६४॥

मुद्रादिदर्शनं कार्यं आवाहनषडङ्गकम् ।
धेन्वादिकं ततः प्राणप्रतिष्ठां मूलपूजनम् ॥६५॥

आज्ञाप्रार्थन[3]मङ्गानि काल्यादीन् परिपूजयेत् ।
ब्राह्म्यादीनसिताङ्गादीन् महाकालं प्रपूजयेत् ॥६६॥

खड्गादीन् गुरुपङ्क्तिं च पुनर्देवीं प्रपूजयेत् ।
बलिदानं ततो होमं प्राणायामं ततो जपम् ॥६७॥

जपं समर्पयेद्धीमान् प्राणायामं ततश्चरेत् ।
एतस्मिन् समये देवि कारणादीन् स[4]माहरेत् ॥६८॥

---

१. माचर्य–क. ख. ग. ।

२. इतः परम्–'विशेषार्घ्यं पञ्चतत्त्वमानीय शोधनं चरेत्' इत्यधिकः–क. ङ. ।

३. आज्ञाप्रार्थनं चाङ्गानि–ङ. ।

४. समाचरेत्–क. घ. ।

अर्घ्यं दत्त्वा महेशानि चात्मानञ्च समर्पयेत् ।
स्तुतिञ्च कवचं स्मृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ॥६९॥
शिवोऽहमिति सञ्चिन्त्य संहारेण विसर्जयेत् ।
ऐशान्यां मण्डलं कृत्वा चाण्डाल्युच्छिष्टपूर्विकाम् ॥७०॥
अर्घ्यं सन्धार्य शिरसि चन्दनं तु ललाटके ।
नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया ॥७१॥
संक्षेपपूजामथवा कुर्यान्मन्त्री समाहितः ।
आदौ ऋष्यादिकं न्यासं करशुद्धिस्ततः परम् ॥७२॥
अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव च ।
तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम् ॥७३॥
ध्यानं मानसयागञ्च अर्घ्यस्थापनमेव च ।
पीठपूजां पुनर्ध्यानं ततश्चावाहनं चरेत् ॥७४॥
जीवन्यासं ततः कृत्वा पूजयेत् परदेवताम् ।
अङ्गपूजाञ्च काल्यादीन् ब्राह्म्यादींश्चाष्टभैरवान् ॥७५॥
महाकालं पूजयित्वा गुरुपङ्क्तिं यजेत्ततः ।
खड्गादीन् पूजयित्वा तु पुनर्देवीं प्रपूजयेत् ॥७६॥
प्राणायामं ततः कृत्वा पूजयेत्[1] साधकाग्रणीः ।
देव्या हस्ते जपफलं समर्पणमथाचरेत् ॥७७॥
प्राणायामं ततः कृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ।
स्तुतिञ्च कवचं स्मृत्वा विशेषार्घ्यं प्रदापयेत् ॥७८॥
आत्मसमर्पणं कृत्वा संहारेण विसर्जयेत् ।
ऐशान्यां मण्डलं कृत्वा चाण्डाल्युच्छिष्टपूर्विकाम् ।
नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया ॥७९॥

इति तोडलतन्त्रे सर्वतन्त्रोत्तमोत्तमे
तृतीयः पटलः ॥

—:०:—

१. प्रजपेत्—घ. ङ. ।

देवी उवाच

श्रुता पूजा कालिकायास्तारायाा वद साम्प्रतम् ।
यस्याः प्रसङ्गमात्रेण वाचश्चित्तायते नृणाम् ॥ १ ॥

ईश्वर उवाच

शृणु चार्वङ्गि सुभगे तारायाः पूजनं महत् ।
मन्त्रेणाचमनं कृत्वा गुरुदेवं नमेत्ततः ॥ २ ॥

जलं संशोध्य हस्तौ च पादौ च क्षालयेत्ततः ।
मन्त्रेणाचमनं कृत्वा ततः पीठं विचिन्तयेत् ॥ ३ ॥

शिखां बद्ध्वा ततो देवि त्रिविधं विघ्ननाशनम् ।
भूम्यासनञ्च संशोध्य वस्त्रे ग्रन्थिं विधाय च ॥ ४ ॥

कायवाक्शोधनं कृत्वा ततः पुष्पविशोधनम् ।
यन्त्रं कृत्वा साधकेन्द्रः सामान्यार्घ्यञ्च विन्यसेत् ॥ ५ ॥

द्वारपालांश्च संपूज्य पीठपूजां समारभेत् ।
पीठशक्तीश्च लक्ष्म्याद्यास्ततः पीठमनुं जपेत् ॥ ६ ॥

भूतशुद्धिं प्रवक्ष्यामि विशेषमिह यद्भवेत् ।
कूर्चयुक्तेन हंसेन पूरकेण सुरेश्वरि ॥ ७ ॥

कुण्डल्या सह चात्मानं चतुर्विंशतिबीजकम् ।
तत्र लीनानि देवेशि परमात्मनि साधकः ॥ ८ ॥

मायया सन्दहेत् पापं पुरुषं कज्जलप्रभम् ।
कुम्भकेन वरारोहे भस्म कुर्याद् विचक्षणः ॥ ९ ॥

वधूबीजेन देवेशि भस्मना सह रेचयेत् ।
पूरकेण तु कूर्चेन ललाटेऽमृतसञ्चयम् ॥१०॥

चिन्तयेत् परमेशानि कुम्भकेनामृताम्बुधिम् ।
आं ह्रीं क्रों वह्निबीजान्तं[1] हृदि चैकादशं जपेत् ॥११॥

ततस्तु चिन्तयेद्धीमानोङ्काराद्रक्तपङ्कजम् ।
तस्योपरि पुनर्ध्यायेत् हुंकारं नीलसन्निभम् ॥१२॥

तस्योपरि पुनर्ध्यायेद्बीजभूषितकर्त्तृकाम् ।
तस्योपरि परं बिन्दुं शिवरूपञ्च अव्ययम् ॥१३॥

वालुकायाः सहस्रैकभागं बिन्दुं सुदुर्लभम् ।
बिन्दुमध्ये मणिद्वीपं शतयोजनविस्तृतम् ॥१४॥

बिन्दुमध्ये परं ज्योतिर्बुद्बुदाकारमण्डलम् ।
यथैव[2] बुद्बुदे देवि प्रतिबिम्बं प्रपश्यति ॥१५॥

तथा निरीक्षणं कार्यं प्रकुर्याज्ज्ञानचक्षुषा ।
मणिद्वीपं तु तन्मध्ये सुवर्णवालुकामयम् ॥१६॥

परितो भावयेन्मन्त्री परिखातो मनोहरम् ।
मध्ये कल्पद्रुमं ध्यायेदात्मानं तारिणीमयम् ॥१७॥

उद्यदादित्यसङ्काशं ज्योतिर्मण्डलमुत्तमम् ।
चतुर्द्वारसमायुक्तं हेमप्राकारभूषितम् ॥१८॥

बहुचामरघण्टादिदेवकन्यासुशोभितम् ।
मन्दवायुसमायुक्तं गन्धधूपैरलङ्कृतम् ॥१९॥

तन्मध्ये वेदिकां ध्यायेन्नानारत्नोपशोभिताम् ।
सुवर्णसूत्ररचितं चिन्तयेच्छत्रमुत्तमम् ॥२०॥

तदधश्चिन्तयेन्मन्त्री रत्नसिंहासनं प्रिये ।
तत्र देवीं चिन्तयेच्च यथोक्तध्यानयोगतः ॥२१॥

---

१. वह्निजायान्तं—क. घ. ङ. ।
२. यथैक—ग. च. ।

योगसारे यथोक्तैस्तु उपचारैः प्रपूजयेत् ।
प्राणायामं ततः कृत्वा ऋष्यादिन्यासमाचरेत् ॥२२॥

वर्णन्यासं ततः कृत्वा कराङ्गन्यासमाचरेत् ।
तालत्रयं छोटिकाभिर्दशदिग्बन्धनञ्चरेत् ॥२३॥

षोढान्यासं ततः कृत्वा व्यापकं तदनन्तरम् ।
विशेषार्घ्यञ्च संस्थाप्य पञ्चतत्त्वं विशोधयेत् ॥२४॥

सुधादेवीं समानीय पञ्चीकरणमाचरेत् ।
कुम्भे पुष्पं समादाय त्रिकोणे त्रिः प्रपूजयेत् ॥२५॥

वामदेहं त्रिधा चोक्त्वा खेचरीं दशधा जपेत् ।
तथा चानन्दगायत्रीं ऋचश्च त्रिर्जपेत् सुधीः ॥२६॥

ब्रह्मशापं शुक्रशापं कृष्णशापं सुरेश्वरि ।
दिग्जपान्नाशयेद्धीमान् ततो मन्त्रत्रयं जपेत् ॥२७॥

छुरिकाश्चामृतश्चैव प्रीतिसंरक्षणीं तथा ।
पावमानञ्च त्रिर्जप्त्वा शोषणादीन् समाचरेत् ॥२८॥

वारुणं त्रिर्जपेद्देवि चामृतं सप्तधा जपेत् ।
विद्यातत्त्वे धेनुमुद्रां प्रदर्श्य मूलमष्टधा ॥२९॥

कुण्डलिनीं समुत्थाप्य शिवोऽहं भावयेत्ततः ।
मांसं मीनं शोधयित्वा मुद्राशोधनमाचरेत् ॥३०॥

शक्तिञ्च कुलपुष्पञ्च शोधयेत् साधकोत्तमः ।
देवान् पितॄन् ऋषींश्चैव तर्पयेदिष्टदेवताम् ॥३१॥

शोधितं द्रव्यमादाय विशेषार्घ्ये विनिक्षिपेत् ।
ततो ब्रह्ममयं ध्यात्वा पूजाध्यानं समाचरेत् ॥३२॥

नासारन्ध्रात् समानीय पीठे[1] पुष्पं निधाय च ।
ततश्चावाहनं कृत्वा पञ्चमुद्राः प्रदर्शयेत् ॥३३॥
षडङ्गेन च संपूज्य पुनर्मुद्रां प्रदर्शयेत् ।
जीवन्यासं ततः कृत्वा उपचारैः प्रपूजयेत् ॥३४॥
षडङ्गानि च संपूज्य अक्षोभ्यं पूजयेदधः ।
गुरुपङ्क्तिं पूजयित्वा दशमूलेषु पूजयेत् ॥३५॥
महापूर्वांश्च काल्यादीन् यजेद्वैरोचनादिकान्[2] ।
पुनर्देवीं[2] प्रपूज्याथ बलिं दद्याद्विचक्षणः ॥३६॥
प्राणायामं ततः कृत्वा मन्त्रध्यानं समाचरेत् ।
जपं कृत्वा महेशानि देव्या हस्ते समर्पयेत् ॥३७॥
प्राणायामं पुनः कृत्वा तत्त्वस्वीकारमाचरेत ।
तस्मै दत्त्वा स्वयं पीत्वा प्रजपेत् साधकाग्रणीः ॥३८॥
पीत्वा पीत्वा जपित्वा च मुक्तः कोटिजनैः सह ।
प्रतिपात्रे जपेन्मन्त्रमष्टोत्तरशतं सुधीः ॥३९॥
स्तुतिश्च कवचं स्मृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ।
विशेषार्घ्यं प्रदातव्यमात्मानञ्च समर्पयेत् ॥४०॥
रुद्ररूपी स्वयं भूत्वा संहारेण विसर्जयेत् ।
योनिमुद्रां ततो बद्ध्वा क्षमस्वेति विसर्जयेत् ॥४१॥
अङ्गन्यासं महेशानि प्राणायामं ततः परम् ।
ऐशान्यां मण्डलं कृत्वा निर्माल्येन प्रपूजयेत् ॥४२॥
निर्माल्यवासिनीं ङेऽन्तां चण्डेश्वर्यै नमो नमः ।
निर्माल्यं धारयेत् शीर्षे चन्दनञ्च ललाटके ॥४३॥

---

१. पीठपूजां—च. ।

२. इतः परम्—'नायकादींश्च संपूज्य यजेत् पद्मातिकादिकान्' अधिकः—ङ. च. ।

गुरुस्थाने लिखेद् यन्त्रं विचरेद् भैरवो यथा ।
संक्षेपपूजनं देवि मानसं तत्त्ववर्जितम् ॥४४॥

अत्रोक्तमाचरेदत्र नान्यत् सञ्चारयेत्[1] सुधीः ।
अन्यत् सञ्चारणाद्देवि क्रुद्धा भवति तारिणी ॥४५॥

तत्त्वज्ञानञ्च मानञ्च शक्तिमात्रे हि पार्वति ।
इत्येतत् कथितं देवि किमन्यत् श्रोतुमिच्छसि ॥४६॥

इति तोडलतन्त्रे पार्वतीश्वरसंवादे चतुर्थः पटलः ॥

—:०:—

श्रीदेवी उवाच—

त्वत्प्रसादान्महादेव पवित्राहं न चान्यथा ।
शम्भुनाथार्चनं देव श्रोतुमिच्छामि साम्प्रतम् ॥ १ ॥

शिव उवाच—

शृणु पार्वति वक्ष्यामि यन्मां त्वं परिपृच्छसि ।
नकुलीशं समुद्धृत्य मनुस्वरविभूषितम् ॥ २ ॥

बिन्दुनादकलायुक्तं प्रासादाख्यं महामनुम् ।
अस्य मन्त्रस्य माहात्म्यं ऊर्ध्वाम्नाये मयोदितम् ॥ ३ ॥

नमस्कारं समुद्धृत्य वान्तं[2] नेत्रविभूषितम् ।
वारुणं मुखवृत्तञ्च वायुं ललाटसंयुतम् ॥ ४ ॥

अयं पञ्चाक्षरो मन्त्रः पञ्चाम्नायफलप्रदः ।
प्रणवादि यदा देवि तदा मन्त्रं षडक्षरम् ॥ ५ ॥

---

१. सञ्चरेत्–च. ।　　　२. वान्तं नेत्रविभूषितम्–क. ख. ।

प्रासादाख्यं समुद्धृत्य अर्द्धनारीश्वराय च ।
पुनः प्रासादमुद्धृत्य मन्त्रं परमगोपनम् ॥ ६ ॥

एवं बहुविधाकारं विग्रहं मे नगात्मजे ।
कण्ठे तु गरलं देवि न कलौ भावयेत् क्वचित् ॥ ७ ॥

यदीच्छेदात्मनो मृत्युं यदि उन्मत्तमिच्छति[1] ।
तदैव सहसा देवि नीलकण्ठमुपासते[2] ॥ ८ ॥

दुरदृष्टवशाद् देवि नीलकण्ठस्तवादिकम् ।
करोति कारयेद्वापि मम हत्यां करोति सः ॥ ९ ॥

अत एव महेशानि स पापिष्ठो न चान्यथा ।
निषिद्धाचरणं पापं करोति यदि पामरः ॥१०॥

पुत्रदाराधनं तस्य नाशमेति[3] न संशयः ।
कण्ठे तु गरलं देवि यदि पूजापरो भवेत् ॥११॥

इहलोके दरिद्रः स्यान्मृते शूकरतां व्रजेत् ।
नीलकण्ठस्य यन्मन्त्रं यदि कुर्यात् पुरस्क्रियाम् ॥१२॥

पक्षान्तरे महेशानि तस्य मृत्युर्न चान्यथा ।
शृणु देवि प्रवक्ष्यामि पार्थिवं शिवपूजनम् ॥१३॥

तत्रादौ परमेशानि गुरुदेवं नमेत् सुधीः ।
ॐ हराय[4] नमस्कारं मृत्तिकामाहरेत् सुधीः ॥१४॥

महेश्वराय नमस्कारं लिङ्गं निर्माय यत्नतः ।
शूलपाणे इहोचार्य सुसंप्रतिष्ठितो भव ॥१५॥

---

१. इच्छसि—ङ. ।

२. उपास्महे—क. ख. ङ. ।

३. नाशयन्ति—क. ख. घ., नाशयामि—ङ. ।

४. ॐ हराय नमस्कारमिति श्लोकार्धो नास्ति—ख. ।

अनेन मनुना देवि जीवन्यासो विधीयते[1] ।
शकारं बिन्दुसंयुक्तं दीर्घमुक्तं षडङ्गकम् ॥१६॥

तस्य[2] ध्यानं प्रवक्ष्यामि शृणुष्व सुसमाहिता ।

ॐ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।

पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥१८॥

पुष्पं शिरसि सन्धार्य मानसैः पूजनं चरेत् ।
पुनर्ध्यात्वा महेशानि शिवे पुष्पं निधाय च ॥१९॥

पिनाकधृगिति चोच्चार्य इहागच्छद्वयं वदेत् ।
इह तिष्ठ ततो द्वन्द्वं सन्निधेहि द्वयं इह ॥२०॥

इह सन्नि ततो रुद्धस्वशब्दश्च ततो वदेत् ।
यावत् पूजां समुच्चार्य ततश्चैवं करोम्यहम् ॥२१॥

स्नानीयञ्च पशुपति ङेयुक्तञ्च नमश्चरेत् ।
वेदाद्यं योजयेद्देवि ब्राह्मणः साधकोत्तमः ॥२२॥

एतत् पाद्यं महेशानि षडक्षरमनुं ततः ।
नमस्कारं समुच्चार्य सर्वं दद्याद् विचक्षणः ॥२३॥

पूजयित्वा महेशानि चाष्टमूर्तिं प्रपूजयेत् ।
शर्वो भवस्तथा रुद्र उग्रो भीमः पशोः पतिः ॥२४॥

---

१. समाचरेत्—घ. ङ. ।
२. 'तस्य ध्यानम्' इत्यत आरभ्य 'चाष्टमूर्ति प्रपूजयेत्' इत्यन्तो नास्ति—ख. ।

महादेवश्च ईशानं ङेयुतं कुरु यत्नतः ।
क्षितिं जलं तथा चाग्निं वायुं चाकाशमेव च ॥२५॥
यजमानं तथा सोमं सूर्यं[1] च मूर्तिना सह ।
सर्वत्र ङेयुतं कृत्वा पूजयेत् साधकोत्तमः ॥२६॥
प्रणवादिनमोऽन्तेन वामावर्तेन पूजयेत् ।
मूर्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ॥२७॥
आग्नेय्यान्ताः प्रपूज्याथ विद्यां लिङ्गिशिवं यजेत् ।
अष्टोत्तरसहस्रं वा शतं वा प्रजपेत्ततः ॥२८॥
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥२९॥
ततस्तोयं समादाय जपं चैव समर्पयेत् ।
मुखवाद्यं ततः कृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ॥३०॥
संहारेण महादेव क्षमस्वेति विसर्जयेत् ।
एवं पूजा प्रकर्तव्या शक्तिमन्त्रान् यजेद् यदि ॥३१॥
प्रासादादीन् महामन्त्रान् यदि दीक्षापरो भवेत् ।
शक्तिदीक्षा न कर्तव्या कदाचिदपि मोहतः ॥३२॥
स शैवं[2] इति विख्यातः सर्वतन्त्रेश्वरो भवेत् ।
अथातः संप्रवक्ष्यामि सूत्रं परमगोपनम् ॥३३॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेव इति क्रमात् ॥३४॥
अष्टमूर्तिस्ततो देवि पूजयेत् साधकोत्तमः ।
[3]ततो जपेन्महेशानि मुखवाद्यं ततः परम् ॥३५॥
एतदन्यन्न कर्तव्यं शक्तिदीक्षापरो यदि ।

---

१. 'ॐ' इत्यधिकः—घ. । २. शिव—ग. च. ।
३. ३५—३७ श्लोका न सन्ति—छ. ।

निषिद्धाचरणाद्देवि पापभाग् जायते नरः ॥३६॥
न्यूनाधिकं महादेवि यदि पूजादिकं चरेत् ।
स गुरुश्चापि शिष्यश्च शिवहत्यां प्रयच्छति ॥३७॥
न्यूनाधिकं महेशानि यदि चैकाक्षरं भवेत् ।
वर्णसंख्या महेशानि ब्रह्महत्या भविष्यति ॥३८॥
अत एव स पापिष्ठः सत्यं सत्यं सुरेश्वरि ।
एवं पूजां विधायादौ ततश्चान्यं प्रपूजयेत् ॥३९॥
आदौ शिवं पूजयित्वा शक्तिपूजा ततः परम् ।
यत्किञ्चिदुपचारं हि तस्य किञ्चिन्निवेदयेत् ॥४०॥
अन्यथा मूत्रवत् सर्वं गङ्गातोयं भवेद् यदि ।
अत एव महेशानि आदौ लिङ्गं प्रपूजयेत् ॥४१॥
शिवस्नानोदकं देवि मूर्ध्नि संधारयेद् यदि ।
सत्यं सत्यं महेशानि शिवतुल्यो न संशयः ॥४२॥
शिवरूपी स्वयं भूत्वा देवीपूजां समाचरेत् ।
शैववैष्णवदौर्गार्कगाणपत्यैन्द्रदीक्षितः ॥४३॥
आदौ लिङ्गं पूजयित्वा यदि चान्यत् प्रपूजयेत् ।
तत्फलं कोटिगुणितं सत्यं सत्यं न संशयः ॥४४॥
अन्यदेवं पूजयित्वा शिवं पश्चाद् यजेद् यदि ।
तस्य पूजाफलं चैव भुज्यते यक्षराक्षसैः ॥४५॥
इति ते कथितं कान्ते तन्त्राणां सारमुत्तमम् ।
बहु किं कथ्यते देवि भूयः किं श्रोतुमिच्छसि ॥४६॥

इति तोडलतन्त्रे पार्वतीशिवसंवादे
पञ्चमः पटलः ॥

—×—

श्रीदेवी उवाच—

श्रुतं महाकालिकाया मन्त्रं परमगोपनम्[1] ।
संक्षेपं कथितं नाथ वासनां वद मां प्रति ॥ १ ॥

श्रीशिव उवाच—

शृणु देवि महामन्त्रवासनां सर्वसिद्धिदाम् ।
यस्याः श्रवणमात्रेण मन्त्राः सिद्धा भवन्ति हि ॥ २ ॥

ककारस्योर्ध्वकोणेषु प्राणो वायुः प्रतिष्ठितः ।
अपानो वायुकोणे च समानो मध्यदेशतः ॥ ३ ॥

उदानोऽङ्कुशकोणे च मात्रायां व्यान एव च ।
वीजं तु कालिकारूपं प्रकारं शृणु पार्वति ॥ ४ ॥

कला[2]भागे जटाजूटं केशश्च परमेश्वरि ।
[3]विन्दुमस्तकभालं तु नासा नेत्रश्च पार्वति ॥ ५ ॥

श्रोत्रयुग्मं तथा वक्त्रं स्कन्दनादव्यवस्थितम् ।
चतुर्बाहुं तथा देहं स्तनद्वन्द्वं कटिद्वयम् ॥ ६ ॥

हृदयं जठरं पादं तथा सर्वाङ्गुलिः शिवे ।
ब्रह्मरूपं ककारं च सर्वाङ्गं तनुसंशयः ॥ ७ ॥

शकारं कामरूपं च योनिरूपं न चान्यथा ।
चन्द्रसूर्याग्निरूपं च रेफं परमदुर्लभम् ॥ ८ ॥

सर्वाङ्गद्योतनं तेजो जगदानन्दरूपकम् ।
बिन्दुनिर्वाणदं नादं महामोक्षप्रदं सदा ॥ ९ ॥

---

१. साम्प्रतम्—घ. ङ. ।  २. कोणभागे—ख० ।
३. 'बिन्दुमस्तक' इत्यतो नवमोल्लासपर्यन्तं नास्ति—क० ।

सर्वविघ्नहरं देवि[1] ककारं तोयरूपकम् ।
सर्वपापहरं रेफं तस्माद् वह्निर्न चान्यथा ॥१०॥

ईकारं परमेशानि शक्तिं चाव्ययरूपिणीम् ।
महामोक्षप्रदा देवी तस्मान्माया प्रकीर्तिता ॥११॥

ककारं ब्रह्मरूपं च मकारं विष्णुरूपकम् ।
रेफः संहाररूपत्वाच्छिवरूपो न चान्यथा ॥१२॥

ब्रह्मविष्णुशिवः साक्षात् ककारं परमेश्वरि ।
अनुच्चार्यं तदेव स्याद्विना मायायुतं शिवे ॥१३॥

मायायुक्तं यदा देवि तदा मुक्तिप्रदं महत् ।
अत एव महेशानि मायाशक्तिर्निगद्यते ॥१४॥

ककारं धर्मदं देवि ईकारश्चार्थदायकम् ।
रकारं कामदं कान्ते मकारं मोक्षदायकम् ॥१५॥

एकत्रोच्चारणाद्देवि निर्वाणमोक्षदायिनी ।
माहात्म्यं देवदेवेशि किं वक्तुं शक्यते मया ॥१६॥

जिह्वाकोटिसहस्रेण[2] वक्त्रकोटिशतेन च ।
जन्मान्तरसहस्रेण वर्णितुं नैव शक्यते ॥१७॥

विधिवल्लक्षजापेन पुरश्चरणमुच्यते ।
एतद्रूपं महामायां कूर्चबीजं तु सुन्दरि ॥१८॥

वाग्भवं प्रणवं देवि एतद्रूपं न संशयः ।
अग्निजायां[3] महाविद्या एतद्रूपं न संशयः ॥१९॥

---

१. नादं–ज. । २. जीवकोटि सहस्रेण–छ. ।

३. 'अग्निजाया महाविद्या' नास्ति–ङ. ।

द्रुतसिद्धिप्रदा विद्या वह्निजाया परा मनुः ।
संबोधनपदेनैव सदा सन्निधिकारिणी ॥२०॥

अथ वक्ष्ये महाविद्यापुरश्चरणमुत्तमम् ।
कथितं मन्त्रराजस्य त्रिपुरश्चरणं[1] शृणु ॥२१॥

दिवा लक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
दिव्यवीरमते देवि रात्रौ लक्षं जपेत् सुधीः ॥२२॥

अथ षडक्षरस्यास्य शृणु देवि पुरस्क्रियाम् ।
दिव्यवीरमतेनैव विंशत्येकेन पार्वति ॥२३॥

तथा च त्र्यक्षरं मन्त्रं प्रजपेत् साधकाग्रणीः ।
ध्यानपूजादिकं सर्वं समानं वीरवन्दिते ॥२४॥

एतस्याः सदृशी विद्या फलदा नास्ति योगिनि ।
सर्वमन्त्रस्य चैतन्यं शृणु पार्वति सादरम् ॥२५॥

सहस्रारे महापद्मे विन्दुरूपं परं शिवम् ।
कुण्डलिनीं समुत्थाप्य हंसेन मनुना सुधीः ॥२६॥

नासाग्रे या स्थिरा दृष्टिर्जायते परमेश्वरि ।
तदैव मन्त्रचैतन्यं कुण्डलीचक्रगं भवेत् ॥२७॥

सहस्रारे महापद्मे कुण्डल्या[2] सहितं गुरुम् ।
भावयेत् सर्वमन्त्राणां चैतन्यं जायते प्रिये ॥२८॥

तदैव प्रजपेन्मन्त्रं सिद्धिदं नात्र संशयः ।

श्रीदेवी उवाच—

इदानीं तारिणीमन्त्रवासनां वद शङ्कर ।
कालिका मोक्षदा नित्या तारिणी भववारिधौ ॥२९॥

---

१. रात्रि—ख. घ. ङ. ।

२. बिन्दुरूपं परं शिवम्—घ. ।

श्रीशङ्कर उवाच—

कलाकेशं महेशानि विन्दुमस्तकमीरितम् ।
नादश्च वक्त्रं भालश्च नासां नेत्रश्च पार्वति ॥३०॥

भुजचतुष्टयं देहं स्तनद्वन्द्वश्च वक्षसम् ।
मकारेण तु देवेशि पृष्ठं चैव कटिद्वयम् ॥३१॥

तकारेण योनिदेशं गुदं पादद्वयं तथा ।
सर्वाङ्गुलीर्नखश्चैव भावयेत् साधकोत्तमः ॥३२॥

चन्द्रसूर्यात्मकं रेफं वह्निबीजं न चान्यथा ।
सर्वा नाड्यस्तथा ज्योती रोमश्च भूषणादिकम् ॥३३॥

शकारश्च महामाया शक्तिरूपप्रकाशिनी ।
मूर्धादिपादपर्यन्तं[1] शक्तिबीजं सुदुर्लभम् ॥३४॥

अस्य मन्त्रस्य माहात्म्यं किं मया कथ्यतेऽधुना ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥३५॥

काश्यादितीर्थं देवेशि सार्धकोटिभुवात्मकम्[2] ।
पूर्णा शस्येन देवेशि सप्तद्वीपां वसुन्धराम् ॥३६॥

मेरुतुल्यसुवर्णं तु ब्राह्मणे वेदपारगे ।
सदक्षिणं व्रतं सर्वं चतुर्वेदसुविस्तरम् ॥३७॥

[3]गां चैव भूमिसंस्थं च हस्त्यश्वश्च तथैव च ।
वलिदानं महेशानि पितृयज्ञं तथैव च ॥३८॥

विहितश्च महापुण्यं यदुक्तं शास्त्रवेदिभिः ।
सकृज्जपान्महेशानि कलां नार्हन्ति षोडशीम् ॥३९॥

---

१. मूर्धन्यादि—क. ख. ग. ।

२. त्रयात्मकम्—घ. ङ. ।

३. गां चैवेति श्लोकार्धो नास्ति—घ. ।

[1] एकोच्चारेण देवेशि किं पुनर्ब्रह्म केवलम् ।
सृष्टिस्थितिलयादीनां कर्तारो नात्र संशयः ॥४०॥

सगुणं निर्गुणं साक्षात् निराकारश्च मूर्त्तिमत् ।
वैखरीयं महाविद्या वर्णाश्रिता सुनिश्चला ॥४१॥

यतो निरक्षरं वस्तु अतस्तारा प्रकीर्तिता ।
ब्रह्मविद्यास्वरूपेयं भोगमोक्षफलप्रदा ॥४२॥

जन्मकोटिसहस्रेण वर्णितुं नैव शक्यते ।
पञ्चवक्त्रेण देवेशि किं मया कथ्यतेऽधुना ॥४३॥

एकाक्षरी महाविद्या त्रिषु लोकेषु पूजिता ।
एकाक्षरीविहीनो यो मन्त्रं गृह्णाति पार्वति ॥४४॥

कल्पकोटिसहस्रेण तस्य सिद्धिर्न जायते ।
सकारो विष्णुरूपश्च तकारश्च प्रजापतिः ॥४५॥

रेफः संहाररूपत्वाच्छिवः साक्षान्न संशयः ।
या चाद्या परमा विद्या सा माया परमा कला ॥४६॥

निराकारं परं ज्योतिर्बिन्दुं चाव्ययसंज्ञकम् ।
[2] बिन्दुशब्देन शून्यं स्यात् तथा च गुणसूचकम् ॥४७॥

[3] बिन्दुचक्रामृता देवि स्रवन्ती चार्धमात्रया ।
अर्धमात्राकृतिर्नादो व्यापको विश्वपालकः ॥४८॥

[4] यथेयं वैखरी विद्या कूर्चविद्या तथैव च ।
माहात्म्यं चैव पूजायां भेदो नास्ति सुरेश्वरि ॥४९॥

---

१. एकोच्चारणाद्दे–क. ख. ग. ।
२. बिन्दुशब्देनेति श्लोकार्धो नास्ति–घ. ।
३. बिन्दुचक्रस्थिता देवि–घ. ङ. ।
४. यथेयमिति श्लोको नास्ति–घ. ।

सतारञ्च[1] तथा विन्दुं माया पञ्चाक्षरी परा ।
विभक्ते चाक्षरे चैव क्रियते मूर्तिकल्पना ॥५०॥
सार्धपञ्चाक्षरी विद्या तारिणी मूर्तिमत् स्वयम् ।
तद्रूपं पक्षिरूपं[2] हि वाग्भवञ्च हरिप्रियाम् ॥५१॥
प्रणवं कामबीजं तु गगनञ्च शिवं शिवे ।
अस्त्रबीजं तदेव स्याद् वह्निजायां सुरेश्वरि ॥५२॥
सम्बोधनपदेनैव सदा सन्निधिकारिणी ।
पञ्चाक्षरेण देवेशि तारिणी कामरूपिणी ॥५३॥
तथा पञ्चाक्षरं पश्य ब्रह्मविष्णुशिवात्मकम् ।
शक्तिरूपं निराकारं तथा पञ्चाक्षरेण तु ॥५४॥
यथा पञ्चाक्षरी विद्या तथा विद्या षडक्षरी ।
तथैव षोडशी विद्या तथा विद्या च त्र्यक्षरी ॥५५॥
तथैवाष्टाक्षरी विद्या तथा नवाक्षरी परा ।
माहात्म्यं ध्यानपूजायां भेदो नास्ति सुरेश्वरि ॥५६॥
अतिस्नेहेन देवेशि किं मया न प्रकाशितम् ।
प्राणान्तेऽपि पशोरग्रे वैखरीं न प्रकाशयेत् ॥५७॥

इति तोडलतन्त्रे पार्वतीशिवसंवादे षष्ठः पटलः ॥

---

श्रीदेवी उवाच—

महायोगमयी देवी खेचरी[3] परमा कला ।
योगज्ञानं विना सिद्धिर्नास्ति सत्यं सुरेश्वर ॥ १ ॥

---

१. सतारञ्चेति श्लोको नास्ति–घ. ।

२. पक्षबीजं–घ. ङ. ।

३. वैखरी–घ. ङ. ।

ब्रूहि मे देवदेवेश क्षुद्रब्रह्माण्डमध्यतः ।
किमाधारे स्थिता नाथ सप्तद्वीपा वसुन्धरा ॥ २ ॥

समुद्रसप्तकं नाथ किमाकारं[1] प्रतिष्ठति ।
मूलाधारे महोचक्रे संस्थिता मानवादयः ॥ ३ ॥

क्षुद्ररूपा जनाः सर्वे किमाकारेण संस्थिताः ।
स्वकीयाङ्गुलिमानेन मारुतं कथय प्रभो ॥ ४ ॥

श्रीशिव उवाच—

मूलाधारे स्थिता देवि सप्तद्वीपा वसुन्धरा ।
वलयाकाररूपेण समुद्राः सप्त संस्थिताः ॥ ५ ॥

जम्बुद्वीपं मध्यदेशे तद्बाह्ये लवणाम्बुधिः ।
शाकद्वीपं महेशानि तद्बाह्ये दधिसागरः ॥ ६ ॥

तद्बाह्ये शाल्मलीद्वीपं सागरो दुग्धतद्बहिः ।
तद्बाह्ये पाटलाद्वीपं तद्बाह्ये तु जलान्तकः[2] ॥ ७ ॥

पृथिव्यां वर्तते देवि यद्रूपा मानवादयः ।
तेन रूपेण देवेशि मूलाधारे तु जन्तवः ॥ ८ ॥

षण्णवत्यङ्गुलं देवि मारुतं परिकीर्तितम् ।
[3]मार्तण्डस्थितिमानं तु अधिकं परिकीर्तितम् ॥ ९ ॥

श्रीदेवी उवाच—

कियद् ध्रुवं तु ब्रह्माण्डं वद भूतलवासिनः ।
अङ्गुल्येकेन किं मानं कथयस्व दयानिधे ॥१०॥

---

१. किमाधारं प्रतिस्थिरम्—क. ख. ग. घ. ।

२. "ब्रह्मद्वीपं ततो देवि तद्बाह्ये चेक्षुसागरः । कुशद्वीपं ततो देवि तद्बाह्ये सागरः सुरा । क्रौञ्चद्वीपं ततो देवि तद्बाह्ये सर्पिसागरः ।" इत्यधिकः—घ. ङ. ।

३. 'मार्तण्डाङ्गुलिमानन्तु' नास्ति—ङ. च. छ. ।

श्रीशिव उवाच—

अङ्गुल्येकेन देवेशि सहस्राब्दं प्रजायते ।
षण्णवतिसहस्राब्दं भवेद् भूतलवासिनः ॥११॥

पादाङ्गुष्ठादिगुल्फान्तं प्रिये रन्ध्रसहस्रकम् ।
रन्ध्रं चन्द्रसहस्राब्दं गुल्फादिजानुसन्धिषु ॥१२॥

जान्वादिगुदपर्यन्तं मानं विंशसहस्रकम् ।
मूलाधारादिलिङ्गान्तं चतुर्वर्षसहस्रकम् ॥१३॥

लिङ्गादिनाभिपर्यन्तं[1] भवेद्वपिसहस्रकम् ।
नाभ्यादिहृदयान्तश्च ग्रहसंख्यसहस्रकम् ॥१४॥

हृदादिकण्ठपर्यन्तमृषिसंख्यसहस्रकम् ।
विशुद्धादिकमाज्ञान्तं मानं रुद्रसहस्रकम् ॥१५॥

आज्ञाचक्राच्छिवान्तं वै दिक्सहस्रं सुरेश्वरि ।
सूर्यसंख्यासहस्रं तु समीरश्चाधिकः स्मृतः ॥१६॥

शरीरसहकारेण ह्रासो वृद्धिश्च जायते ।
षड्गुणो रतिकाले च त्रिगुणो भोजनाद्बहिः ॥१७॥

धमने चाष्टधा प्रोक्तः समीरो वृद्धितां गतः ।
सद्गुरोरुपदेशेन मन्त्रमार्गेण पार्वति ॥१८॥

यदि चैकाङ्गुलं ह्रस्वं सहस्राब्दं स जीवति ।
एवं क्रमेण देवेशि समता यदि वा भवेत् ॥१९॥

जित्वा[2] मृत्युं महेशानि शम्भुवद् विहरेत् क्षितौ ।
अत एव महेशानि योनिमुद्रा मयोदिता ॥२०॥

---

१. 'लिङ्गादिनाभिपर्यन्तं' इत्यादिकं श्लोकद्वयं नास्ति–ङ. ।
२. 'जित्वा मृत्युं' इत्यादिकं श्लोकद्वयं नास्ति–ङ. ।

प्राणायामेन देवेशि तथैव योनिमुद्रया ।
तथैवाभ्यासयोगेन यदि वायुः समो भवेत् ॥२१॥

जित्वा मृत्युं महेशानि खेचरो जायतेऽचिरात् ।
प्रमाणं कथितं सर्वं मनुष्यस्य प्रियंवदे ॥२२॥
श्वासोच्छ्वासविकासेन कुण्डली गगनं चरेत् ।

श्रीदेवी उवाच—

इदानीं पृथिवीमानं वद मे परमेश्वर ॥२३॥
सप्तस्वर्गस्थितो यो यो या या शक्तिः स्थिता सदा ।
तत्सर्वं श्रोतुमिच्छामि यदि स्नेहोऽस्ति मां प्रति ॥२४॥

श्रीशिव उवाच—

मूलाधारे महीचक्रे संस्थिता मानवादयः ।
तेषां मानेन देवेशि चार्धं चैव द्विसप्ततिः ॥२५॥

द्विगुणः परमेशानि तद्बाह्ये लवणाम्बुधिः ।
एवं क्रमेण देवेशि द्विगुणं परिकीर्तितम् ॥२६॥

डाकिनीसहितो ब्रह्मा मूलाधारे तु सुन्दरि ।
राकिणीसहितो विष्णुः स्वाधिष्ठाने व्यवस्थितः ॥२७॥

लाकिनीसहितो रुद्रो मणिपूरे सुरेश्वरि ।
अनाहते महापद्मे काकिनीसहितो हरः ॥२८॥

विशुद्धाख्ये वसेन्नित्या साकिनी च सदाशिवः ।
हाकिनी परशिवो देवश्चाज्ञाचक्रे सुरेश्वरि ॥२९॥

सहस्रारे महापद्मे विश्वरूपः परः शिवः ।
महाकुण्डलिनी तत्र स्थिता नित्या सुरेश्वरि ॥३०॥

श्रीदेवी उवाच—

कुत्र मूले महापीठे वर्त्तते परमेश्वर ।
मूलाधारादधोभागे पातालं कीदृशं प्रभो ॥३१॥

श्रीशिव उवाच—

मूलाधारे कामरूपं हृदि जालन्धरं प्रिये ।
पूर्णगिरिमधोभागे उड्डीयानं तदूर्ध्वके ॥३२॥

वाराणसी भ्रुवोर्मध्ये ज्वलन्ती लोचनत्रये ।
मायावती सुखवृत्ते कण्ठे चाष्टपुरी तथा ॥३३॥

नाभिमूले महेशानि अयोध्यापुरी संस्थिता ।
काञ्चीपीठं कटीदेशे श्रीहट्टं पृष्ठदेशके ॥३४॥

[1]मूलाधारात् शतं चैव अतलं परिकीर्त्तितम् ।
सुतलञ्च वर्षशतं तलातलशतं प्रिये ॥३५॥

ऋषिबाणेन्दुवर्षान्तं संस्थितं च महातलम् ।
शतद्वयान्तं पातालं द्विशतं वै रसातलम् ॥३६॥

मूलाधाराच्च देवेशि द्व्यङ्गुली चान्तिके स्थिते ।
तयोर्मध्ये च पातालास्तिष्ठन्ति परमेश्वरि ॥३७॥

इति ते कथितं कान्ते योगसारं समासतः ।
न वक्तव्यं पशोरग्रे प्राणान्तेऽपि कदाचन ॥३८॥

इति तोडलतन्त्रे पार्वतीशिवसंवादे
सप्तमः पटलः ॥

—:०:—

---

१. वितलं परमेशानि खबाणेन्दुशतादधः—घ. ङ. ।

श्रीदेवी उवाच—

सार्धत्रिकोटिनाडीनामालयं च कलेवरम् ।
क्रमेण श्रोतुमिच्छामि तद् वदस्व मयि प्रभो ॥ १ ॥

श्रीशिव उवाच—

लोम्नि कूपे सपादार्धकोटयश्चैव सुन्दरि ।
हस्तास्ये च तदा पादेऽग्निलक्षनाडयः स्थिताः ॥ २ ॥
उदरे च तथा पायौ पञ्चलक्षाः प्रकीर्तिताः ।
हृदादिसर्वगात्रेषु नवलक्षाः प्रकीर्तिताः ॥ ३ ॥
अथ पार्श्वे तथा चर्मे तथैव सर्वसन्धिषु ।
रुद्रान्न्यूनं स्थितं लक्षं शरीरे नाडयः प्रिये ॥ ४ ॥
इडा च पिङ्गला चैव सुषुम्ना चित्रिणी तथा ।
ब्रह्मनाडी च तन्मध्ये पञ्चनाड्यः प्रकीर्तिताः ॥ ५ ॥
कूहूश्च शङ्खिनी चैव गान्धारी हस्तिजिह्विका ।
नर्दिनी च तथा निद्रा रुद्रसंख्या व्यवस्थिता ॥ ६ ॥
एता नाड्यः परेशानि सुषुम्नायाः प्रजायते ।

श्रीदेवी उवाच—

वेदाक्षिवसुरन्ध्रास्तु बाणसंख्यजलान्तकाः ।
किमाधारे पद्ममध्ये संस्थिताः परमेश्वर ॥ ७ ॥

श्रीशिव उवाच—

योगपद्मस्य माहात्म्यं मया वक्तुं न शक्यते ।
मूलाधारे पद्ममध्ये लंबीजं चातिशोभनम् ॥ ८ ॥

---

१. "रोमकूपे सपादे च कोटिबाह्याश्च सुन्दरि ।
सहस्रास्ये तथा पादे दिग्लक्षा नाडयः स्थिताः ॥
तदधश्च तथा पायौ पञ्चलक्षाः प्रकीर्तिताः ।" इत्यधिकः–ङ. ।

लंबीजस्य बिन्दुमध्ये पृथ्वीचक्रं मनोहरम् ।
वलयाकाररूपेण समुद्राः सप्तकाः स्थिताः ॥ ९ ॥

श्रीदेवी उवाच—

बिन्दुमानं महादेव कथयस्व मयि प्रभो ।
क्रमेण योगपद्मस्य प्रमाणं वद शङ्कर ॥१०॥

श्रीशिव उवाच—

परमाणुत्रिभागैकभागं बिन्दुं सुविस्तरम् ।
तन्मध्ये सागराः सर्वे सप्तद्वीपा वसुन्धरा ॥ ११ ॥

अव्ययं परमं सूक्ष्मं विन्दुरूपं परं शिवम् ।
प्रमाणं चास्य देवस्य किं वक्तुं शक्यते मया ॥१२॥

ब्रह्मलोकं परेशानि नादोपरि विचिन्तयेत् ।
डाकिनीसहितो ब्रह्मा तथैव निवसेत् सदा ॥१३॥

लकारं पार्थिवं बीजं शक्तिरूपं सुरेश्वरि ।
पृथ्वीचक्रस्य मध्ये तु स्वयंभूलिङ्गमद्भुतम् ॥१४॥

सार्द्धत्रिवलयाकारकुण्डल्या वेष्टितं सदा ।
लिङ्गच्छिद्रं[1] स्ववक्त्रेण कुण्डल्याच्छाद्य संस्थिता ॥१५॥

तेनैव वर्तते वायुरिडापिङ्गलयोः सदा ।
सहस्रारदर्शनाय सदा जाग्रत्स्वरूपिणी ॥१६॥

यदैव ब्रह्ममार्गेण सहस्रारे समुत्थिता ।
तदैव परमेशानि श्वासोच्छ्वासविकाशनम् ॥१७॥

केशरस्य तु मध्ये च चतुःपत्रे सुरेश्वरि ।
अनन्तरूपिणी दुर्गा शम्भुश्चानन्तरूपधृक् ॥१८॥

---

१. 'लिङ्गच्छिद्रं' इत्यादिकं श्लोकद्वयं नास्ति–घ. ।

नानासुखविलासेन सदा कामेन वर्तते ।

श्रीदेवी उवाच—

लिङ्गच्छिद्रं समाकृष्य संस्थिता कुण्डली कथम् ॥१९॥
कथयस्व सदानन्द सर्वज्ञस्त्वं सुरेश्वर ।

श्रीशिव उवाच—

लिङ्गमध्ये महत्तेजो वह्निरूपश्च सुन्दरि ॥२०॥

यत्किञ्चिद्वायुयोगेन ब्रह्माण्डो दह्यते यतः ।
अतः सा कुण्डली देवी मुखेनाच्छाद्य संस्थिता ॥२१॥

तेनैव पार्थिवे लिङ्गे बिन्दुशक्तिं नियोजयेत् ।
बिन्दुशक्तिं समुत्थाप्य लिङ्गपूजा प्रकीर्तिता ॥२२॥

इति तोडलतन्त्रे पार्वतीशिवसंवादे
अष्टमः पटलः ॥

———

श्रीदेवी उवाच—

त्रिपुराया महामन्त्रं नित्यातन्त्रे श्रुतं मया ।
इदानीं श्रोतुमिच्छामि नवार्णस्य च वासनाम् ॥ १ ॥

श्रीशिव उवाच—

भूमिश्चन्द्रः शिवो माया शक्तिः कृशानुसादनौ ।
अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ॥ २ ॥

भूमिबीजजपादेव भूपतिर्जायतेऽचिरात् ।
चन्द्रबीजजपादेव महासौन्दर्यमाप्नुयात् ॥ ३ ॥

---

१. कृष्णत्वमाददौ- ङ., कृष्णाध्वमानदौ–घ. ।

शिवबीजजपादेव शिववद्विहरेत् क्षितौ[1] ।
एकत्रोच्चारणात् सत्यं चतुर्वर्गफलप्रदम्[2] ॥ ४ ॥

श्रीदेवी उवाच—

यत्त्वया कथितं नाथ योगज्ञानादिकं लयम् ।
यावत् कामादि संदीप्यो[3] भावयोगो न लभ्यते ॥ ५ ॥
ऊर्ध्वरेता महायोगी तदधः शक्तियोगतः ।
ब्रूहि मे जगतांनाथ कथं दीर्घायुषं भवेत्[4] ॥ ६ ॥

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि येन दीर्घायुषं भवेत् ।
श्रुत्वा गोपय यत्नेन न प्रकाश्यं कदाचन ॥ ७ ॥
पूजयेत् कालिकां देवीं तारिणीं वाथ सुन्दरीम् ।
षोडशेनोपचारेण पञ्चतत्त्वेन पार्वति ॥ ८ ॥
दिनत्रयं पूजयित्वा षट्चक्रं चिन्तयेदथ ।
ततस्तु परमेशानि मालामन्त्रं समभ्यसेत् ॥ ९ ॥
षोडशीं वा महापूर्वां पत्रे चाभ्यासमाचरेत् ।
चतुःपत्रे चाष्टवारं षट्पत्रे द्वादशं जपेत् ॥१०॥
दशपत्रे विंशतिं च द्वादशे वेदनेत्रकम् ।
षोडशे दशसंख्यं तु चतुर्वारं भ्रुवोऽष्टकम् ॥११॥

---

१. "मायाबीजजपादेव सर्वमायायुतो भवेत् ।
अर्धचन्द्रप्रसादेन महामोक्षमवाप्नुयात् ॥
बिन्दुनिर्वाणदं साक्षान्निर्वाणपदमीयते ।" इत्यधिकः—घ. ङ. ।
२. फलं लभेत्— घ. ङ. ।
३. दीप्येत तावद् योगो—घ. ङ. ।
४. "ख" मातृकाऽवसिताऽत्र ।

कुम्भकेन जपेन्मन्त्रं मालापट्के सुरेश्वरि ।
एवं क्रमेण देवेशि स्थिरमायुर्यदा भवेत् ॥१२॥
प्रजपेदक्षमालायां येन मृत्युञ्जयो भवेत् ॥

श्रीदेवी उवाच—

मूलचक्राच्छिरोऽन्ता च सुषुम्ना परिकीर्त्तिता ।
तद्गर्भस्था च या शक्तिः सा देवी कुण्डरूपिका ॥१३॥
सदा कुण्डलिनी देवी पञ्चाशद्वर्णभूषिता ।
मालारूपा कथं देव इति मे संशयो हृदि ॥१४॥

श्रीशिव उवाच—

सहस्रारे महापद्मे बीजकोषे शिवालये ।
हंसेन वायुयोगेन पूरकेण समानयेत् ॥१५॥
सहस्रारं तु संप्राप्य शिवं दृष्ट्वा तु कामिनी ।
मा[1]लाकारेण तल्लिङ्गं संवेष्ट्य कुण्डली सदा ॥१६॥
अकारादिलकारान्ता क्षकारं वक्त्रसंयुतम् ।
चरमार्णं सरन्ध्रञ्च निजपुच्छेन कामिनी ॥१७॥
भेदयित्वा स्वपुच्छेन नागपाशं तदूर्ध्वके ।
एतत्कारणं संव्याप्य संस्थिता कुण्डली यदा ॥१८॥
तदैव प्रजपेन्मन्त्रं अमरत्वं स विन्दति ।
रेचनात् कामिनी देवी प्रविशन्ती स्वकेतनम् ॥१९॥
न तत्र प्रजपेन्मन्त्रं जपान्मृत्युमवाप्नुयात् ।
रेचके छिन्नमालायां सत्यं हि सुरवन्दिते ॥२०॥

---

१. मालाकारेणारभ्य कामिनीपर्यन्तं नास्ति–घ. ।

छिन्ने सूत्रे भवेन्मृत्युः पुरैव कथितं मया ।
इति ते कथितं कान्ते यतो मृत्युञ्जयो भवेत् ॥२१॥

अथवा निजनासाग्रे दृष्टिमारोप्य यत्नतः ।
वायुं सन्धार्य यत्नेन ऐकोचारेण[1] चोच्चरेत् ॥२२॥

मालामन्त्रं षोडशीं वा तथा चाष्टादशाक्षरीम् ।
सहस्रं प्रजपेन्मन्त्रं प्रत्यहं यदि पार्वति ॥२३॥

जित्वा मृत्युं जरां रोगं दीर्घकालं स जीवति ।
एतदन्यं महायोगं[2] भोगार्थी नहि लभ्यते ॥२४॥

अथवा परमेशानि डामरोक्तविधानतः ।
यजेत् कात्यायनीं देवीं भूतपूर्वां प्रयत्नतः ॥२५॥

तदा पञ्चसहस्राब्दं निश्चितं तु स जीवति ।
इति ते कथितं सर्वं देहरक्षणकारणम् ॥२६॥

न[3] भोगी भोगमाप्नोति योगी योगो न लभ्यते ।
एतत्तत्त्वेन देवेशि भोगो योगायते ध्रुवम् ॥२७॥

श्रीदेवी उवाच—

यन्मालायां जपेनैव किं फलं लभते नरः ।
पृथक् पृथङ् महादेव पत्रमालाफलं वद ॥२८॥

श्रीशिव उवाच—

भूमिकामी जपेन्मन्त्रं मूलाधारे चतुष्टये ।
स्वाधिष्ठाने जपादेव महेन्द्रो जायतेऽचिरात् ॥२९॥

मणिपूरे जपादेव भवेत् स्वर्गस्य भाजनम् ।
अनाहते महापद्मे जपाद् ब्रह्मपुरं व्रजेत् ॥३०॥

---

१. एकोच्चारण–घ. ङ. ।　　　२. महारोगं–घ. ङ. ।

३. न योगी भोगमाप्नोति भोगी योगो न लभ्यते–ङ.,
न योगी भोगमाप्नोति न योगी योगमाप्नुयात्–घ. ।

विशुद्धाख्ये जपादेव विष्णुलोके वसेद् ध्रुवम् ।
आज्ञाचक्रे च जप्तव्ये श्वेतद्वीपे[1] वसेत् सदा ॥३१॥

यन्माला परमेशानि वाह्यमाला प्रकीर्त्तिता ।
अन्तर्माला महामाला पञ्चाशद्वर्णरूपिणी ॥३२॥

माहात्म्यं तस्य देवेशि किं वक्तुं शक्यते मया ।
सहस्रारे स्थिरीभूय यदि चाष्टशतं जपेत् ॥३३॥

तत्फलात् कोटिभागैकं भागं चान्येन विद्यते ।
पृथिव्यामव्ययो देहो भवत्येव न संशयः ॥३४॥

यन्मालायां जपेन्मन्त्रमभ्यासार्थं हि पार्वति ।
इति ते कथितं देवि चिरजीवी यथा भवेत् ॥३५॥

इदानीं परमेशानि भूतकात्यायनीं शृणु ।
वेदाद्यं शब्दबीजञ्च महामायां ततः परम् ॥३६॥

अस्त्रयुग्मं वह्निजाया मनुः सप्ताक्षरः परः ।
श्रीशिवोऽस्य ऋषिः प्रोक्तो विराट् छन्द उदाहृतम् ॥३७॥

भूतकात्यायनी देवी धर्मार्थकामदा सदा ।
प्रणवेन षडङ्गञ्च प्राणायामञ्च सुन्दरि ॥३८॥

ध्यानमस्याः प्रवक्ष्यामि शृणु सुन्दरि सादरम् ।
गौरवर्णां मुक्तकेशीं सर्वाभरणभूषिताम् ॥३९॥

पट्टवस्त्रपरीधानां सदा घूर्णितलोचनाम् ।
वामपाणौ रक्तपूर्णखर्परं दक्षिणे करे ॥४०॥

१. तत्त्वद्वीपे—क. ख. ग. ।

मद्यपूर्णस्वर्णपात्रां ग्रीवायां हारभूषिताम् ।
शरच्चन्द्रसमाभासां पादाङ्गुलिविराजिताम् ॥४१॥

एवं तां वरदां नित्यां भावयेत् सिद्धिहेतवे ।
सामान्यार्घ्यं ततो देवि स्ववामे विन्यसेत्ततः ॥४२॥

जीवन्यासादिकं कृत्वा पूजयेत् परमेश्वरीम् ।
षोडशेनोपचारेण पञ्चतत्त्वेन सुन्दरि ॥४३॥

यजेत्तां बहुयत्नेन गृहमध्ये दिनत्रयम् ।
ततो जपेन्महामन्त्रं गजान्तकसहस्रकम् ॥४४॥

ततश्च पूजयेद् देवीं शून्यागारे दिनत्रयम् ।
प्रत्यहं प्रजपेन्मन्त्रं गजान्तकसहस्रकम् ॥४५॥

एवं कृते महेशानि यदि सिद्धिर्न जायते ।
ततश्च प्रजपेन्मन्त्रं पितृभूमौ दिनत्रयम् ॥४६॥

ततः सिद्धिर्भवेद् देवि सत्यं सत्यं हि सुप्रिये ।
तद्वाक्यं प्रार्थनावाक्यं डामराख्ये मयोदितम् ॥४७॥

इति श्रीतोडलतन्त्रे पार्वतीशिवसंवादे
नवमः पटलः ॥

—:०:—

श्रीदेवी उवाच—

काकीचञ्चुं महामुद्रां कथयस्व दयानिधे ।
येन रूपेण देवेश देहासनपरो भवेत् ॥१॥

श्रीशिव उवाच—

अनाकुलेन देवेशि जिह्वां परमयत्नतः ।
तालुमूले न्यसेत् पश्चात् ततो वायुं पिबेत् शनैः ॥२॥

दन्तैर्दन्तान् समापीड्य काकीचञ्चुं समभ्यसेत् ।
वहुयोन्युक्तविधिना सर्वकर्माणि साधयेत् ॥३॥

अथातः संप्रवक्ष्यामि स्वल्पयोनिं शृणु प्रिये ।
गुदच्छिद्रे दक्षगुल्फं सन्धौ लिङ्गं विनिक्षिपेत् ॥४॥

नाभिरन्ध्रेऽथवा गुल्फं धारयेद् वामहस्तके ।
वहुयोन्युक्तविधिना चान्यत् सर्वं समापयेत् ॥५॥

मुद्रा चैतन्यतन्त्रे च माहात्म्यं कथितं मया ।
यथा हेमगिरिर्देवि यथा वेगवती नदी ॥६॥
चन्द्रादिकं यथा देवि चिरजीवी तथा भवेत् ।

श्रीदेवी[1] उवाच—

दशावतारं देवेश ब्रूहि मे जगतां गुरो ॥७॥
इदानीं श्रोतुमिच्छामि कथयस्व सुविस्तरात् ।
का वा देवी कथंभूता वद मे परमेश्वर ॥८॥

श्रीशिव उवाच—

तारा देवी नीलरूपा बगला कूर्ममूर्त्तिका ।
धूमावती वराहं स्यात् छिन्नमस्ता नृसिंहिका ॥९॥

भुवनेश्वरी वामनः स्यान्मातङ्गी राममूर्त्तिका ।
त्रिपुरा जामदग्न्यः स्याद् बलभद्रस्तु भैरवी ॥१०॥

---

१. श्रीदेवी उवाच इत्यतो मे पुरा तवपर्यन्ते नास्ति—क. घ. ङ. ।

महालक्ष्मीर्भवेत् बुद्धो दुर्गा स्यात् कल्किरूपिणी ।
स्वयं भगवती काली कृष्णमूर्त्तिः समुद्भवा ॥११॥

इति ते कथितं देव्यवतारं दशमेव हि ।
एतासां पूजनाद् देवि महादेवसमो भवेत् ॥१२॥
आसां ध्यानादिकं सर्वं कथितं मे पुरा तव ।

इति श्रीतोडलतन्त्रे पार्वतीशिवसंवादे
दशमः पटलः सम्पूर्णः ।
समाप्तं तोडलतन्त्रम् ॥

—:०:—

ॐ नमः परदेवतायै

# कामधेनुतन्त्रम्

श्रीपार्वती[1] उवाच—

देवदेव महादेव सर्वागमविशारद ।
अधुना देव[2]देवेश पञ्चाशद्वर्णमुत्तमम् ॥ १ ॥

तत्त्वरूपं महादेव कथयस्व दयानिधे ।
कृपया कथयेशान यद्यहं तव वल्लभा ॥ २ ॥

श्रीमहादेव उवाच—

अधुना संप्रवक्ष्यामि रहस्यम[3]तिगोपनम् ।
येन विज्ञातमात्रेण जीवन्मुक्तो भवेन्नरः ॥ ३ ॥

अज्ञात्वा म[4]न्त्रतत्त्वानि महाविद्यां जपेत्तु यः ।
सर्वं तस्य वृथा देवि किं तस्य जपपूज[5]नैः ॥ ४ ॥

[6]ध्यानावधारणे चैव तथा योगसमाधिना ।
वर्णज्ञानं यदा नास्ति किं तस्य जपपूजनैः ॥ ५ ॥

म[7]म क[8]ण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम् ।
नानावर्णयुतं शुद्धं तन्त्राणां सारमुत्तमम् ॥ ६ ॥

पञ्चाशन्मातृकां देवीं ना[9]नाविद्यामयीं सदा ।
नानाविद्यामयीं देवीं महाविद्यामयीं तथा ॥ ७ ॥

---

१. देव्युवाच—ख. ग. । २. वद—ख. ।
३. मिति—ख. । ४. वर्ग—क. ख. घ. ।
५. पूजने—घ. । ६. ध्याने च धारणे चैव—क. ख. ।
७. किं कण्ठे—ख. । ८. कल्प—क ।
९. नाना सुखविलासिनीम्—क. ख., महाविद्यामयीं तथा—घ. ।

सर्ववर्णमयीं देवीं सर्वदेवमयीं पराम् ।
सर्वदेवमयीं सौम्यां ब्रह्माण्डजननीं पराम् ॥ ८ ॥
प्रणम्य बहुधा भक्त्या निगदामि शृणु प्रिये ।
अकारादिक्षकारान्ता मातृका बीजरूपिणी ॥ ९ ॥
विसर्गश्चैव बिन्दुश्च त्रिशक्तिर्ब्रह्मविग्रहः[1] ।
वर्णात्तु जायते ब्रह्मा तथा विष्णुः प्रजायते ॥१०॥
रुद्रश्च जायते देवि जगत्संहारकारकः ।
मम कण्ठस्थिता[2] या सा शारदा वामलोचना ॥११॥
तस्या गर्भस्थिता देवि बीजानि विविधानि च ।
विधृत्य[3] कण्ठदेशे तु शिवोऽहं कमलानने ॥१२॥
शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोषमयं सदा ॥१३॥
पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम् ।
निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्त्तिमान् ॥
बिन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणी[4] ॥१४॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
प्रथमः पटलः ॥

---

श्रीमहादेव उवाच—

ओंकारं[5] परमाश्चर्यं शङ्खज्योतिर्मयं प्रिये ।
[6]ब्रह्मविष्णुमयं वर्णं तथा रुद्रं स्वयं प्रिये ॥ १ ॥

---

१. बहु—ख. ।   २. कण्ठे—ख. घ. ।
३. विधाय कण्ठदेशेऽयं शिवोऽहं कञ्जलोचने—ख. । ४. रूपधृक्—घ. । ५. अकारं—ख ।
६. ब्रह्मविष्णुमयं वर्णं परमात्ममयं तथा—ख. ।
ब्रह्मविष्णुमयो वर्णस्तथा रुद्रमयःसदा—घ. ।

पञ्चप्राणमयं वर्णं[1] स्वयं परमकुण्डली ।
इकारं[2] परमानन्दं सुगन्धकुसुमच्छविम् ॥ २ ॥

हरिब्रह्ममयं वर्णं सदा रुद्रयुतं प्रिये ।
सदा शक्तिमयं देवि गुरुब्रह्म स्वयं तथा ॥ ३ ॥

सदाशिवमयं वर्णं परंब्रह्म समन्वितम् ।
हरिब्रह्मात्मकं वर्णं गुणत्रयसमन्वितम् ॥ ४ ॥

इकारं परमेशानि मूर्त्तिर्वै कुण्डली स्वयम् ।
ईकारं परमेशानि स्वयं परमकुण्डली ॥ ५ ॥

ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं सदा ।
पञ्चदेवमयं वर्णं पीतविद्युल्लताकृतिम् ॥ ६ ॥

चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा ।
उकारं परमेशानि तारं[3] कुण्डलिनी स्वयम् ॥ ७ ॥

पीतचम्पकसंकाशं पंचदेवमयं सदा ।
पञ्चप्राणमयं[4] देवि चतुर्वर्गप्रदायकम् ॥ ८ ॥

अकारं देवदेवेशि बीजं परमदुर्लभम् ।
शङ्खकुन्दसमाकारं स्वयं परमकुण्डली ॥ ९ ॥

पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ।
पञ्चप्राणयुतं वर्णं तथा त्रयगुणात्मकम् ॥१०॥

बिन्दुत्रययुतं वर्णं पीतविद्युल्लता यथा[5] ।
धर्मार्थकाममोक्षं च सदा सुखप्रदायकम् ॥११॥

---

१. पञ्चदेवमयो वर्णः—घ. ।

२. इकारं परमेशानि सुगन्धकुसुमच्छविः—घ. ।

३. अधः—ख. घ. ।

४. पञ्चप्राणसमायुक्तो घ. ।

५. तथा—क. ग. ।

ऋकारं परमेशानि कुण्डली मूर्त्तिमान् स्वयम् ।
अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने ॥१२॥

सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम् ।
पञ्चप्राणमयं वर्णं चतुर्ज्ञानमयं सदा ॥१३॥

रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम् ।
ॠकारं परमेशानि स्वयं परमकुण्डली ॥१४॥

पीतविद्युल्लताकारं पञ्चदेवमयं सदा ।
चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा ॥१५॥

त्रिशक्तिसहितं वर्णं प्रणमामि सदा प्रिये ।
ऌकारं चञ्चलापाङ्गि कुण्डली परदेवता ॥१६॥

अत्र ब्रह्मादयः सर्वे तिष्ठन्ति सततं प्रिये ।
पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा ॥१७॥

पञ्चप्राणयुतं वर्णं तथा[1] गुणत्रयात्मकम् ।
बिन्दुत्रयात्मकं वर्णं पीतविद्युल्लता यथा[2] ॥१८॥

ॡकारं परमेशानि पूर्णचन्द्रसमप्रभम् ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं सदा ॥१९॥

गुणत्रयात्मकं वर्णं तथा बिन्दुत्रयात्मकम् ।
चतुर्वर्गप्रदं[3] देवि स्वयं परमकुण्डली ॥२०॥

एकारं परमं दिव्यं ब्रह्मविष्णुशिवात्मकम् ।
बन्धूककुसुमप्रख्यं पञ्चदेवमयं सदा ॥२१॥

---

१. तथा—क. ख. ।
२. तथा—क. ग. ।
३. प्रदा—घ. ।

पञ्चप्राणात्मकं वर्णं तथा बिन्दुत्रयात्मकम्।
चतुर्वर्गप्रदं देवि स्वयं परमकुण्डली ॥२२॥

इति श्रीकामधेनुतन्त्रे द्वितीयः पटलः ॥

—:०:—

ऐकारं परमं दिव्यं महाकुण्डलिनी स्वयम्।
कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा ॥ १ ॥

ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये।
सदाशिवमयं वर्णं बिन्दुत्रयसमन्वितम् ॥ २ ॥

ओकारं चञ्चलापाङ्गि पञ्चदेवमयं सदा।
रक्तविद्युल्लताकारं त्रिगुणात्मानमीश्वरम् ॥ ३ ॥

पञ्चप्राणमयं वर्णं नमामि देवमातरम्।
एतद्वर्णं महेशानि स्वयं परमकुण्डली ॥ ४ ॥

रक्तविद्युल्लताकारं औकारं कुण्डली स्वयम्[1]।
अत्र ब्रह्मादयः सर्वे तिष्ठन्ति सततं प्रिये ॥ ५ ॥

पञ्चप्राणमयं वर्णं सदाशिवमयं सदा।
सदा ईश्वरसंयुक्तं चतुर्वर्गप्रदायकम् ॥ ६ ॥

अंकारं बिन्दुसंयुक्तं पीतविद्युत्समप्रभम्।
पञ्चप्राणात्मकं वर्णं ब्रह्मादिदेवतामयम् ॥ ७ ॥

सर्वज्ञानमयं वर्णं बिन्दुत्रयसमन्वितम्।
शक्तित्रयमयं वर्णं स्वयं[2] परमकुण्डली ॥ ८ ॥

---

१. परा–ख.।
२. बिन्दुत्रयसमन्वितम्–घ.।

अःकारं परमेशानि विसर्गसहितं सदा ।
अःकारं परमेशानि रक्तविद्युत्प्रभामयम् ॥ ९ ॥

पञ्चदेवमयो वर्णः पञ्चप्राणमयः सदा ।
सर्वज्ञानमयो वर्ण आत्मादितत्त्वसंयुतः[1] ॥१०॥

विन्दुत्रयमयो वर्णः शक्तित्रयमयः सदा ।
किशोरवयसः सर्वा[2] गीतवाद्यादितत्परा[3]: ॥
शिवस्य युवती एता मूर्त्तिमत् कुण्डली स्त्रयम् ॥११॥

अधुना संप्रवक्ष्यामि कारतत्त्वमुत्तमम्[4] ।
रहस्यं परमाश्चर्यं त्रैलोक्यानां च संशृणु ॥१२॥

वामरेखा भवेद् ब्रह्मा विष्णुर्दक्षिणवीथिका[5] ।
अधोरेखा भवेद्रुद्रो मात्रा साक्षान्महेश्वरी ॥१३॥

कुण्डली अङ्कुशाकारा मध्ये शून्यः सदाशिवः ।
जवायावकसंकाशा वामरेखा[6] वरानने ॥१४॥

शरच्चन्द्रप्रतीकाशा दक्षरेखा च मूर्त्तिमान् ।
अधोरेखा वरारोहे महामारकतद्युतिः[7] ॥१५॥

शङ्खकुन्दसमा कीर्त्तिर्मात्रा[8] साक्षात् सरस्वती ।
कुण्डली अङ्कुशा या तु कोटिविद्युल्लताकृतिः ॥१६॥

कोटिचन्द्रप्रतीकाशा मध्ये शून्यः[9] सदाशिवः ।
शून्यगर्भे स्थिता काली कैवल्यपददायिनी ॥१७॥

---

१. आत्मादितमसंयुतः—क. ख. घ. । २. सर्वे—ख. घ. ।
३. नृत्यवादित्रतत्परा—ख. । ४. करतत्त्वमनुत्तम्—ग. ।
५. विष्णुर्दक्षिणरेखिका—क. ख. घ. । ६. वामे रेखा—ग. ।
७. महामरकतद्युतिः—क. ख. । ८. कान्तिः—ख. ।
९. शून्यं—क. ग. ।

ककाराज्जायते सर्वं कामं कैवल्यमेव च ।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा ॥१८॥
ककारः सर्ववर्णानां मूलप्रकृतिरेव च ।
ककारः कामदा कामरूपिणी स्फुरदव्यया ॥१९॥
कामिनी या महेशानि स्वयं प्रकृतिसुन्दरी ।
माता सा सर्वदेवानां कैवल्यपददायिनी ॥२०॥
ऊर्ध्वकोणे स्थिता कामा[1] ब्रह्मशक्तिरितीरिता ।
वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता ॥२१॥
दक्षकोणे स्थितो[2] बिन्दू रौद्रीसंहाररूपिणी ।
ज्ञानार्था[3] सा तु चार्वङ्गि केनं[4] चतुष्टयात्मिका ॥२२॥
इच्छाशक्तिर्भवेद् ब्रह्मा विष्णुश्च ज्ञानशक्तिमान् ।
क्रियाशक्तिर्भवेद् रुद्रः सर्वः प्रकृतिमूर्त्तिमान् ॥२३॥
आत्मविद्याशिवैस्तत्त्वैः सदासाराप्रतिष्ठितैः[5] ।
आसनं त्रिपुरादेव्याः ककारं पञ्चदेवताम्[6] ॥२४॥
ईश्वरो यस्तु देवेशि त्रिकोणे तस्य संस्थितिः ।
त्रिकोणमेतत् कथितं योनिमण्डलमुत्तमम् ॥२५॥
केवलं[7] प्रपदे यस्याः कामिनी सा प्रकीर्त्तिता ।
ॐ शयनागारसिन्दूरसदृशीं[8] कामिनीं पराम् ॥२६॥

---

१. तारा—क., वामा—ख. ।
२. स्थिता—क. घ. ।
३. ज्ञानाख्या शान्तचार्वङ्गि—ख. ।
४. कलाचतुष्टयात्मकम्—ख. घ. ।
५. सदामात्राप्रतिष्ठता—क. ख. ।
६. दैवतम्—क. ख. घ. ।
७. कैवल्यम्—क. ख. घ. ।
८. जवायावकसिन्दूरसदृशीम्—क. ख. घ. ।

चतुर्भुजां त्रिनेत्राञ्च बाहुवल्लीविराजिताम्[1] ।
कदम्बकोरकाकारस्तनद्वयविभूषिताम् ॥२७॥

रत्नकेयूराङ्गदैश्च[2] भूषणैरुपशोभिताम् ।
रत्नहारैः पुष्पहारैः शोभितां परमेश्वरीम् ॥२८॥

एवं हि कामिनीं ज्ञात्वा ककारं दशधा जपेत् ।
प्रफुल्लश्च ततो ध्यात्वा जपस्य फलभाग् भवेत् ।
एतत्ते कथितं देवि ककारतत्त्वमुत्तमम् ॥२९॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
तृतीयः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

ककारं परमेशानि कुण्डलीत्रयसंयुतम् ।
खकारं परमाश्चर्यं शङ्खकुन्दसमप्रभम् ॥ १ ॥

कोणत्रययुतं[3] शून्यं बिन्दुत्रयसमन्वितम् ।
गुणत्रययुतं देवि पञ्चदेवमयं सदा ॥ २ ॥

त्रिशक्तिसंयुतं वर्णं खकारं प्रणमाम्यहम् ।
गकारं परमेशानि पञ्चदेवात्मकं सदा ॥ ३ ॥

निर्गुणं त्रिगुणोपेतं निरीहं निर्मलं सदा ।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥ ४ ॥
अरुणादित्यसङ्काशं कुण्डलीं प्रणमाम्यहम् ।
घकारं चञ्चलापाङ्गि चतुष्कोणात्मकं सदा ॥ ५ ॥

---

१. राजबिन्दु—ख. ।
२. रत्नकङ्कणकेयूर-अङ्गदैरु—ख. घ. ।
३. कोणतश्चयुतं—ङ. ।

पञ्चदेवमयं वर्णं अरुणादित्यसन्निभम् ।
निर्गुणं त्रिगुणोपेतं सदा त्रिगुणसंयुतम् ॥ ६ ॥

सर्वगं सर्वदं शान्तं घकारं प्रणमाम्यहम् ।
ङकारं परमेशानि स्वयं परमकुण्डली ॥ ७ ॥

सर्वदेवमयं वर्णं त्रिगुणं लोललोचने ।
पञ्चप्राणमयं वर्णं ङकारं प्रणमाम्यहम् ॥ ८ ॥

चवर्णं शृणु सुश्रोणि चतुर्वर्गप्रदायकम् ।
कुण्डलीसहितं देवि स्वयं परमकुण्डली ॥ ९ ॥

सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा ॥१०॥

त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं प्रिये ।
छकारं परमाश्चर्यं स्वयं परमकुण्डली ॥११॥

सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ॥१२॥

त्रिविन्दुसहितं वर्णं सदा ईश्वरसंयुतम् ।
पीतविद्युल्लताकारं छकारं प्रणमाम्यहम् ॥१३॥

जकारं परमेशानि या स्वयं मध्यकुण्डली[1] ।
शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् ॥१४॥

पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं प्रिये ॥१५॥

झकारं परमेशानि कुण्डली मोक्षरूपिणी ।
रक्तविद्युल्लताकारं सदा त्रिगुणसंस्थितम् ॥१६॥

---

१. स्वयं मध्यमकुण्डली—ख. ।

पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा ॥१७॥
सदा ईश्वरसंयुक्तं ञकारं शृणु सुन्दरि ।
रक्तविद्युल्लताकारं स्वयं परमकुण्डली ॥१८॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥१९॥
टकारं[1] चञ्चलापाङ्गि स्वयं परमकुण्डली ।
कोटिविद्युल्लताकारं पञ्चदेवमयं सदा ॥२०॥
पञ्चप्राणयुतं[2] वर्णं गुणत्रयसमन्वितम् ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥२१॥
ठकारं चञ्चलापाङ्गि कुण्डली मोक्षरूपिणी ।
पीतविद्युल्लताकारं सदा त्रिगुणसंयुतम् ॥२२॥
पञ्चप्राणात्मकं वर्णं पञ्चप्राणमयं सदा ।
त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा ॥२३॥
डकारं चञ्चलापाङ्गि सदा त्रिगुणसंयुतम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥२४॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
चतुर्ज्ञानमयं वर्णं आत्मादितत्त्वसंयुतम् ॥२५॥
पीतविद्युल्लताकारं डकारं प्रणमाम्यहम् ।
ढकारं परमाराध्यं या स्वयं कुण्डली परा ॥२६॥
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ।

---

१. टकारं चञ्चलापाङ्गि कुण्डलीमोक्षरूपिणी ।
पीतविद्युल्लताकारः सदा त्रिगुणसंयुतः ॥–घ. ।

२. पञ्चदेवात्मको वर्णः पञ्चप्राणमयः सदा ।
त्रिबिन्दुसहितो वर्णस्त्रिशक्तिसहितः सदा ॥–घ. ।

सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम् ।
रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम् ॥२७॥

णकारं परमेशानि स्वयं परमकुण्डली ।
पीतविद्युल्लताकारं पञ्चदेवमयं सदा ॥२८॥

पञ्चप्राणमयं देवि सदा त्रिगुणसंयुतम् ।
आत्मादितत्त्वसंयुक्तं महामोहप्रदायकम् ॥२९॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
चतुर्थः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं तथा ॥ १ ॥

त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥ २ ॥

थकारं चञ्चलापाङ्गि कुण्डली मोक्षरूपिणी ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥ ३ ॥

पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
अरुणादित्यसंकाशं थकारं प्रणमाम्यहम् ॥ ४ ॥

दकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥ ५ ॥

त्रिशक्तिसहितं देवि त्रिबिन्दुसहितं सदा ।
आत्मादितत्त्वसंयुक्तं स्वयं परमकुण्डली ॥ ६ ॥

रक्तविद्युल्लताकारं दकारं हृदि भावय ।
धकारं परमेशानि कुण्डली मोक्षरूपिणी ॥ ७ ॥

---

१. त्रिशक्तिसहितं–क. ग. ।

आत्मादितत्त्वसंयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि त्रिशक्तिसहितं सदा ॥ ८ ॥

त्रिबिन्दुसहितं[1] वर्णं धकारं हृदि भावय ।
पीत[2]विद्युल्लताकारं चतुर्वर्गप्रदायकम् ॥ ९ ॥

नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृतिम् ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥१०॥
पञ्चप्राणात्मकं वर्णं हृ[3]दि भावय पार्वति ।
अतः परं प्रवक्ष्यामि पकारं मो[4]क्षदायकम् ॥११॥
चतुर्वर्गप्रदं वर्णं शरच्चन्द्रसमप्रभम् ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥१२॥
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिगुणै रहितं वर्णमात्मादितत्त्वसंयुतम् ॥१३॥
महामोक्षप्रदं वर्णं हृदि भावय पार्वति ।
फकारं शृणु चार्वङ्गि रक्तविद्युल्लतोपमम् ॥१४॥
चतुर्वर्गप्रदं वर्णं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं वर्णं सदा त्रिगुणसंयुतम् ॥१५॥
आत्मादितत्त्वसंयुक्तं त्रिबिन्दुसहितं सदा ।
बकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ॥१६॥
शरच्चन्द्रप्रतीकाशं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिबिन्दुसहितं सदा ॥१७॥

---

१. त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्–ख. ।
२. रक्त–ख. ।
३. त्रिबिन्दुसहितं सदा–ख.,
त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ।
चतुर्वर्गप्रदं वर्णं हृदि भावय पार्वति ॥ इत्यधिकः–ख. ।
४. मोक्षमव्ययम्–ख. घ. ।

त्रिशक्तिसहितं वर्णं सदा[1] चामृतनिर्मितम् ।
स्वयं कुण्डलिनी साक्षात् सततं प्रणमाम्यहम् ॥१८॥
भकारं शृणु चार्वङ्गि स्वयं परमकुण्डली ।
महामोक्षप्रदं वर्णमरुणादित्यसन्निभम् ॥१९॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ॥२०॥
मकारं शृणु चार्वङ्गि स्वयं परमकुण्डली ।
अरुणादित्यसंकाशं चतुर्वर्गप्रदायकम् ॥२१॥
त्रिशक्तिसहितं[2] वर्णं त्रिबिन्दुसहितं सदा ।
आत्मादितत्त्वसंयुक्तं हृदिस्थं प्रणमाम्यहम् ॥२२॥
यकारं शृणु चार्वङ्गि चतुष्कोणमयं सदा ।
पलालधूमसंकाशं स्वयं परमकुण्डली ॥२३॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा ॥२४॥
प्रणमामि सदा वर्णं मूर्त्तिमान्(?)मोक्षमव्ययम् ।

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
पञ्चमः पटलः ॥

—:०:—

श्रीमहादेव उवाच

रकारं चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम् ।
रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा ॥ १ ॥
पञ्चप्राणमयं वर्णं त्रिबिन्दुसहितं सदा ।
त्रिशक्तिसहितं देवि आत्मादितत्त्वसंयुतम् ॥ २ ॥

---

१. निबिडामृतनिर्मितम्—ख. घ. ।
२. पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा—ख. घ., नास्ति—ख. ।

सर्वतेजोमयं वर्णं सततं प्रणमाम्यहम् ।
लकारं चञ्चलापाङ्गि कुण्डलीत्रयसंयुतम् ॥ ३ ॥
पीतविद्युल्लताकारं सर्वरत्नप्रदायकम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ॥ ४ ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं हि सा ।
आत्मादितत्त्वसहितं हृदि भावय सर्वदा ॥ ५ ॥
वकारं चञ्चलापाङ्गि कुण्डली मोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ॥ ६ ॥
त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् ।
पञ्चदेवमयं वर्णं पीतविद्युल्लतोपमम् ॥ ७ ॥
चतुर्वर्गमयं वर्णं सर्वसिद्धिप्रदायकम् ।
त्रिशक्तिसहितं देवि त्रिशक्तिसहितं सदा ॥ ८ ॥
शकारं[1] परमेशानि स्वर्णवर्णं शुचिस्मिते ।
रक्तवर्णप्रभाकारा स्वयं परमकुण्डली ॥ ९ ॥
चतुर्वर्गप्रदं देवि[2] शकारं ब्रह्मविग्रहम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ॥१०॥
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा ।
त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ॥११॥
षकारं शृणु चार्वङ्गि कोणषट्कमयं[3] सदा ।
रक्तचन्द्रप्रतीकाशं स्वयं परमकुण्डली ॥१२॥
चतुर्वर्गप्रदं वर्णं सुधानिर्मितविग्रहम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥१३॥

---

१. शकारं शृणु चार्वङ्गि अष्टकोणमयं सदा ।
रक्तचक्रप्रतीकाशा या स्वयं परकुण्डली ॥ अधिकः—ख. ।

२. वर्णं स्वधानिहितविग्रहम्—ख. । ३. अष्टकोणमयं—घ. ।

रजःसत्त्वतमोयुक्तं त्रिविन्दुसहितं परम् ।
सर्वदेवमयं वर्णं हृदि भावय पार्वति ॥१४॥
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम् ।
कोटिविद्युल्लताकारं कुण्डलीत्रयसंयुतम् ॥१५॥
पञ्चदेवमयं देवि पञ्चप्राणमयं सदा ।
रजःसत्त्वतमोयुक्तं त्रिविन्दुसहितं सदा ॥१६॥
त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ।
प्रणम्य सततं देवि हृदि भावय सुन्दरि ॥१७॥
हकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ।
कुण्डलीत्रयसंयुक्तं रक्तविद्युल्लतोपमम् ॥१८॥
रजःसत्त्वतमोयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥१९॥
त्रिविन्दुसहितं वर्णं हृदि भावय सुन्दरि ।
क्षकारं शृणु चार्वङ्गि कुण्डलीत्रयसंयुतम् ॥२०॥
चतुर्वर्गमयं वर्णं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥२१॥
त्रिविन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् ।
शरच्चन्द्रप्रतीकाशं हृदि भावय सुन्दरि ॥२२॥
अकारादिक्षकारान्तं स्वयं परमकुण्डली ।
सर्वं चराचरं विश्वं वर्णात्तु जायते ध्रुवम् ॥२३॥
नानाशास्त्रं पुराणञ्च इतिहासञ्च सुन्दरि ।
वेदञ्च स्मृतिशास्त्रञ्च अन्यानि यानि कानि च ॥२४॥
अक्षराज्जायते सर्वं परं ब्रह्म स्वयं प्रिये ।

इति कामधेनुतन्त्रे देवदेवीसंवादे
षष्ठः पटलः ॥

—:०:—

१. 'त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम्' इत्यधिकः–घ. ।

श्रीमहादेव उवाच—

रहस्यं परमाश्चर्यं सदा मम हृदि स्थितम् ।
अतः परं प्रवक्ष्यामि मन्त्रतत्त्वं पृथक् पृथक् ॥ १ ॥

मातृकाया वरारोहे सावधानावधारय ।
अतः परं जपेन्मन्त्रं पञ्चाशन्मातृकां पृथक् ॥ २ ॥

अतस्त्वमधिकारी स्यान्नात्र कार्या विचारणा ।
इति ते कथितं देवि प्रयोगं मन्त्रमुत्तमम् ॥ ३ ॥

एतन्मन्त्रं विना देवि इष्टं मन्त्रं जपेन्नरः ।
सर्वं तस्य भवेद्व्यर्थं सर्वं व्यर्थकदर्थनम् ॥ ४ ॥

एतन्मन्त्रं प्रथमतो दशधा प्रजपेत् प्रिये ।
ततस्तु प्रणवं दत्त्वा मातृकां प्रजपेत् पृथक् ॥ ५ ॥

प्रयोगं परमाश्चर्यं सावधानावधारय ।

तद्यथा—ॐ,अँ ॐ, ॐ आं ॐ, ॐ इँ ॐ, ॐ ईँ ॐ, ॐ उँ ॐ, ॐ ॐॐ, ॐ ऋँ ॐ, ॐ ॠँ ॐ, ॐ लृँ ॐ, ॐ ॡँ ॐ, ॐ एँ ॐ, ॐ ऐँ ॐ, ॐ ओँ ॐ, ॐ औं ॐ, ॐ अं ॐ, ॐ अः ॐ, ॐ कं ॐ ।

एवं क्षकारपर्यन्तं प्रणवैः पुटितं सदा ।
प्रत्येकमेवं चार्वङ्गि दशधा दशधा जपेत् ॥ ६ ॥

प्रत्येकं जपमात्रेण प्रत्येकं ध्यानमाचरेत् ।
अथवा सर्ववर्णानामेकीकृत्य वरानने ॥ ७ ॥

प्रजपेद् दशधा मन्त्रं स्वमन्त्रं प्रजपेत्ततः ।
तथा च सर्ववर्णानां ध्यानं वक्ष्यामि संशृणु ॥ ८ ॥

कोटिचन्द्रप्रतीकाशां पुण्डरीकोपरिस्थिताम् ।
भ्रमद्भ्रमरलीलाभां नयनत्रयराजिताम् ॥ ९ ॥

नानाशास्त्रप्रवक्त्रीं च विद्याभ्यासमयीं सदा ।
नानावाद्यमयीं देवीं श्वेतांशुकपरिष्कृताम् ॥१०॥
शुक्लाभरणदीप्ताङ्गीं शुक्लवस्त्रोत्तरीयिणीम् ।
ब्रह्माण्डं दर्पणे[1] यस्या वामहस्तस्य पार्वति ॥११॥
तद्वच्छुकशिशुं प्रेक्ष्य[2] क्षुद्रदर्पणमुच्यते ।
एवं ध्यात्वा जगद्धात्रीं मातृकां जगदम्बिकाम् ॥१२॥
प्रजपेद्दशधा मन्त्रमेकधा वा जपेत्तु[3] यः ।
सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा ॥१३॥
एषा ते कथिता विद्या मातृका पर[4]मात्मिका ।
यत् कृत्वा साधको याति दुर्लभं मोक्षमव्ययम् ॥१४॥
प्रत्येकेनाथवा देवि एकैकैव वरानने ।
रहस्यं शृणु चार्वङ्गि सुगोप्यं भुवनत्रये ॥१५॥
इष्टविद्यां सकृत् स्मृत्वा मनसा परमेश्वरि ।
यस्य मन्त्रस्य यद्[5]ध्यानं कृत्वा देवि प्रयत्नतः ॥१६॥
तन्मन्त्रं दशधा जप्त्वा इष्टध्यानं ततः प्रिये[6] ।
इष्टमन्त्रं प्रजप्त्वा वै सर्वसिद्धिं ततो लभेत् ॥१७॥
अनेन विधिना देवि मन्त्रश्चैतन्यमाप्नुयात् ।
चैतन्[7]यरहितं मन्त्रं विद्या वा सुरपूजिते ॥१८॥
सर्वं व्यर्थं भवेद्देवि विफलं स जपो भवेत् ।

---

१. दर्पणं—ख. । २. प्रोक्तं—ख. घ. । ३. स्मरेत्—ख. ।

४. परमातृका—ख. । ५. तदध्यानं कुरु यत्नतः—ख. ।

६. इतः परम्—'मृणालसदृशाकारे बाहुवल्लीविराजिताम्' इत्यधिकः—घ. ।
'सिन्दूरतिलकोद्दीप्तां कुटिलालकसंयुताम्' इत्यधिकः—ख. ।

७. चैतन्यरहितं मन्त्रमेकधा तु स्मरेत्तु यः ।
कोटिपुरश्चरं याति नान्यथा वरवर्णिनी ॥
ध्यानञ्च पूजनञ्चैव जपहोमं तथैव च ।
सर्वं व्यर्थं महेशानि अरण्ये रोदनं यथा ॥ इत्यधिकः—घ. ।

श्रीमहादेव उवाच—

अपरं शृणु चार्वङ्गि वर्गाष्टकमनुत्तमम् ॥१९॥
वर्गाष्टकं विना देवि कोटिपुरश्चरं यदि ।
सर्वं तस्य वृथा देवि अन्ते च नरकं व्रजेत् ॥२०॥

अकचटतपयशा इत्येतदष्टवर्गकम्[1] ।
मन्त्रस्यादौ च अन्ते च अकारं विन्दुसंयुतम् ॥२१॥

दत्त्वा तमेव[2] भक्त्या च अष्टोत्तरशतं जपेत् ।
अनेन विधिना देवि आदित्याभं[3] समाचरेत् ॥२२॥

तावज्जपेद् वरारोहे यावल्लक्षं समाप्यते ।
ततो मन्त्रं वरारोहे ध्रुवं जीवत्वमाप्नुयात् ॥२३॥

जीवत्वं हि विना देवि न पुरश्चरणं चरेत् ।
जीवत्वं हि विना देवि यदि कुर्यात् पुरश्चरम् ॥२४॥

विफला तस्य सा सर्वा पूर्वपुण्यं विनश्यति ।
वर्गाष्टकेन सहितं प्रत्यहं प्रजपेत् शतम् ॥२५॥

सदैव सहसा भद्रे सर्वं मन्त्रश्च सिध्यति ।
किं तस्य ध्यानपूजायां पुरश्चर्याश्च किं पुनः ॥२६॥

कृत्वा तु जीवं मन्त्रस्य विद्याश्च वरवर्णिनी ।
विद्यायाश्च तथा देवि यः कुर्यात् प्राणनिर्णयम् ॥२७॥

तत्क्षणाद् यान्ति चार्वङ्गि पुरश्चर्यां शतं शतम् ।
विशेषतः कलियुगे जम्बूद्वीपस्य भारते ॥२८॥

---

१. सूकरतां—ख. । २. परभया—ख. ।
३. आदिनान्तं—घ., कादिमान्तं—ख. ।

प्राणन्यासं[1] विना देवि न जपेत् साधकः क्वचित् ।
वैष्णवेषु च मन्त्रेषु शैवेषु शक्तिमन्त्रके[2] ॥२९॥
गणेशसौरमन्त्रे च प्राणन्यासः प्रशस्यते ।
किं तस्य जपपूजासु होमादिषु च किं प्रिये ॥३०॥
प्राणतत्त्वं महेशानि यो जानाति स पूजकः[3] ।
प्राणतत्त्वं विना देवि देहन्यासं करोति यः ॥३१॥
स भ्रष्टः स च पापिष्ठो रौरवं नरकं व्रजेत् ।
आलोक्य तन्मुखं देवि सूर्यदर्शनमाचरेत् ॥३२॥

इति कामधेनुतन्त्रे देवदेवीसंवादे[4]
सप्तमः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

एतत्ते कथितं भद्रे[5] रहस्यं परमाद्भुतम्[6] ।
यन्नोक्तं[7] सर्वतन्त्रेषु मातृकायाः पृथक् पृथक् ॥ १ ॥
[8]पञ्चाशद्वर्णसंकेतं पञ्चाशत्तत्त्वमुत्तमम् ।
सर्वदेवमयं तत्त्वं सर्वज्ञानमयं तथा ॥ २ ॥
बिन्दुतत्त्वमयं देवि अहंतत्त्वमयं तथा ।
सर्वशक्तिमयं तत्त्वं सर्वप्राणमयं तथा ॥ ३ ॥
गर्भतत्त्वमयं देवि केवलं कलिका तथा ।
कुसुमस्य यदा देवि कलिकां गन्धसंयुताम् ॥ ४ ॥

---

१. जीवन्यासं—ख. ।
२. शक्तिमन्त्रिपु—क. ।
३. साधकः—ख. ।
४. 'देवदेवीसंवादे' नास्ति—क. ग. ।
५. सर्वं—ख. घ. ।
६. परमस्तु यत्—ख. घ. ।
७. तन्त्रोक्तं—क., तथोक्तं—घ. ।
८. २—७३ इति नास्ति घ. ।

अदृश्यं सर्वभूतानां तथा गन्धं शुचिस्मिते ।
पुष्पस्य कलिकामध्ये यथा ज्योतिः प्रदीप्यते ॥ ५ ॥
तथैव कलिकाबीजे नवतत्त्वञ्च विद्यते ।
कोटिविद्युत्प्रतीकाशां मातृकां प्रणमाम्यहम् ॥ ६ ॥
निराबाधां[1] निर्गुणाञ्च गुणानां गुणमातृकाम् ।
माता सा सर्वविद्यानां सर्वागमप्रतिष्ठिता ॥ ७ ॥
सर्वासां वेदविद्यानां ब्रह्माण्डानाञ्च पार्वति ।
माता सा गीयते देवि पञ्चाशन्मातृका च सा[2] ॥ ८ ॥
मन्त्रतत्त्वञ्च विद्याञ्च सर्ववर्णविनिश्चयम् ।
पञ्चाशद्युवतीरूपा मातृका शवमव्यया ॥ ९ ॥
मातृका परमेशानि काली[3] साक्षान्न संशयः ।
कुतो ब्रह्मा कुतो विष्णुः कुतो रुद्रश्च ईश्वरः ॥१०॥
सदाशिवः कुतो देवि ते सर्वे शववत् प्रिये ।
शववत् सर्वदेवाश्च ब्रह्माण्डं शववत् सदा ॥११॥
अत एव वरारोहे विष्णुमन्त्रं यथा तथा ।
शिवमन्त्रं यथा देवि गणेशं सौरमेव च ॥१२॥
शक्तिमन्त्रञ्च विद्याञ्च पञ्चाशद्युवतीमयम् ।
पुराणञ्च तथा वेदं स्मृतिशास्त्रं तथैव च ॥१३॥
एतत्तत्त्वं वरारोहे युवतीरूपमद्भुतम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥१४॥
ते सर्वे चञ्चलापाङ्गि मातृकाज्जायते (?) प्रिये ।
समस्तजननी देवि मातृका जननी परा ॥१५॥

---

१. निराधारां—ख. ।
२. या—ख. ।
३. कला—ख. ।

कटाक्षलक्षसंयुक्ता महाशक्तिः प्रगीयते ।
मातृकावर्णरहितं ब्रह्माण्डं शववत् प्रिये ॥१६॥

गीतं वाद्यं श्रुतिर्नाटचमालापं वरवर्णिनी ।
सर्वं हि युवतोरूपं ध्यानमार्गे प्रतिष्ठितम् ॥१७॥

एतत्ते कथितं देवि कालिकाबीजमुत्तमम् ।
उभयोः संगमं देवि प्रफुल्लं भवति प्रिये ॥१८॥

वहवः सङ्गमे देवि प्रफुल्लं मोक्षमव्ययम् ।
यत्र मन्त्रेषु विद्यासु प्रफुल्लं भवति ध्रुवम् ॥१९॥

प्रफुल्लं शृणु चार्वङ्गि जपयज्ञं समाचरेत् ।
प्रफुल्लरहितं देवि विद्यामन्त्रं यदि प्रिये ॥२०॥

केवलं कालिकाबीजं वर्णैर्वर्णैः पृथक् पृथक् ।
ध्यात्वा सिद्धिमवाप्नोति नान्यथा सुरपूजिते ॥२१॥

प्रफुल्लात् कलिकाद्यापि कृष्णादि[1] जायते ध्रुवम् ।
युवती या समाख्याता सा महाकुण्डली परा ॥२२॥

वर्णरूपमयी देवी कुण्डली परदेवता ।
पञ्चाशद्वर्णतत्त्वं च विद्यामन्त्रं जपेत्तु यः ॥२३॥

सर्वं हि विफलं तस्य शववत् तज्जपो भवेत् ।
चैतन्यरहितं देवि तज्जपं शवमेव तत् ॥२४॥

ज्ञात्वा प्रणम्य कुर्वीत जपपूजादिकं प्रिये ।
हरिर्हि निर्गुणः साक्षात् सगुणा परकुण्डली ॥२५॥

तस्मात्तु युवतीदेहात् हरेरुत्पत्तिरेव च ।
सर्वासां देवदेवीनां बीजं जन्मस्थलं सदा ॥२६॥

---

१. कृष्णादीन्—क. ख. ग. ।

बीजात्तु जायते ब्रह्मा शून्यरूपी सनातनः ।
अत एव महेशानि ब्रह्मणः कारणं परा ॥२७॥

ज्ञात्वा तन्त्रमिदं देवि जपपूजां करोति यः ।
प्राणन्यासविधिं कृत्वा जपपूजां करोति यः ॥२८॥

स शिवः परमं ब्रह्म स एव पुरुषोत्तमः ।
स एव दिव्यो वीरश्च स एव भैरवः स्वयम् ॥२९॥

स एव धन्यो देवेशि त्रैलोक्ये सचराचरे ।
स सूर्यो देवि पूज्यश्च सद्गुरुश्च न चान्यथा ॥३०॥

उद्धर्तुं चैव संहर्तुं समर्थः सोऽपि नान्यथा ।
अज्ञात्वा तन्त्रमेतत्तु जपयज्ञं करोति यः ॥३१॥

सर्वं तस्य वृथा देवि पशुरेव न संशयः ।
सर्वेषु च गुरुर्देवि शिष्योऽपि पशुवत् सदा ॥३२॥

श्रुत्वा तस्य मुखे विद्यां मन्त्रं वा नगनन्दिनि ।
सिक्तो भवति चार्वङ्गि किं तस्य जपपूजनैः ॥३३॥

एवं विधं गुरुं त्यक्त्वा श्रुत्वा पशुमुखात् प्रिये ।
पूर्वमन्त्रं परित्यज्य गृह्णीयाद् गणनापरम् ॥३४॥

स भ्रष्टः स च पापिष्ठः कथं मन्त्रमुपास्महे(?) ।
मन्त्रस्य गणनाद्देवि यत् पापं प्राप्नुयान्नरः ॥३५॥

तत् पापं शृणु चार्वङ्गि नरकश्चोत्तरोत्तरम् ।
यत् पापं प्राप्नुयाद् देवि स्वयंभूलिङ्गचालने ॥३६॥

तत् पापं कोटिगुणितं गणनाद्देवमन्त्रयोः ।
तस्मात्तु गणनां देवि वर्जयेन्मतिमान्नरः ॥३७॥

त्यक्त्वा शैववैष्णवेषु सौरे गाणपते तथा ।
अन्यत् सर्वासु विद्यासु गणनां वर्जयेन्नरः ॥३८॥

इति श्री कामधेनुतन्त्रे देवदेवीसंवादे
अष्टमः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

अधुना संप्रवक्ष्यामि रहस्यं गुह्यमुत्तमम् ।
यज्ज्ञात्वा साधको याति दुर्लभं ब्रह्ममन्दिरम् ॥ १ ॥

इडया पूरयेद् वायुं सुषुम्नान्तर्गतं ततः ।
रेचयेत् पिङ्गलामार्गे प्राणायामक्रमात्[1] प्रिये ॥ २ ॥

अनुलोमेन चार्वङ्गि मातृकां युवतीं स्मरेत् ।
पञ्चाशन्मातृकावर्णं सबिन्दुं नादसंयुतम् ॥ ३ ॥

उच्चार्य पूरकेणैव तत इष्टं समुच्चरेत् ।
ततस्तु मातृकावर्णं विलोमेन जपेत् प्रिये ॥ ४ ॥

सुषुम्नामध्यदेशे तु चित्रिणी सुवरानने ।
अनुलोमविलोमेन मातृकां युवतीं स्मरेत् ॥ ५ ॥

इष्टमन्त्रं ततो जप्त्वा विलोमं कुरु यत्नतः ।
अनेनैव विधानेन रेचयेत् पिङ्गलापथे ॥ ६ ॥

एवं द्वादशधा कृत्वा प्रत्यहं वरवर्णिनि ।
त्रिसन्ध्यां चञ्चलापाङ्गि यः कुर्यात् कमलानने ॥ ७ ॥

---

१. क्रमं—क. ।

जीवन्यासं भवेत्तस्य मन्त्रसिद्धिश्च नान्यथा ।
एकधा वा महेशानि कलौ संख्या चतुर्गुणा ॥ ८ ॥
प्रत्यहं दशधा कृत्वा शिवतुल्यो भवेन्नरः ।

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
नवमः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

ललाटतत्त्वं चार्वङ्गि अकारं सर्वदा प्रिये ।
आकारं मुखतत्त्वन्तु शृणुष्व वरवर्णिनि ॥ १ ॥

इकारं दक्षनेत्रञ्च ईकारं वामनेत्रके ।
उकारं दक्षकर्णे स्यादूकारं वामकर्णके ॥ २ ॥

ऋकारं दक्षनासा च ऋकारं वामनासिके ।
ऌकारं दक्षगण्डं स्यात् ऌकारं वामगण्डकम् ॥ ३ ॥

एकारं अधरं तत्त्वं ऐकारं ओष्ठ एव च ।
ओकारं ऊर्ध्वदन्तं स्यात् औकारश्चाधोदन्तकम् ॥ ४ ॥

अंकारं शिरसस्तत्त्वं अःकारं मुखमण्डलम् ।
ककारादि पञ्चतत्त्वं दक्षबाहौ प्रशस्यते ॥ ५ ॥

वामबाहौ चकारादि पञ्चतत्त्वञ्च तिष्ठति ।
दक्षपादे टकारादि पञ्चतत्त्वं वरानने ॥ ६ ॥

तकारादि पञ्चतत्त्वं वामपादे प्रशस्यते ।
पकारं दक्षपार्श्वञ्च फकारं वामपार्श्वके ॥ ७ ॥

बकारं पृष्ठतत्त्वञ्च भकारं नाभिरेव च ।
मकारं उदरं तत्त्वं यकारं हृदयं तथा ॥ ८ ॥

रकारं स्कन्दतत्त्वञ्च लकारं वाममेव च ।
घटितत्त्वं[1] वकारञ्च शकारं दक्षबाहुषु ॥ ९ ॥
वामबाहौ षकारञ्च सकारं दक्षपादकम् ।
वामपादं हकारञ्च ळकारं शिरसोपरि ॥१०॥
अकारं बीजतत्त्वञ्च तकारं प्रणवेन[2] च ।
मकारञ्च सकारञ्च मण्डितं[3] हि तथैव च ॥११॥
अहङ्कारः पकारं स्यात् फकारो मनसस्तथा ।
नकारं शब्दतत्त्वञ्च दं धं रूपं प्रशस्यते ॥१२॥
गकारं पादतत्त्वञ्च छकारोपस्थमेव च ।
उकारमाकाशतत्त्वञ्च ऊकारं श्रोत्रमेव च ॥१३॥
त्वक्तत्त्वञ्च जकारः स्याद् झकारः पादमेव च ।
ककारः[4] पृथ्वीतत्त्वं खकारो ज्ञानतत्त्वकम् ॥१४॥
शकारं हृत्पुण्डरीकं पकारं तत्त्वमण्डलम्[5] ।
सकारञ्च तथा चन्द्रं रकारं वह्निमण्डलम् ॥१५॥
परमेष्ठिं तथा तत्त्वं षकारः सुरपूजिते ।
लकारं पृथ्वीतत्त्वं हकारञ्च शिरस्तथा ॥१६॥
यकारं वायुतत्त्वञ्च ककारं स्वर्गमेव[6] च ।
एतयोर्योगमासाद्य क्षकारं तत्त्वविग्रहम् ॥१७॥

---

१. घट–ख. ।
२. प्राणमेव–च. ।
३. मतितत्त्वम्–ख. घ. ।
४. ककारं स्वर्गतत्त्वञ्च खंतत्त्वं परिकीर्तितम्–ख. ।
५. वह्निमण्डलम्–घ. ।
६. इतः परम्–"तकारो गन्धतत्त्वञ्च चकारः श्रोत्रमेव च ।
कतत्त्वञ्च जकारः स्यात् झकारः पादमेव च ॥
जकारो जलतत्त्वं स्याद् ककारः पृथिवीप्रिये ।
मकारं हृत्पुण्डरीकं घकारः सूर्यमेव ॥

तेन अ त म स प फ न द ध ग छ उ ऊ ज झ क ख श ष स र य ल ह क्ष ॥

अकारादिक्षान्तवर्णं तत्त्वञ्च पञ्चविंशतिः ।
सर्वतत्त्वमतिगुह्यं परमात्मा सुलोचने ॥१८॥
मातृकाया वरारोहे क्रमान्नामानि संश्रृणु ।
ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च ॥१९॥
कौमारी वैष्णवी दुर्गा तथैव नारसिंहिका ।
कालिका मुण्डमाला च शिवदूती तथा परा ॥२०॥
वराही कौषिकी चैव तथा माहेश्वरी प्रिये ।
शङ्करी च जयन्ती च मंगला कलिमर्दिनी ॥२१॥
पालिका चैव मेधा च शिवरूपा च शाम्भवी ।
भीमा शान्ता च उग्रा च भ्रामरी रुद्ररूपिणी ॥२२॥
अम्बिका वहुरूपा च क्षेमा क्षेमङ्करी तथा ।
धात्रीरूपा स्वधा स्वाहा तथैव वह्निरूपिणी ॥२३॥
अपर्णा च तथा माया घोररूपा प्रियंवदा[1] ।
ब्रह्माण्डवाणी[2] ब्राह्मी च पञ्चाशन्मातृकाः स्मृताः ॥२४॥

---

मकारञ्च तथा चन्द्रं वकारं वह्निमण्डलम् ।
परमेष्ठि तथा तत्त्वं मकारं सुरपूजिते ॥
नकारं पृथ्वीतत्त्वं फकारश्च शिवस्तथा ।
क्षकारं विग्रहं मन्ये इति श्रृणु सुलोचने ॥
मातृका सा वरारोहे क्रमान्नामानि संश्रृणु । इत्यधिकः–ख. ।
"खकारो जलतत्त्वञ्च गकारस्तेज उच्यते ।
तकारो गन्धतत्त्वञ्च चकारः श्रोत्रमेव च ॥
त्वक्तत्त्वञ्च जकारः स्यात् जकारः पृथिवी तथा ।
हकारश्च शिवः प्रोक्तः क्षकारस्तत्त्वविग्रहः ।" इत्यधिकः–घ. ।

१. इतः परम्—"महाकाली भद्रकाली भयरूपा भयङ्करी ।
क्षेमंकरी वैष्णवी च विष्णुमाता शिवार्चिता ॥" इत्यधिकः–घ. ।

२. ब्रह्माण्डवासिनी–घ. ।

इत्येतत् कथितं सम्यक् केवलं तव भक्तितः ।
एतास्तु मातृकादेव्यो ब्रह्माण्डं सचराचरम् ॥२५॥
व्याप्य तिष्ठन्ति चार्वङ्गि नानामूर्त्तिधराव्ययाः ।
शक्तिमन्त्रे विष्णुमन्त्रे शैवे सौरे च पार्वति ॥२६॥
अन्यसर्वेषु मन्त्रेषु गणेशे वरवर्णिनि ।
मातृका युवतीरूपा मन्त्रविग्रहरूपिणी[1] ॥२७॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
ते सर्वे चञ्चलापाङ्गि निश्चलाश्च निरिन्द्रियाः ॥२८॥
देवादीनां वरारोहे मन्त्रं नास्ति कदाचन ।
शब्दब्रह्म यदा याति[2] तन्त्रं[3] मन्त्रं तदा भवेत् ॥२९॥
पञ्चाशद्युवती सर्वा शब्दब्रह्मस्वरूपिणी ।
ब्रह्मणः कारणं नास्ति प्रकृतेरस्ति भाविनि ॥३०॥
प्रकृतेर्या वरारोहे सा दीक्षा सर्वसम्मता ।
दीक्षायां चञ्चलापाङ्गि प्रशस्ता युवतीकला ॥३१॥
पञ्चाशन्मातृका या सा युवती परिगीयते ।
युवतीरहितं देवि कुतो विद्या कुतो मनुः ।
निर्गुणं परमं ब्रह्म प्रधाना युवतीगणाः ॥३२॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
दशमः पटलः ॥

---

१. ब्रह्माण्डवासिनी–घ. ।
२. 'याति' नास्ति–घ. ।
३. मन्त्रतत्त्वं–घ. ।

श्रीशिव[1] उवाच—

यथा जले[2] सूर्यतत्त्वं तथा मन्त्रे प्रतिष्ठितम् ।
देवीनां ज्योतिषः पुञ्जो वर्तन्ते प्रकृतेः कलाः ॥ १ ॥

अथान्तरात्मा परमं ज्ञानात्मा सुवरानने ।
वर्तन्ते युवतीरूपाः षोडश प्रकृ(तिः?तेः) पराः ॥ २ ॥

प्रकृतिं हि विना देवि ज्ञाता ब्रह्मा सनातनः ।
अत एव वरारोहे स एव[3] श्रीसदाशिवः ॥ ३ ॥

जाग्रत् स्वप्नसुषुप्तिर्या तुरीया वरवर्णिनि ।
तास्ताः सर्वा वरारोहे युवती परमापरा ॥ ४ ॥

कार्यकारणकाले च गणनीया वरानने ।
शून्यात् शून्यं परं शून्यं शून्यरूपं निरञ्जनम् ॥ ५ ॥

कोटिसूर्यप्रतीकाशं निर्मलं ज्ञानमुत्तमम् ।
हृदि भावय चार्वङ्गि तेजःपुञ्जं महाप्रभम्[4] ॥ ६ ॥

दलिताञ्जनपुञ्जाभं वर्णराजं[5] वरानने ।
त्रिभङ्गललिताकारं[6] चारुचूडाविराजितम् ॥ ७ ॥

शिखिपुच्छयुतं चूडं भ्रमरैः शोभितं परम् ।
पीतांशुकपरीधानं वनमालाविभूषितम् ॥ ८ ॥

---

१. श्रीमहादेव उवाच—घ. ।

२. यथा ज्ञानं चन्द्रसूर्यस्तथा मन्त्रे प्रतिष्ठिता—क. ख. ग. ।

३. निष्कलश्च—ख., निश्चलश्च—घ. ।

४. इतः परम्—"तेजस्तु प्रकृतिः साक्षात् सर्वव्यापिपराक्षा । भावना जायते देवि शरीरं मरकतप्रभम् ॥" इत्यधिकः—ख. घ. ।

५. वर्णबीजं—घ. ।

६. वनिताकार—ख. ।

रत्नकुण्डलसंयुक्तं स्फुरद्गण्डमनोहरम् ।
कदम्बकुसुमोपेतं श्रवणं जनमोहितम् ॥ ९ ॥

श्रीवत्सकौस्तुभोद्दीप्तं आजानुबाहुराजितम् ।
आरक्तनयनद्वन्द्वं [1]कोटिविद्युत्समद्युतिम् ॥१०॥

आरक्तचरणद्वन्द्वं नूपुरारावसंयुतम् ।
आरक्तकरतलस्वच्छं गुञ्जमालाविराजितम् ॥११॥

शब्दब्रह्ममयं विष्णुं इ[2]कारं शब्दजल्पितम् ।
एवंरूपं समुत्पन्नं हृदि मध्ये वरानने ॥१२॥

जायते कामबीजात्तु शून्यमध्ये सुलोचने ।
शून्यमध्ये स्थिता देवि कामबीजस्वरूपिणी ॥१३॥

लकारसंयुता या सा कृष्णमाता प्रगीयते ।
सर्वेषु विष्णुमन्त्रेषु कामबीजं परात्परम् ॥१४॥

हृदि शून्ये महेशानि विष्णोर्मन्त्रं जपेत् प्रिये ।
ततो वै कामबीजात्तु जायते विष्णुविग्रहम् ॥१५॥

अतः काममयं विष्णुं हृदि भावय पार्वति ।
कामिनी या महेशानि विष्णुमाता प्रगीयते ॥१६॥

अतो विष्णुमातृवर्णं वर्ण[3]राजमवाप्नुयात् ।
ककारः कामिनी साक्षाद् लकारः पृथिवीश्वरी ॥१७॥

रतिस्तु मर्दिनी साक्षाद् नादस्तु योनिरूपिणी ।
बिन्दुः कुण्डलिनीरूपं [4]शिवशक्तिमयं प्रिये ॥१८॥

---

१. ओष्ठबिम्बफलद्युतिम्–ख. घ. ।

२. हूँकार–ख. घ. ।

३. बीजं–घ., ततो वै विष्णुवर्णं तु वामदेवमवाप्नुयात्–ख. ।

४. सर्वशक्तिमयं–ख. ।

इदं बीजं महेशानि विष्णुमाता पराक्षरा ।
निरक्षरो[1] विष्णुदेवो ह्यक्षराज्जायते ध्रुवम् ॥१९॥

अत एव वरारोहे ब्रह्मणः कारणं परा ।
क्लींकारबीजरूपा या सा परा परिगीयते ॥२०॥

परात्परतरा साऽपि वह्निमण्डलसंयुता ।
कामिनी सा महेशानि पृथिवी तस्य आसनम् ॥२१॥

कदाचित् पृथिवीमध्ये कदाचिद् वह्निमण्डले ।
वसते कामिनी देवी बिन्दुत्रयसमन्विता ॥२२॥

जन्मलब्धा महाविष्णुः कूर्चबीजं जपेत् प्रिये ।
अनेन प्रजपेन्मन्त्रं हुंकारं वरवर्णिनि ॥२३॥

विष्णोर्विग्रहणे[2] तत्तु स्वयं प्रकृतिमूर्तिमान् ।
प्रकृतिः परमाराध्या देवानां नगनन्दिनि ॥२४॥

हुंकारं परमाश्चर्यं बीजरत्नं शृणु प्रिये ।
षष्ठस्वरः परिचयो वियद्बीजं शशिप्रभम् ॥२५॥

तस्योपरि वरारोहे सदाबिन्दुं विभावय ।
काममन्मथकन्दर्पम् अक्षरध्वजसंज्ञकम् ॥२६॥

मीनकेतुर्महेशानि पञ्चबीजं प्रकीर्तितम् ।
मायाकूर्चं वधूबीजं लक्ष्मीबीजञ्च पार्वति ॥२७॥

प्रणवञ्च महेशानि स्वयं चतुर्दशं तथा ।
संपिण्डवत्तथा[3] देवि येषु यासु च विद्यते ॥२८॥

---

१. महाविष्णुः—घ. ।
२. विष्णुविग्रहमेतत्तु—ख. घ. ।
३. पिण्डाक्षरं तथा देवि स्वेषु स्वेषु च विद्यते—ख. ।

तन्मन्त्रमतिसिद्धं स्यात् परः प्रकृतिरूपिणी ।
एवं बीजं सकृद् ध्यात्वा सर्वासां भवति प्रियः ॥२९॥

तन्मन्त्रं प्रजपेद्देवि बीजध्यानं पुनः प्रिये !
एवं हि दशधा कृत्वा मन्त्राणां बीजसाधनम् ॥३०॥

तस्माद् बीजात् समाकृष्य देवतारूपमुद्भवम् ।
देवध्यानं ततः कृत्वा इष्टमन्त्रं ततो जपेत् ॥३१॥

पुनर्ध्यानं देवतायाः पुनर्जापं कुरु प्रिये ।
एवं हि दशधा कृत्वा देवाधिष्ठानमेव[1] च ॥३२॥

ततः सप्तच्छदां जप्त्वा कुल्लुकां दशधा जपेत् ।
आद्यन्ते सेतुमन्त्रञ्च दत्वा अष्टोत्तरं जपेत् ।
तन्मन्त्रं प्रजपेद्देवि एवं सिद्धिमुपालभे ॥३३॥

इति कामधेनुतन्त्रे देवदेवीसंवादे
एकादशः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

अपरैकं प्रवक्ष्यामि रहस्यमतिगोपनम् ।
अकृत्वा ध्यानतत्त्वञ्च अष्टतत्त्वं तथैव च ॥ १ ॥

अकृत्वा व्यर्थतां याति नात्र कार्या विचारणा ।
ततो जीवत्वमाप्नोति मन्त्रः सिध्यति तत्क्षणात् ॥ २ ॥

अथवा परमेशानि मन्त्रवर्णं यथा तथा ।
प्रणवपुटितं कृत्वा अनुलोमविलोमतः ॥ ३ ॥

---

१. देवादित्ताम एव–क. ग., देवताध्यानमेव च–घ. ।

तदैव परमेशानि जीवत्वं प्राप्यते मनुः ।
एकधा वा त्रिधा कृत्वा यदि कुर्याद् वरानने ॥ ४ ॥
तदा सिद्धिमवाप्नोति नान्यथा सुरपूजिते ।
जीवत्वं हि विना देवि यदि[1] मन्त्रं जपेत् सुधीः ॥ ५ ॥
तज्जपं चञ्चलापाङ्गि शवमेव न संशयः ।
सदा निद्रातुरो मन्त्री[2] जीवहीनश्च पार्वति ॥ ६ ॥

श्रीं क्लीं ह्रीं हुं स्त्रीं श्रीं ओम् ।

कथं सिद्धिमवाप्नोति निद्रायां वरवर्णिनि ।
जीवन्यासेन चार्वङ्गि निद्राभङ्गो भवेद् ध्रुवम् ॥ ७ ॥
बिन्दुतत्त्वं प्रजप्याथ ज्ञानतत्त्वञ्च सुन्दरि ।
प्राणतत्त्वञ्च चार्वङ्गि देवतत्त्वं तथैव च ॥ ८ ॥
जपतत्त्वं मन्त्रतत्त्वं ध्यानतत्त्वं सुलोचने ।
अक्षरे अक्षरे देवि अज्ञात्वा प्रजपेद् यदि[3] ॥ ९ ॥
संयोगं यद् भवेद् योगं प्रफुल्लं तदुदाहृतम् ।
केवलं कलिकाबीजं तद्वर्णं[4] सुरपूजिते ॥१०॥
आगतं मम वक्त्राद् यद् गतं तव मुखे सदा ।
मतं श्रीवासुदेवस्य इति ते कथितं प्रिये ॥११॥
एतन्मन्त्रं महागुह्यं ईशानमुखसंयुतम् ।
एतन्मन्त्रप्रभावाद्धि कालकूटं पिबाम्यहम् ॥१२॥

---

१. यं–क. ग. ।

२. मन्त्रो–ख. घ. ।

३. इतः परम्–"सर्वं व्यर्थं भवेद् देवी कुतः पूजा कुतो जपः । सर्वं व्यर्थं भवेत्तस्य अन्त्ये करकमाप्नुयात् ।।" इत्यधिकः–घ. ।

४. वर्ण–क. ख. च. ।

एतास्तु मातृका वर्णाः सुषुम्नामध्यवर्तिनः ।
एते वर्णा वरारोहे महायोगमयाः[1] सदा ॥१३॥

अक्षरं हि विना देवि न योगो जायते मम ।
योगमार्गे भक्तिमार्गे मुक्तिमार्गे च सुन्दरि ॥१४॥

ध्यानमार्गे तु पूजायां जपमार्गे तथैव च ।
एतास्तु युवतीवर्णाः कार्यकारणरूपिणः ॥१५॥

एतन्मन्त्रमविज्ञाय[2] न जप्तव्यं कदाचन ।
एतन्मन्त्रमविज्ञाय पुराणं संहितां स्मृतिम् ॥१६॥

पठन्नरकमाप्नोति पितृभिः सह नान्यथा ।
सर्वधर्मेषु यत्कर्म सर्वयज्ञेषु यत्फलम् ॥१७॥

सर्वदानेषु तीर्थेषु यत्फलं प्राप्नुयाद् द्विजः ।
तत्फलं समवाप्नोति वर्णानां ध्यानमात्रतः ॥१८॥

वर्णध्यानमविज्ञाय वर्णतत्त्वं तथैव च ।
पुराणवाचको यस्तु ध्रुवं नरकमाप्नुयात् ॥१९॥

कोटिवंशान् समादाय स द्विजो नरकं व्रजेत् ।
यथा वक्ता तथा श्रोता द्वयोरपि फलं समम् ॥२०॥

कथमज्ञानतो मूर्खोऽज्ञात्वा वर्णविनिर्णयम् ।
पुराणानि पठित्वा वै निश्चयं नरकं व्रजेत् ॥२१॥

निश्चयश्च महेशानि दारिद्र्यं घोरमाप्नुयात् ।
निश्चयं रोगमाप्नोति जम्बूद्वीपस्य भारते ॥२२॥

---

१. मम योगमयः सदा—ख. घ. ।
२. तन्त्रं—ख. घ. ।

स [1]स्यात् सनातनो देवो वाणी त्रिपुरसुन्दरी ।
सर्वासां युवतीनाञ्च भवानी चाधिदेवता ॥२३॥

ध्यायेद् देवीं महामायां मातृकां जगदीश्वरीम् ।
रक्तपद्मासनगतां रक्तांशुकपरिष्कृताम् ॥२४॥

रक्तचन्दनलिप्ताङ्गीं रक्तवस्त्रोत्तरीयिणीम् ।
रक्तबिम्बफलाभासां राकाचन्द्रमुखीं पराम् ॥२५॥

भ्रमद्भ्रमरलीलाभनयनत्रयराजिताम् ।
कटाक्षशतसंयुक्तां चारुचूडाविनोदिनीम् ॥२६॥

रक्तालङ्कारसुभगां त्रिभङ्गिललिताकृतिम् ।
हास्ययुक्तां प्रफुल्लास्यां ज्योत्स्नाजालसमच्छविम् ॥२७॥

मृणालसदृशाकारबाहुवल्लीविराजिताम् ।
कञ्चुलीसंयुतां रम्यां कदम्बकोरकस्तनीम् ॥२८॥

नखानां किरणोद्योतै[2]र्भुवनं परिमोहयन् ।
एवं ध्यात्वा महामायां भवानीं शिवमोहिनीम् ॥२९॥

अपरैकं प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।
हृत्पद्मे द्वादशदले वराहोपरि भावयेत् ॥३०॥

यस्य देवस्य[3] यद्बीजं प्रफुल्लकलिकां तथा ।
ध्यात्वा देवीं यथाशक्त्या तस्मादाविर्भवेत् स्वयम् ॥३१॥

शक्तिर्वा विष्णुदेवो वा शिवो वा सूर्य एव वा ।
बीजादुत्पद्यते देवि परंब्रह्म निरञ्जनम् ॥३२॥

---

१. तस्मात्—ख. ।

२. भरणं परिमोहयेत्—क., भुवनं परिमोहिताम्—घ. ।

३. बीजम्—क. ख. घ. ।

बीजध्यानं विना देवि कथमुत्पद्यते हरिः ।
सदाशिवो महादेवः कथमुत्पद्यते स्वयम् ॥३३॥
सदाशिवस्य जननी बीजरूपा सनातनी ।
इति यो वेत्ति स ज्ञानी स एव वीरसत्तमः[1] ॥३४॥
गुरुर्योग्यः[2] स एव स्यात् स एव परमः शिवः ।
सर्वेषाञ्चैव बीजानामेवं ध्यानं समाचरेत् ॥३५॥
[3]शुक्लविद्युत्समाकारां नयनत्रयधारिणीम् ।
कटाक्षविशिखैर्युक्तां चतुर्बाहुसमन्वितताम् ॥३६॥
त्रिभङ्गललिताकारां चारुचूडाविराजिताम् ।
पुण्डरीकोपविष्टाञ्च राकाचन्द्रमुखीं पराम् ॥३७॥
नानागन्धप्रलिप्ताङ्गीं सुगन्धिमाल्यसंस्कृताम् ।
नानाभरणदीप्ताङ्गीं[4] मेघांशुकपरिष्कृताम्[5] ॥३८॥
वीणावाद्यविनोदेन उल्लसन्तीं जगत्त्रयम् ।
आद्यां ब्रह्ममयीं देवीमिष्टबीजस्वरूपिणीम् ॥३९॥
[6]ब्रह्माद्या देवता यस्याश्चरणे पतिता[7] भुवि ।
भजेऽहं मातृकादेवीं वेदमाता[8] सनातनीम् ॥४०॥

---

१. वीरसम्मतः–ख. घ. ।
२. दिव्यः–ख. घ. ।
३. "तद्ध्यानं शृणु चार्वङ्गि सर्वासां फलमाप्नुयात्" इत्यधिकः–क ख. घ. ।
४. लिप्ताङ्गीं–क. ग. ।
५. मेध्यां–ख. घ. ।
६. इति यो वेत्ति स ज्ञानी स एव वीरसत्तमः ।
गुरुर्योग्यः स एव स्यात् स एव परमः शिवः ॥
सर्वेष्वेव बीजानां एवं ध्यानं समाचरेत् ।
शुक्लविद्युत्समाकारां नयनत्रयधारिणीम् ॥ इत्यधिकः–घ. ।
७. स्थिता–ख. घ. ।
८. देवमाता–ख. ।

अनेन विधिना ध्यात्वा सर्वासां भवति प्रियः ।
बीजमेतन्महेशानि प्रथमं दशधा जपेत् ॥४१॥

तन्मन्त्रं चञ्चलापाङ्गि आनन्दपटले[1] स्थितम् ।
ततो ध्यात्वा पुनर्जप्त्वा दशधा वरवर्णिनि ॥४२॥

एतत्तत्त्वमविज्ञाय प्रजपेद् यदि पार्वति ।
सर्वपापमयः सोऽपि भवेत् शूकरवद् द्विजः ॥४३॥

तत्त्वमेतन्महागुह्यं योगमार्गे स्थितं सदा ।
तव भक्त्या मयाख्यातमतिगुह्यं सुलोचने ॥४४॥

तन्त्राणां[2] सारमेतत्तु सर्वसिद्धिप्रदायकम् ।
स योगी योगवेत्ता च योगात्मा योगनायकः ।
योगाचार्यो योगमाया योगानन्दप्रदायकः[3] ॥४५॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
द्वादशः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

अधुना संप्रवक्ष्यामि आनन्दपटलं प्रिये ।
शृणु तत्त्वं प्रवक्ष्यामि सुन्दरं सुमनोहरम् ॥ १ ॥

हृत्पद्मे द्वादशदले विद्युत्कोटिसमन्विते ।
भावयेन्मन्त्रबीजानि यस्य या इष्टदेवता ॥ २ ॥

भावयेत् प्रथमं बीजं वराटोपरि पार्वति ।
अन्यानि सर्वबीजानि पत्रमध्ये पृथक् पृथक् ॥ ३ ॥

---

१. कूटने–ग. ।

२. मन्त्राणाम्–ख. ।

३. प्रवर्तकः–ख. घ. ।

एवं हि दशधा जप्त्वा क्रमाद् बीजं जपेत् प्रिये ।
दशधा दशधा देवि प्रजपेद् बीजमुत्तमम् ॥ ४ ॥

ततस्तु बीजमध्ये तु ध्यायेदिष्टं सुलोचने ।
तस्माद् बीजाद् वरारोहे देवता जायते ध्रुवम् ॥ ५ ॥

तस्य देवस्य चार्वङ्गि निरीक्ष्य देहसुन्दरम् ।
चरणात् केशपर्यन्तं नानावेशमयं प्रिये ॥ ६ ॥

निरीक्ष्य मनसा भक्त्या पुनर्ध्यानं समाचरेत् ।
ततस्तु प्रजपेद् बीजं वर्णानन्दस्वरूपिणम् ॥ ७ ॥

प्रजपेत् प्रथमं बीजं बीजध्यानं ततः परम् ।
एतत्तु प्रथमं बीजं साधनं दुर्लभं प्रिये ॥ ८ ॥

सर्वेषां बीजवर्णानां यदि जानाति साधकः ।
ध्यानं परमकल्याणं वर्णे वर्णे पृथक् पृथक् ॥ ९ ॥

अज्ञात्वा चञ्चलापाङ्गि मातृकाध्यानमाचरेत् ।
तदेवं सहसा देवि सर्वासां जायते ध्रुवम् ॥१०॥

यस्य मन्त्रस्य यद्वर्णं तस्य ध्यानं पृथक् पृथक् ।
बीजात्तु जायते विष्णुरवतारवरः प्रिये ॥११॥

बीजात्तु जायते रामो बीजात् कृष्णः प्रजायते ।
स्थावरं जङ्गमं देवि सर्वं बीजात् प्रजायते ॥१२॥

आज्ञाचक्रे विशुद्धौ च मूलाधारे ततः प्रिये ।
स्वाधिष्ठाने ततो देवि मणिपूरे च पार्वति ॥१३॥

अनेन विधिना देवि कुर्यात् साधकसत्तमः ।
प्रत्यहं कुरुते यस्तु स सिद्धः शिव एव सः ॥१४॥

प्रत्यहं चञ्चलापाङ्गि षट्चक्रं भ्रामयेत्तु यः ।
साधनाच्च महेशानि तस्मात् कुसुमवत् प्रिये ॥१५॥

नित्यश्च हृदये कुर्यादवश्यं वद किं प्रिये ।
बीजस्य चञ्चलापाङ्गि ध्यानं मन्त्रं पृथक् पृथक् ॥१६॥

साक्षात् श्रीः प्रकृतिर्देवी बीजरूपा सनातनी ।
सनातनस्य जननी सर्ववर्णमयी प्रिये ॥१७॥

जपस्य प्रथमे काले बीजस्य तत्त्वमुच्चरेत् ।
ततस्तु प्रजपेन्मन्त्रं ससेतु[1] वरवर्णिनि ॥१८॥

बीजतत्त्वमविज्ञाय प्रजपेद् यदि कोटिधा ।
सर्वं तस्य वृथा देवि अरण्ये रोदनं यथा ॥१९॥

तत्त्वत्रयं प्रवक्ष्यामि मन्त्राणां शृणु सुन्दरि ।
विभाव्य नाभिपद्मेषु वायुबीजं सबिन्दुकम् ॥२०॥

मन्त्रस्य प्रथमं वायुबीजं मध्ये विचिन्त्य वै ।
ध्यात्वा बीजं महेशानि प्रजपेद् बीजमुत्तमम् ॥२१॥

दशधा प्रजपेद् बीजं दशधा ध्यानमेव च ।
दशतत्त्वयुतं मन्त्रं तदैव सहसा भवेत् ॥२२॥

संशोध्य बीजं चार्वङ्गि वह्निबीजे विचिन्त्य वै ।
हृत्पद्मे वह्निमध्ये तु ध्यात्वा बीजं हुताशनम् ॥२३॥

दशधा प्रजपेन्मन्त्रं दशधा ध्यानमेव च ।
विंशतत्त्वयुतं मन्त्रं तदैव सहसा भवेत् ॥२४॥

मातृस्वरात्ततो देवि गलितामृतधारया ।
आप्लाव्य बीजं चार्वङ्गि सर्वावयवसंयुतम् ॥२५॥

तदैव सहसा कृत्वा ललाटे वरुणालये ।
वरुणस्य तु मध्ये तु तद्बीजं भावयेत् प्रिये ॥२६॥

---

१. ससेत्तु—ख. ग. घ. ।

दशधा च जपित्वा वै बीजञ्च दशधा स्मरेत् ।
तदामृतमयं बीजं सहसा भवति प्रिये ॥२७॥

विष्णुमन्त्रेषु देवेशि चन्द्रबीजेषु भावयेत् ।
अन्यत् सर्वेषु मन्त्रेषु भावयेद् वरुणालये ॥२८॥

त्रिंशत्तत्त्वयुतं मन्त्रं तदैव भवति प्रिये ।
तत्त्वातीतं स्वधातीतं[1] वाचा विद्यां जपेत् प्रिये ॥२९॥

अनेन विधिहीनश्च तज्जपं विफलं सदा ।
तत्त्वहीनं जपेद्यस्तु विफलं सततं प्रिये ॥३०॥

शोषणं दहनं देवि अमृतं ज्ञानसंज्ञकम् ।
एतत् तत्त्वमयं भद्रे शीघ्रं सिद्धिप्रदायकम् ॥३१॥

यो जपेत्तत्त्वरहितं तस्य हानिः पदे पदे ।
तस्मात्तत्त्वं शुभाराध्य तस्मान्मन्त्रं जपेत् सुधीः ॥३२॥

अनेन विधिना देवि सर्वतत्त्वमयं मनुम् ।
कृष्णमन्त्रेषु रामेषु अवतारवरेषु च ॥३३॥

सौरे गणपतौ देवि शक्तिमन्त्रे स्वयं प्रिये ।
शिवमन्त्रेषु चार्वङ्गि अन्यतन्त्रे तथैव च ॥३४॥

त्रिंशत्तत्त्वयुतं कृत्वा मन्त्रं बीजं सुलोचने ।
एवमेव विधानेन[2] बीजे जीवत्वमाप्नुयात् ॥३५॥

तस्माद् बीजाद् वरारोहे रामकृष्णादयश्च ये ।
उत्पद्यन्ते वरारोहे नान्यथा वरवर्णिनि ॥३६॥

एतन्मन्त्रं सकृत् कृत्वा प्रजपेदनिशं मनुम् ।
प्रजपेदनिशं विद्यां शौचाशौचं न चाचरेत् ॥३७॥

---

१. तत्त्वातीतं स्वरातीतं विद्या मन्त्रं जपेत् प्रिये—क., तत्त्वातीतस्वभावा च विद्यामन्त्रं जपेत् प्रिये—ख. घ. ।

२. विपद्यन्ते—क. ख. घ. ।

मन्त्रे अक्षरबुद्धिः स्याद् गुरौ तु मानवः प्रिये ।
देवतायां वरारोहे प्रतिमाबुद्धिर्जायते ॥३८॥
किं तस्य जपपूजायां सर्वं व्यर्थं कदर्थनम् ।
इति ते कथितं देवि बीजतत्त्वं सुगोपनम् ॥३९॥
कस्यचिन्नैव वक्तव्यं यदि कल्याणमिच्छसि ।
एतज्ज्ञानमविज्ञाय स कथं गुरुतां व्रजेत् ॥४०॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
त्रयोदशः पटलः ॥

---

श्रीमहादेव उवाच—

देवदेव महादेव संसारार्णवतारक ।
कृपया कथयेशान वंकारतत्त्वमुत्तमम् ॥१॥

श्रीमहादेव उवाच—

पूर्वोक्तं चञ्चलापाङ्गि गायत्रीतत्त्वमुत्तमम् ।
गायत्री या वरारोहे चतुर्वकारसंयुता ॥२॥
कान्तं शेषवकारञ्च वरुणं हृदि भावय ।
यवर्गं वायुबीजञ्च हृदि भावय पार्वति ॥३॥
यवर्गं यत्तु देवेशि वायुबीजं तदुच्यते ।
यकारस्य चतुर्थो यो वायुबीजं प्रकीर्तितम् ॥४॥
यवर्गञ्च वायुबीजं मयैतन्निश्चितं प्रिये ।
सर्वविद्यासु मन्त्रेषु वरुणं भावय प्रिये ॥५॥
वह्निजायायुतानाञ्च पवर्गं हृदि भावय ।
गायत्री संस्थिता देवि पापोच्चाटनकर्मणि ॥६॥

पूर्वोक्तध्यानमार्गेण भावना परिकीर्त्तिता ।
ध्यानभेदेन चार्वङ्गि वकारं भावय प्रिये ॥७॥

अधुना संप्रवक्ष्यामि ककारध्यानमुत्तमम् ।
विशेषं शृणु वक्ष्यामि ककारस्यातिदुर्लभम् ॥८॥

यन्नोक्तमानन्दपटले अधुना कथयामि ते ।
तद् ध्यात्वा साधको याति दुर्लभं मोक्षमव्ययम् ॥९॥

येन ध्यानप्रकाशेन मन्त्रं तन्त्रञ्च सिध्यति ।
एवं तद्ध्यानमात्रेण शिवतुल्यो भवेन्नरः ॥१०॥

ककारध्यानमात्रेण सर्ववर्णं हि सिध्यति ।
ककारभावनाच्चैव सर्वासां भावना भवेत् ॥११॥

तस्मात् सर्वप्रयत्नेन ककारं हृदि भावय ।
ओम् प्रातरादित्यसंकाशां सिंहपृष्ठोपरिस्थिताम् ॥१२॥

रक्तपद्मोपविष्टाञ्च रक्तवस्त्रपरीवृताम् ।
चतुर्भुजां त्रिनेत्राञ्च पञ्चबाणधनुर्धराम् ॥१३॥
वरदाभयदात्रीञ्च पीनतुङ्गपयोधराम् ।
मृणालसदृशाकारचतुर्बाहुपरीवृताम् ॥१४॥

शङ्खकङ्कणकेयूरैरङ्गदैः परिशोभिताम् ।
सुगन्धिमल्लिकाहारैः कबरीमध्यशोभिताम् ॥१५॥

त्रिभङ्गललिताकारां चारुचूडाविराजिताम् ।
शिखिपुच्छयुतां चूडां नानारत्नसमन्विताम् ॥१६॥

ईषद्[2]हास्यप्रसन्नास्यां मुक्तारञ्जितनासिकाम् ।
माणिक्यकिरणोद्योतदन्तपङ्क्तिविराजिताम् ॥१७॥

---

१. प्रेतो—ङ. ।
२. कास्य—ङ. ।

पूर्णचन्द्रसमाभासनखपङ्क्तिमनुत्तमाम् ।
स्वर्णसूत्रयुतहाररत्नचारुविनिर्मिताम् ॥१८॥

कटाक्षविशिखोद्दीप्तभ्रूलतापरिशोभिताम् ।
तीर्थत्रययुतां रम्यां नयनत्रयराजिताम् ॥१९॥

रामरम्भासमाकार-ऊरुद्वयविराजिताम् ।
बृहल्लतासुसंयुक्तरत्नकिञ्जल्कशोभिताम्[1] ॥२०॥

अष्टवर्गैः सेविताञ्च अष्टवर्गैः प्रपूजिताम् ।
सिन्दूरतिलकोदीप्ताम[2]ञ्जनाङ्कित[3]लोचनाम् ॥२१॥

ललाटपट्टिकाशुभ्रामर्द्धचन्द्रपरीवृताम् ।
[4]ब्रह्मादिदेवतावृन्दैः शिरसि धार्यते च या[5] ॥२२॥

किमाख्यां कामिनीं साक्षात् ककारवर[6]रूपिणीम् ।
एवं ध्यात्वा वरारोहे प्रजपेद् यदि साधकः ॥२३॥

तदैव सहसा सिद्धिर्जायते तस्य सुन्दरि ।
वर्णज्ञानं[7] विना देवि न जपेत् पार्शवः[8] क्वचित् ॥२४॥

किं तस्य ध्यानपूजायां पुरश्चर्याशितं शतम् ।
किं तस्य जपहोमेन चन्द्रसूर्यस्य पर्वणि ॥२५॥

वर्णज्ञानं विना देवि वैष्णवः शैव एव वा ।
एकदा नोच्चरेद्देवि अज्ञात्वा वर्णदीपनीम् ॥२६॥

---

१. बृहन्नितम्बसंयुक्तां–क. ।
२. तिलकालक्ताम्–ङ. ।
३. अञ्जित–ङ. ।
४. नानागन्धप्रतिप्ताङ्गीं नानागन्धपरिष्कृताम्–क. ।
५. सा–क. ख. ग. ।
६. वरण–क. ।
७. वर्णध्यानं–क. ।
८. पामरः–क. ।

सर्वासां मन्त्रविद्यानां दीपनी या प्रकीर्तिता ।
सर्वेषां शास्त्रमध्ये तु प्रशस्ता वर्णदीपनी ॥२७॥

शक्तिमन्त्रे तथा सौरे गणेशमर्च्यते सदा ।
ज्ञात्वा तन्त्रं प्रकुर्वीत दीक्षां पूजां शुचिस्मिते ॥२८॥

श्रीमहादेव उवाच—

रहस्यं तत्र वक्ष्यामि अत्यन्तगोपनं श्रृणु ।
यत्कृत्वा साधको याति परमं पदमुत्तमम् ॥२९॥

ललाटे तिलकं कृत्वा चन्दनेन सुगन्धिना ।
कर्पूरागुरुकस्तूरीरोचनाकुङ्कुमैः प्रिये ॥३०॥

तिलकं धारयेद् यत्नादेकीकृत्य मनोहरम् ।
त्रिकोणं सुन्दरं स्वच्छं तिलकं जनमोहनम् ॥३१॥

एकीकृत्य पृथग् वापि नानावस्तुषु कारयेत् ।
राज्यार्थी रक्तवर्णेन मोक्षार्थी श्वेतचन्दनैः ॥३२॥

वश्ये रोचनया देवि तिलकं कारयेत् सुधीः ।
मोहने चञ्चलापाङ्गि अगुरुकुङ्कुमादिना ॥३३॥

कृष्णगन्धं वरारोहे शत्रोर्मारणकर्मणि ।
ललाटे बाहुमूले च तथा स्कन्धद्वयेषु च ॥३४॥

हृत्पद्मपार्श्वयुगले पृष्ठे नाभौ च सुन्दरि ।
ऊरुद्वये गण्डयुग्मे अधः पादद्वयेषु च ॥३५॥

विलिखेद् यत्नतो देवि ककारवर्णमुत्तमम् ।
चन्द्रबिन्दुयुतं कृत्वा विलिखेद् वरवर्णिनि ॥३६॥

तदैव सहसा देवि विद्या मन्त्रश्च सिध्यति ।
मोहयेदखिलान् लोकान् वशयेदिष्टदेवताम् ॥३७॥

---

१. तत्र—ख. ग. घ. ।

इष्टदेवं वशं कृत्वा एकदा प्रजपेद् यदि ।
तत्क्षणाच्चञ्चलापाङ्गि देवत्वमुपजायते ॥३८॥

देवत्वं हि विना देवि कुतः पूजा कुतो जपः ।
अन्यथा प्रेतवत् पूजा वैष्णवे च विशेषतः ॥३९॥

ललाटे तिलकं कृत्वा रोचनासु शुचिस्मिते ।
तन्मध्ये विलिखेद् वर्णं ककारं सुमनोहरम् ॥४०॥

सामान्यमेतत् कथितं तिलकं जनमोहनम् ।
एतत्तु तिलकञ्चैव वशयेदपि केशवम् ॥४१॥

जपासनं दशम्यान्तु तदारभ्य च प्रत्यहम् ।
एतद्वर्णमविज्ञाय विषये समुपास्महे ।
स भ्रष्टः स च पापिष्ठो रौरवं नरकं व्रजेत् ॥५२॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
चतुर्दशः पटलः ॥

—:०:—

श्रीदेवी उवाच—

देवदेव महादेव नीलकण्ठ त्रिलोचन ।
हृत्तत्वं कथयेशान यद्यहं तव वल्लभा ॥ १ ॥

श्रीमहादेव उवाच—

श्रृणु देवि प्रवक्ष्यामि ज्ञानं परमदुर्लभम् ।
येन विज्ञानमात्रेण विष्णुः स्याद् वैष्णवः प्रिये ॥ २ ॥

हृत्पद्मे द्वादशदले स्वविद्यां भावयेत् सुधीः ।
ककारं भावयेदादौ वराटोपरि पार्वति ॥ ३ ॥

---

१. अष्टोत्तरशतं जप्त्वा पूजयेदिष्टदेवताम् ।
पूजाधिकारि चार्वङ्गि देवत्वमुपजायते ॥ इत्यधिकः—क. ।

पत्रे पत्रे ततो देवि स्वविद्यां प्रजपेत् सुधीः ।
मन्त्राणां प्रथमं वीजं ध्यात्वादौ प्रजपेत् सुधीः ॥ ४ ॥

तस्मान्मन्त्रात्ततो देवि जायते देवविग्रहम् ।
देवताञ्च ततो ध्यात्वा तन्त्रोक्त[1]ध्यानवर्त्मना ॥ ५ ॥

ध्यानञ्च त्रिविधं देवि समानफलदायकम् ।
कृत्वा ध्यानत्रयं देवि हृत्पद्मे परमेश्वरि ॥ ६ ॥

सहस्रदलपद्मान्तर्मध्यस्थाने गुरोर्मुखात् ।
स्वविद्यां भावयेद्देवि कोटिविद्युत्समाकृतिम् ॥ ७ ॥

भावयेदनिशं भक्त्या सिद्धो भवति तत्क्षणात् ।
जायन्ते देवि वीजात्तु रामकृष्णादयश्च ये ॥ ८ ॥

ते[2] सर्वे चञ्चलापाङ्गि वीजात्तु प्रभवन्ति वै ।
ज्ञात्वा सनातनं तत्त्वं आनन्दपटले स्थितम् ॥ ९ ॥

पूजा कार्या च चार्वङ्गि सर्वसिद्धिमयो भवेत् ।
इदं सनातनं तत्त्वमज्ञात्वा नरकं व्रजेत् ॥१०॥

शूद्रः शूद्रमुखाच्छ्रुत्वा विद्यां वा मन्त्रमुत्तमम् ।
रौरवं नरकं यं यं तं तमाप्नोति निश्चितम् ॥११॥

न शूद्राय मतिं[3] दद्याद् न च शूद्रं कदाचन ।
उभयोर्नरकं देवि कोटि[4]कुलसमायुतम् ॥१२॥

---

१. मन्त्रोक्त—क. घ. ।
२. 'ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्यादयश्च ये' इत्यधिकः—क. ।
३. मनुं—क. ।
४. त्रिकोटि—क. ।

अनाचारो द्विजो यस्तु शूद्राणां गुरुरेव सः ।
यदि शूद्रो भवेद्देवि सत्यवादी जितेन्द्रियः ॥१३॥

स धर्मे निरतो भूत्वा श्रुत्वा द्विजगुरोर्मुखात् ।
सर्वसिद्धिमवाप्नोति शीघ्रं देवमवाप्नुयात् ॥१४॥

यद्देशे विद्यते शूद्रः पातकी मन्त्रविक्रयी ।
तद्देशं पतितं मन्ये तस्य राजा च पातकी ॥१५॥

स कथं चञ्चलापाङ्गि जिह्वायां प्रजपेन्मनुम् ।
तस्य जिह्वा वरारोहे मूत्रशोणितविड्यथा ॥१६॥

तन्मुखं मूत्रविट्कूपमन्नं विष्ठासमं सदा ।
तज्जलं शोणितं साक्षाच्चाण्डालसमजातिषु ॥१७॥

पृथिव्यां यानि तीर्थानि सर्वदेवमयानि वै ।
आलोक्य तन्मुखं तीर्थं तत्स्थानं त्यज्य (?)गच्छति ॥१८॥

तीर्थकोटिः पलायन्ते दृष्ट्वा तन्मुखमण्डलम् ।
गङ्गाजलं परित्यज्य द्रुतं स्वस्थानमवाप्नुयात् ॥१९॥

महापातकिनो ये च ब्रह्महत्यादिसंयुताः ।
त्रैलोक्यपावनी गङ्गा तान् पुनाति न संशयः ॥२०॥

मन्त्रविक्रयिणः शूद्राः सदा नरकगामिनः ।
कलौ तु भारते वर्षे भविष्यन्ति न संशयः ॥२१॥

मन्त्रविक्रयिणः शूद्रा जायन्ते व्याघ्रयोनिषु ।
तत्संसर्गश्च यो विप्रश्चर्मकारः स एव हि ॥२२॥

चाण्डालसदृशः सोऽपि स एव वर्णसङ्करः ।
स्वधर्मनिरतः शूद्रो विद्यामन्त्रं शृणोति यः ॥२३॥

स धन्यः पृथिवीमध्ये स एव वैष्णवोत्तमः ।
स शाक्तः शिवभक्तश्च गाणेशः सौर एव च ।
एतत्ते कथितं देवि वर्णज्ञानविनिर्णयम् ॥२४॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे ज्ञानानन्दे
पञ्चदशः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

अपरैकं प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।
यत्कृत्वा चञ्चलापाङ्गि रावणाद्या निशाचराः ॥ १ ॥
अवाप्यमतिवृद्धिञ्च त्रैलोक्याधिपतिः प्रभुः ।
सांकेतं परमं गुह्यमक्षराणां पृथक् पृथक् ॥ २ ॥
एतत्तत्त्वं विजानाति हरिर्ब्रह्मा पुरन्दरः ।
पञ्चाशद्वर्णसङ्केतं सावधानावधारय ॥ ३ ॥
अकृत्वा साधको याति रौरवं नरकं व्रजेत् ।
रौरवं नरकं याति पुनरावृत्तिर्दुर्लभम्[1] ॥ ४ ॥
विशेषं विष्णुमन्त्रेषु कुर्याद् वैष्णवसत्तमः ।
अकृत्वा वैष्णवो याति नरकं[2] कोटिकोटिशः ॥ ५ ॥
मासि मासि वरारोहे शनिभौमदिने प्रिये ।
प्रातः स्नानं समासाद्य कृत्वा सन्ध्यां समाप्य च ॥ ६ ॥
सूर्यायार्घ्यं ततो दद्यात् पादप्रक्षालनाय च ।
यागमण्डपमासाद्य भूतशुद्धिं विधाय च ॥ ७ ॥
कुर्यान्न्यासं मातृकायाः प्राणायामं ततः परम् ।
न्यासानन्यांस्ततः कुर्यात्तन्त्रमार्गेण पार्वति ॥ ८ ॥

---

१. दुर्लभा—क. ।

२. नरकान् नरकोटिशः—क. ङ. ।

शुक्लाम्बरधरः स्रग्वी गन्धलिप्तकलेवरः ।
रक्तासनं समासाद्य कुशासनमथापि वा ॥ ९ ॥

प्रलिप्य ताम्रपात्रेषु सिन्दूरं रक्तचन्दनम् ।
विलिख्य मातृकावर्णं ह्यस्मिन् पात्रे पृथक् पृथक् ॥१०॥

अकारादिक्षकारान्तं सबिन्दुं चन्द्रसंयुतम् ।
महापद्मान्तरस्थानादानीय ब्रह्मवक्त्रकम् ॥११॥

वामनासापथेनैव श्वासं पुष्पाञ्जलौ क्षिपेत् ।
तत्पुष्पं चञ्चलापाङ्गि कुर्यात् पुष्पस्य सञ्चयम्[1] ॥१२॥

ध्यात्वा तु पूजयेद्देवीं क्रमेणैव पृथक् पृथक् ।
गन्धैर्नानाविधैर्देवीं पुष्पैर्नानाविधैस्तथा ॥१३॥

धूपैर्नानाविधैर्देवि दीपैर्नानाविधैस्तथा ।
नैवेद्यं विविधं देवि चतुर्विधमयं तथा ॥१४॥

दत्त्वा नानाफलादींश्च पूजयेत् परमेश्वरीम् ।
नानापुष्पमयैर्हारैः शुक्रादिगन्धसंयुतम् ॥१५॥

महापद्मवनान्तस्थमष्टोत्तरशतं जपेत् ।
प्रजपेद् मातृकावर्णं वर्णे वर्णे पृथक् पृथक् ॥१६॥

प्रतिपद्मे जपेन्मन्त्रं यस्मिन् पद्मे तु यत् स्थितम् ।
तस्मिन् पद्मे वनान्तस्थः स्वविद्यां प्रजपेच्छतम् ॥१७॥

सुप्रसन्ना मातृका स्यात् तदैव सहसा प्रिये ।
अकृत्वा मातृकापूजां मासि मासि वरानने ॥१८॥

---

१. पञ्चाशद्ध्यानमाचर्य क्षणादानीय मातृकाम् ।
जीवन्यासं ततः कुर्यात् पूर्वमन्त्रे पृथक् पृथक् ॥ इत्यधिकः–क. ।

इष्टविद्यां जपेद्यस्तु तस्य हानिं शृणु प्रिये ।
चित्रानाडीगता भूत्वा मातृका जगदीश्वरी ॥१९॥
सर्वेषां वैष्णवानाञ्च शाक्तानां वरवर्णिनि ।
शैवानाञ्च महेशानि अन्येषाञ्चैव सुन्दरि[१] ॥२०॥
हरन्ति वैष्णवादीनां नान्यथा वचनं मम ।
प्रशस्ता मातृकापूजा दीक्षा या मत्त एव हि ॥२१॥
पुरश्चर्या हि चार्वङ्गि पूजनीया पृथक् पृथक् ।
माता सा सर्वविद्यानां मन्त्राणाञ्च पृथक् पृथक् ॥२२॥
यस्मादुत्पद्यते विद्या मन्त्रश्च सुरवन्दिते ।
तस्मात्तु यत्नतो देवि तासां पूजा विधीयते ॥२३॥
नान्यथा निष्फला पूजा संवत्सरकृता च या ।
अनेन विधिना देवि पूजयेद् यदि मातृकाम् ॥२४॥
प्रसन्ना मातृका देवि पुत्रत्वेनानुकल्पते ।
रहितो मातृकापूजां जपपूजनतत्परः ॥२५॥
तस्य सर्वं महामाया मातृका जगदीश्वरी ।
हरन्ति मन्त्रतेजांसि आयुर्विद्यायशोबलम् ॥२६॥
अपरैकं प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।
अनुलोमविलोमेन कथितं शृणु पार्वति ॥२७॥
अनुलोमविलोमञ्च तथैव हि महेश्वरि ।
सर्वेषां जपयज्ञानां सहसा फलभाग् भवेत् ॥२८॥
सहसा सिद्धिमाप्नोति सहसा धर्ममाप्नुयात् ।
सहसा अर्थमाप्नोति सहसा मोक्षमाप्नुयात् ॥२९॥

---

१. हरन्ति सर्वतेजांसि मातृकाचक्रदेवताः ।
आयुर्वित्तं यशस्तेजो मज्जा शुक्राणि धातवः ॥ इत्यधिकः—क. ।

पौर्णमास्याममावास्यां मासि मासि प्रयत्नतः ।
यः करोति प्रसन्नात्मा स एव श्रीसदाशिवः ॥३०॥

ज्ञात्वा संदीपनीं विद्यां आनन्दपटले स्थिताम् ।
अज्ञात्वा दीपनीं विद्यां चतुर्वर्गफलप्रदाम् ।
रहस्यमेतदन्यच्च सर्वञ्च विफलं व्रजेत् ॥३१॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
षोडशः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

एतत्तत्त्वमविज्ञाय न भावो जायते प्रिये ।
न देवो विद्यते काष्ठे न पाषाणे च पार्वति ॥ १ ॥

भावेषु विद्यते देवि भावो मोक्षस्वरूपधृक् ।
दिव्यभावो वीरभावः सदैव सहसा भवेत् ॥ २ ॥

अन्यथा चञ्चलापाङ्गि पशुभावमयः सदा ।
स्वभावेन विना देवि कथं सिद्धिर्भवेत् प्रिये ॥ ३ ॥

तस्मात् प्रयत्नतो देवि वीरभावमयो भवेत् ।
अनेनैव विधानेन मातृकां पूजयेत्तु यः ॥ ४ ॥

स एव दिव्यभावः स्याद् वीरभावः स एव हि ।
स धनी स गुणी लोके मातृकां यस्तु पूजयेत् ॥ ५ ॥

श्रीमहादेव उवाच—

अपरैकं प्रवक्ष्यामि सामान्यं वरवर्णिनि ।
पूर्वोक्तध्यानमाचर्य प्रजपेन्मातृकामनुम् ॥ ६ ॥

ककारध्यानमात्रेण सर्वसिद्धिः प्रजायते ।
जप्त्वा ककारं चार्वङ्गि सर्वासां भवति प्रियः ॥ ७ ॥

सर्वासां मातृकां जप्त्वा ककारं केवलञ्च वा ।
ककारं सर्ववर्णानां मूलप्रकृति[1]रूपिणीम् ॥ ८ ॥

तस्मात् प्रयत्नतो देवि ककारं पूजयेत् प्रिये ।
प्रत्यहं पूजयेद्देवीं प्रथमं पूजयेत् सुधीः ॥ ९ ॥

सर्वासां फलमाप्नोति तदा भावमयो भवेत् ।
ककारपूजनाद् भद्रे सर्वासां पूजनं भवेत् ॥१०॥

प्रत्यहं कुरुते यस्तु प्रतिमासि वरानने ।
दिव्यवीरः स एव स्यात् सर्वपूजाफलं लभेत् ॥११॥

अकृत्वा चञ्चलापाङ्गि मनसापि च संस्मरेत् ।
सर्वपूजामयः सोऽपि सर्वभावमयः सदा ॥१२॥

भावतत्त्वमविज्ञाय विष्णुमन्त्रं कथं जपेत् ।
शक्तिमन्त्रं महेशानि स कथं पामरो जपेत् ॥१३॥

शिवमन्त्रञ्च सौरञ्च गाणेशं स कथं जपेत् ।
भावतत्त्वं विना देवि प्रजपेद्यदि कोटिधा ॥१४॥

सर्वं तस्य वृथा देवि नरकञ्च पदे पदे ।
स कथं चञ्चलापाङ्गि दिव्यवीरगुरुर्भवेत् ॥१५॥

पशुवत् सर्वदा देवि स एव पशुगुरुः प्रिये ।
भावतत्त्वेन रहितः स कथं पञ्चमं यजेत् ॥१६॥

वैष्णवस्तु वरारोहे मकारं पञ्चमं यजेत्[2] ।
देवताया वरारोहे शरीरं जायते ध्रुवम् ॥१७॥

---

१. मम प्रकृतिरेव च–घ. ।

२. विष्णुभावमयो भूत्वा मकारपञ्चमं यजेत् ।
मकारस्य च या पूजा अन्यथा विफला भवेत् ॥
ध्यानमात्रेण चार्वङ्गि ककारस्यातिदुर्लभा ॥ इत्यधिकः–क, घ. ।

एवं मन्त्रं प्रवक्ष्यामि आनन्दपटले स्थितम् ।
कालीं छिन्नादिविद्याश्च त्रिंशद्वर्ण[1]मयीं सदा ॥१८॥

तदा सिद्धिमयं सोऽपि अन्यथा विफलं सदा ।
इष्टध्यानं ततः कृत्वा हृदि मध्ये निरीक्षणम् ॥१९॥

प्रथमं कामिनीं ध्यात्वा प्रफुल्लां तदनन्तरम् ।
प्रफुल्लाध्यानमात्रेण जायते देवविग्रहम् ॥२०॥

प्रफुल्ला जायते देवि यस्य या इष्टदेवता ।
तदिष्टं भावयेद् देवि मन्त्रोक्तध्यानवर्त्मना ॥२१॥

देवतायाः शरीरश्च बीजादुत्पद्यते ध्रुवम् ।
मन्त्रस्य प्रथमाद्बीजाज्जायते नगनन्दिनि ॥२२॥

पञ्चाशन्मातृका या सा सर्वा युवतिरूपिणी ।
तस्मात्तु युवतीदेहाज्जायते कृष्णविग्रहम् ॥२३॥

रामः पद्मपलाशाक्षः प्रफुल्लो जायते ध्रुवम् ।
बीजादुत्पद्यते देवि परं ब्रह्म सनातनम् ॥२४॥

बीजसंयोगमात्रेण शब्दब्रह्म सनातनम् ।
अपरैकं प्रवक्ष्यामि रहस्यं परमाद्भुतम् ॥२५॥

पञ्चाशद्वर्णसंकेतं पञ्चाशत्तत्त्वमद्भुतम् ।
वर्णतत्त्वं विना देवि प्रजपेद्यदि कोटिधा ॥२६॥

सर्वं तस्य वृथा देवि हानिस्तस्य पदे पदे ।
हृत्पद्मे द्वादशदले वराटोपरि कामिनीम् ॥२७॥

ध्यात्वा प्रयत्नतो देवि तद्गर्भे वर्णभावनम् ।
अकारादिक्षकारान्तं त्रिकोणमध्यमण्डले ॥२८॥

---

१. द्वार—ख. ग. घ. ।

अनुलोमविलोमेन कामिन्या गर्भपञ्जरे ।
एकैकं भावयेद् देवि प्रतिवर्गे पृथक् पृथक् ॥२९॥

सर्वासां देवदेवीनां ककारं सुरपूजिते ।
ध्यात्वा प्रयत्नतो देवि अनुलोमविलोमतः ॥३०॥

पञ्चाशत्तत्त्वसङ्केतं पञ्चाशद्वर्णमेव हि ।
यः करोति नरो ज्ञात्वा शीघ्रं विद्या प्रसीदति ॥३१॥

किमसाध्यं वरारोहे यस्मै विद्या प्रसीदति ।
षट्चक्रे परमेशानि रहस्यं स्थानमुत्तमम् ॥३२॥

सहस्रारे गुरोः पादे पद्मं ध्यात्वा प्रयत्नतः ।
पञ्चाशद्वर्णसङ्केतं यः कुर्यान्मानवः प्रिये ॥३३॥

केशवं वशयेद्देवि रहस्येनाधुना ध्रुवम् ।
मोहयेच्चञ्चलापाङ्गि रुद्रं कालानलप्रभम् ॥३४॥

सर्वञ्चराचरं विश्वं सहसा मोहमानयेत् ।
एतत्ते कथितं देवि वर्णमोहनमुत्तमम् ॥३५॥

अज्ञात्वा मोहनं तत्त्वं प्रजपेद् यदि पार्वति ।
तस्मै लोका गन्धर्वाश्च वैरभावं व्रजन्ति वै ॥३६॥

प्रत्यक्षरमयं देवि कथितं वर्णमोहनम् ।
अज्ञात्वा मोहनं तत्त्वं यः कुर्यादन्यमोहनम् ॥३७॥

सर्वं तस्य वृथा देवि नान्यथा तु कदाचन ।
एतत्तत्वप्रभावाद्धि अचिरात् सिद्धिमाप्नुयात् ॥३८॥

गर्भमध्ये जपेन्मन्त्रं अनुलोमविलोमतः ।
जपित्वा वर्णमेकञ्च स्वस्थानमानयेच्च तम् ॥३९॥

---

१. "एतत्तत्त्वप्रभावात्तु कालकूटं पिवाम्यहम्" इत्यधिकः—क. घ. ।

पुनर्वर्णं[1] समाकृष्य कामिनीगर्भमध्यतः ।
प्रजपेदक्षरं देवि चन्द्रबिन्दुसमन्वितम् ॥४०॥
पञ्चाशदक्षरश्चैव भावयेच्च पृथक् पृथक् ।
अनेन विधिना देवि यो जपेन्मन्त्रमुत्तमम् ॥४१॥
तस्य शीघ्रं भवेत् सिद्धिरन्यथा विफला भवेत् ।
सम्भावं लिखितं देवि यथा भवति अक्षरम् ॥४२॥
तत्तदेव वरारोहे जपपूजा निरर्थकम् ।
विशेषमन्त्रं वक्ष्यामि आनन्दपटले स्थितम् ॥४३॥
मन्त्रं श्रीमोहनं नाम पञ्चाशद्वर्णसंज्ञकम् ।
ज्ञात्वा यः कुरुते देवि तस्य सिद्धिरदूरतः ॥४४॥
अन्यथा विफलं सर्वं रहस्यं सफलं नहि ।

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
सप्तदशः पटलः ॥

—:०:—

श्रीमहादेव उवाच—

अथान्यत् संप्रवक्ष्यामि रहस्यं परमाद्भुतम् ।
अज्ञात्वा वैष्णवो याति रौरवं वरवर्णिनि ॥ १ ॥
एवं तत्त्वयुतं देवि यो जपेत् परमेश्वरीम् ।
नवतत्त्वमयीं विद्यां यदा जपति पार्वति ॥ २ ॥
तदैव सहसा सिद्धिर्जायते सुरसुन्दरि ।
नवतत्त्वयुतं मन्त्रं ज्ञात्वा यः प्रजपेत् सकृत् ॥ ३ ॥
तदैव सहसा देवि विष्णुतुल्यो भवेद् ध्रुवम् ।
प्रथमं कामिनीं ध्यात्वा हृत्पद्मे कमलेक्षणे ॥ ४ ॥

---

१. पुनरन्यं–क. घ. ।

उच्चरेत् प्रथमं वीजं कामिनीं तदनन्तरम् ।
पुनर्वीजं द्वितीयञ्च उच्चरेद् यत्नतः सुधीः ॥ ५ ॥

कामिनीञ्च ततो ध्यात्वा तृतीयं वीजमुच्चरेत् ।
अनेन विधिना देवि कामिनीध्यानसंपुटम् ॥ ६ ॥

पुनर्ध्यानं ककारस्य अनुलोमेन पार्वति ।
अनुलोमं यथा देवि विलोमञ्च तथा कुरु ॥ ७ ॥

एवं क्रमेण देवेशि यद्[1]यदक्षरकं प्रिये ।
कृत्वा यत्नाद् वरारोहे सर्वसिद्धीश्वरो भवेत् ॥ ८ ॥

सर्वेषां मन्त्रवर्णानां ध्यात्वा ध्यात्वा पृथक् पृथक् ।
आद्यन्ते कामिनीं ध्यात्वा शिवशक्तिमयो भवेत् ॥ ९ ॥

अथवा चञ्चलापाङ्गि हृत्पद्मे कमलानने ।
आदौ मध्ये तथा चान्ते वीजं दत्त्वा जपेत् प्रिये ॥१०॥

तदैव सहसा देवि जायते देवविग्रहम् ।
सदा निद्रातुरो मन्त्रः कलिकाले च भारते ॥११॥

रहस्यनेन चार्वङ्गि निद्राभङ्गो तदा भवेत् ।
जपेदादौ वरारोहे त्रिवारमनुलोमतः ॥१२॥

विलोमेन त्रिवारञ्च ध्यात्वा जप्त्वा हृदम्बुजे ।
अथान्यत् संप्रवक्ष्यामि निद्राभङ्गस्य लक्षणम् ॥१३॥

प्रथमं कामिनीं ध्यात्वा अन्ते च तदनन्तरम् ।
दशधा प्रजपेन्मन्त्रं निद्राभङ्गाय पार्वति ॥१४॥

ततस्तु प्रजपेद् देवि प्रफुल्लं विश्वमोहनम् ।
रहस्यनेन चार्वङ्गि जायते विष्णुविग्रहम् ॥१५॥

---

१. यस्य यदक्षरं प्रिये—घ. ।

शङ्खचक्रधरं देवं शुद्धतत्त्वात्मकं प्रिये ।
पीताम्बरधरं शान्तं प्रसन्नं मुखपङ्कजम् ॥१६॥

आजानुलम्बितकरं वनमालाविराजितम् ।
त्रिभङ्गललिताकारं चारुचूडाविभूषितम् ॥१७॥

श्रीवत्सकौस्तुभोद्दीप्तं जायते विष्णुविग्रहम् ।
अवतारं स्वयं कृष्णं ललिताञ्जनचिक्कणम् ॥१८॥

गोपीमण्डलमध्यस्थं नानासुखमयं हरिम् ।
अथवा जायते देवि तस्माद्वीजाच्छुचिस्मिते ॥१९॥

कामिनीध्यानमात्रेण देवता जायते ध्रुवम् ।
रहस्यमेतच्चार्वङ्गि कर्तव्यं हृदि मध्यतः ॥२०॥

रहस्यानाञ्च सर्वेषां सारमेतन्न संशयः ।
अथान्यत् संप्रवक्ष्यामि रहस्यं परमाद्भुतम् ॥२१॥

ध्यात्वा तु कामिनीनारीं प्रथमं हृदि मध्यतः ।
तद्गर्भे भावयेन्मन्त्रं मनसा नगनन्दिनि ॥२२॥

तद्गर्भे भावयेद् देवं ध्यानमार्गेण सुन्दरि ।
पुनश्च कामिनीं ध्यात्वा तस्मादाविर्भवेद् हरिः ॥२३॥

हरिरित्युपलक्षणं देवि सर्वेषामेव निर्मितम् ।
निद्रायुक्तं महेशानि विद्यामन्त्रं भवेत् सदा ॥२४॥

तस्मात्तु निद्रारहितं प्रजपेद् यदि एकदा ।
जपात् कोटिगुणं भद्रे सहसा लभते ध्रुवम् ॥२५॥

वामवाहोर्यदा वाहस्तदा निद्रातुरो मनुः ।
चलते च यदा बाहोर्दक्षिणे वरवर्णिनि ॥२६॥

तदैव चञ्चलापाङ्गि त्यक्तनिद्रः सदा मनुः ।
अत एव वरारोहे त्यक्तनिद्रं जपेत् सुधीः ॥२७॥

श्रीदेवी उवाच—

पूजाकाले महादेव यदि निद्रातुरो भवेत् ।
तत्कथं सिध्यते मन्त्रः किं कर्तव्यं तदा प्रभो ॥२८॥
प्रजपेत् केन विधिना न जपेद्वा वद प्रभो ।

श्रीमहादेव उवाच—

रहस्यमन्त्रं वक्ष्यामि आनन्दपटले स्थितम् ॥२९॥
द्वादशार्णमयं मन्त्रं निद्राभङ्गस्य दीपनम् ।
रहस्यमन्त्रं चार्वङ्गि अज्ञात्वा विफलं भवेत् ॥३०॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे
अष्टादशः पटलः ॥

——:०:——

श्रीमहादेव उवाच—

सन्देहो नैव कर्तव्यः पूजाकाले शुचिस्मिते ।
सहसा कामिनीं ध्यात्वा तुरीयकूटमुच्चरेत् ॥ १ ॥

तदैव सहसा देवि त्यक्तनिद्रो भवेन्मनुः ।
प्रजपेद् दशधा देवि हृदये मनसापि वा ॥ २ ॥

पूजाकाले महेशानि संत्यजेद् यदि दक्षिणम् ।
प्रायश्चित्तं भवेत्तस्य मन्त्रस्य वरवर्णिनि ॥ ३ ॥

प्रायश्चित्तमिदं देवि कृत्वा मन्त्रं जपेद् यदि ।
किं तस्य दक्षिणो बाहुस्तस्य निद्रातुरेण किम् ॥ ४ ॥

रहस्यमन्त्रं चार्वङ्गि पूजाकाले विनिर्णयम् ।
रहस्यमेतच्चार्वङ्गि सर्वनिद्रासु मङ्गलम् ॥ ५ ॥

वामबाहोर्यदा वायुर्यदा च दक्षिणावहः ।
रहस्यमेतच्चार्वङ्गि कृत्वा तु प्रजपेन्मनुम् ॥ ६ ॥

तदैव त्यक्तनिद्रा सा विद्या मन्त्रश्च नान्यथा ।
योगनिद्रामयी विद्या योगनिद्रामयो मनुः ।। ७ ।।

विशेषमन्त्रं वक्ष्यामि आनन्दपटले स्थितम् ।
अष्टाक्षरीं महाविद्यां दीपनीं मोक्षरूपिणीम् ।। ८ ।।

सर्वसिद्धिमयो भूत्वा रहस्यफलमाप्नुयात् ।
प्रजपेद् यदि निद्रायां किं तस्य जपपूजने ।। ९ ।।

रहस्यनेन चार्वङ्गि निद्रां त्यक्त्वा सनातनी ।
सुषुम्णामध्यमार्गेषु संस्थिता ब्रह्मरूपिणी ।।१०।।

रहस्यमेतच्चार्वङ्गि अज्ञात्वा योजपेन्मनुम् ।
तस्य पापमहं वक्ष्ये सावधानावधारय ।।११।।

शूद्रेण लिखितं देवि पटलं यत्तु पठ्यते ।
यं यं नरकमाप्नोति तं तं प्राप्नोति मानवः ।।१२।।

द्वात्रिंशत्कोटिमध्येषु नरकेषु क्रमेण हि ।
कोटिविंशान् समादाय पच्यन्ते मनुजाधमाः ।।१३।।

विप्रो वा क्षत्रियो वापि वैश्यो वा नगनन्दिनि ।
पच्यन्ते[1] नरके घोरे शूद्रस्य लिखनात् प्रिये ।।१४।।

तस्मात्तु शूद्रलिखितं पटलं न जपेत् सुधीः ।
तस्मादावश्यकं देवि कामिनीध्यानमुच्चरेत् ।।१५।।

ततः सिद्धो भवेद् देवि विद्या मन्त्रं न चान्यथा ।
कामिनीध्यानमात्रेण सर्वसिद्धिमयो भवेत् ।।१६।।

एकेनैव कृतार्थं स्याद् बहुभिः किमुपासते ।
तव भक्त्या मयाख्यातं यद्गोप्यं भुवनत्रये ।।१७।।

---

१. पचयन्नरके—घ. ।

कामधेनुमिदं ज्ञात्वा यदि पूजां समाचरेत् ।
सफला सा भवेत् पूजा जपश्च सफलं सदा ॥१८॥

अन्यथा प्रेतवद् दीक्षा पूजा च प्रेतवत् सदा ।
प्रथमं कामिनीं ध्यात्वा जपपूजां समाचरेत् ॥१९॥

कामधेनोः फलं लब्ध्वा सदाशिवमयो भवेत् ।
विष्णुरूपी स एव स्यान्महामाया स एव हि ॥२०॥

शिवमन्त्रे विष्णुमन्त्रे शक्तिमन्त्रे शुचिस्मिते ।
कामधेनुमिदं मन्त्रं प्रशस्तं सुरपूजिते ॥२१॥

एतत्ते कथितं देवि सारात्सारं परात्परम् ।
यत् कृत्वा साधको याति दुर्लभं मोक्षमन्दिरम् ॥२२॥

विशेषमन्त्रं वक्ष्यामि विद्यां श्रीकामरूपिणीम् ।
अज्ञात्वा कामिनीध्यानं सहसा व्यर्थतामियात् ॥२३॥

तद्ध्यानं चञ्चलापाङ्गि आनन्दपटले स्थितम् ।
तस्मादवश्यं जप्तव्यं सततं कामदीपनीम् ॥२४॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे ऊनविंशः पटलः ॥

——:०:——

श्रीदेवी उवाच—

मन्त्रसमर्पणं तत्त्वं कथ्यतां देवपूजित ।
कस्मै समर्पयेन्मन्त्रं वद देव पुरातन ॥ १ ॥

अर्पयेन्मन्त्रतेजांसि देवेश यदि शूलधृक् ।
निस्तेजा साधको देव तदैव सहसा भवेत् ॥ २ ॥

किं जप्येन च पूजायां पुरश्चर्येण किं पुनः ।
तन्मे वद महाभाग कृपया परमेश्वर ॥ ३ ॥

श्रीमहादेव उवाच--

साधु पृष्टं त्वया भद्रे अधुना कथयामि ते ।
जपित्वा चञ्चलापाङ्गि ध्यायेत् परमकामिनीम् ॥ ४ ॥

मन्त्रवर्णं वरारोहे कामिनीगजगह्वरे ।
चन्द्रबिन्दुयुतं कृत्वा एकैकं दशधा जपेत् ॥ ५ ॥

अनुलोमे यथा देवि विलोमेन तथा कुरु ।
अतः परं वरारोहे ज्ञात्वा तु कामिनीं पराम् ॥ ६ ॥

वियद्ब्रह्म महेशानि कामिनीं दशधा जपेत् ।
कामिनीगर्भमध्ये तु वियद्वह्नियुतं प्रिये ॥ ७ ॥

प्रजपेद् दशधा भक्त्या बीजतत्त्वं तदा भवेत् ।
ततस्तु कामिनीतत्त्वं ललाटे परिचिन्त्य वै ॥ ८ ॥

एवञ्च मातृकास्थाने कामिनीं भावयेत् प्रिये ।
पञ्चाशन्मातृकास्थाने प्रजपेन्मातृकामनुम् ॥ ९ ॥

बीजस्य ज्योतिःपुञ्जेषु कामिनीं सत्वरं कुरु ।
दशधा प्रजपेद् देवि कामिनीबीजमुत्तमम् ॥१०॥

कामिनीगर्भमध्ये तु ज्योतिस्तत्त्वे जपं कुरु ।
ज्योतिस्तत्त्वं वरारोहे स्वयं जीवः सनातनः ॥११॥

कामिनीजीवतत्त्वं च कृत्वा वै साधकः सुधीः ।
सहस्रारे महापद्मे संस्थाप्य कामिनीं पराम् ॥१२॥

गुह्यातिगुह्यगोप्त्री त्वमिति मन्त्रेण मन्त्रवित् ।
देवस्य दक्षिणे हस्ते बाह्यपूजादि चार्पयेत् ॥१३॥

देव्या वामे वरारोहे समर्प्य फलभाग् भवेत् ।
जपस्य सर्वतेजांसि देवहस्ते यदि प्रिये ॥१४॥

समर्प्य परमेशानि तेज(स्य ? स्वी) साधको भवेत् ।
किं तस्य पूजने भद्रे किं जापेन वरानने ॥१५॥

यत्किञ्चिद् दीयते देवि सर्वं ब्रह्मणि लीयते ।
विद्यामन्त्रं जपेद् देवि तत्तेज उपजायते ॥१६॥

जीवतत्त्वं विना देवि देवहस्ते कदाचन ।
नार्पयेच्चञ्चलापाङ्गि देव्या हस्ते विशेषतः ॥१७॥

तस्मात् प्रयत्नतो देवि जीवतत्त्वं कुरु ध्रुवम् ।
जीवतत्त्वं विना देवि यदि देवं समर्पयेत् ॥१८॥

जपञ्च विफलं देवि पूजा च विफला भवेत् ।
गन्धपुष्पादिकं यद्यत् सर्वं देवे समर्पयेत् ॥१९॥

जपतत्त्वं वरारोहे सर्वतेजोमयं सदा ।
यदि तेजो वरारोहे देव्यै देवाय अर्पयेत् ॥२०॥

यस्तेजः सततं जीवः कथं सिद्धिः प्रजायते ।
यस्तेजस्त्वर्पयेद् देवि पुनरागमनं प्रिये ॥२१॥

दुर्लभं चञ्चलापाङ्गि तत्तेजः साधकस्य च ।
वृथा भयं वरारोहे कुरुते नरपामरः ॥२२॥

समर्पणमविज्ञाय प्रजपेद् यदि कोटि वा ।
देवतातेजमध्ये तु तत्तेजोपविशेत् प्रिये ॥२३॥

भावयेद् वहुयत्नेन यथा सर्वस्वसंपुटम् ।
एतत्ते कथितं देवि जीवतत्त्वं सुदुर्लभम् ॥२४॥

यत् कृत्वा साधको याति दुर्लभं ब्रह्मविग्रहम् ।
श्रुत्वा तन्त्रमिदं देवि रहस्यफलमाप्नुयात् ।
तन्त्रमेतद् वरारोहे श्रृणुयात् साधकः प्रिये ॥२५॥

इति कामधेनुतन्त्रे देवदेवीसंवादे विंशतितमः पटलः ॥

——:०:——

श्रीमहादेव उवाच—

चन्द्रसूर्योपरागे च प्रजपेद् यदि कामिनीम् ।
तदैव सहसा सिद्धिर्जायते नात्र संशयः ॥ १ ॥

प्रथमं कामिनीं जप्त्वा स्वविद्याः प्रजपेद् यदि ।
ततस्तु कामिनीं जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥ २ ॥

अज्ञात्वा कामिनीतत्त्वं न जपेद् ग्रहणे प्रिये ।
न जपेद् ग्रहणे भद्रे अज्ञानाद् यदि मूढधीः ॥ ३ ॥

सर्वं तस्य वृथा देवि पूर्वधर्मो विनश्यति ।
चन्द्रपर्व सूर्यपर्व न विचार्यं कदाचन ॥ ४ ॥

सूर्यपर्व वरारोहे न पश्येद् यदि पामरः ।
अस्तु तावत् परो धर्मः पूर्णधर्मो विनश्यति ॥ ५ ॥

न पश्येद् यदि अज्ञानात् सर्वारिष्टमवाप्नुयात् ।
सर्वारिष्टमयः सोऽपि सर्वपापमयः सदा ॥ ६ ॥

तस्मादवश्यं कर्तव्यं चन्द्रपर्वनिरीक्षणम् ।
सूर्यपर्व तथा देवि निरीक्ष्यमोक्षमाप्नुयात् ॥ ७ ॥

अज्ञात्वा यदि मूढात्मा राश्यादिगणनं प्रिये ।
विचार्य चञ्चलापाङ्गि न पश्येद् ग्रहणं यदि ॥ ८ ॥

पूर्वपूर्वार्जितं पुण्यं तत्क्षणादेव नश्यति ।
चन्द्रसूर्योपरागश्च तस्माद् यत्नान्निरीक्षयेत् ॥ ९ ॥

किं तस्य कामिनीं भद्रे रम्याणि च पुनश्च किम् ।
ग्रासादिमुक्तिपर्यन्तं जप्त्वा सिद्धीश्वरो भवेत् ॥१०॥

न जपेद् यदि चार्वङ्गि रौरवं नरकं व्रजेत् ।
तत्काले चञ्चलापाङ्गि परंब्रह्मस्वरूपिणी ॥११॥

तस्मिन् काले वरारोहे क्षत्रादिजातिभेदतः ।
आचण्डालप्रभृतयो द्विजतुल्या भवन्ति हि ॥१२॥

द्विजास्तु चञ्चलापाङ्गि साक्षाद् ब्रह्म न संशयः ।
तत्र का गणना देवि चाण्डालानां वरानने ॥१३॥

तस्माद् यत्नेन कर्तव्यं चन्द्रपर्वनिरीक्षणम् ।
चन्द्रकोटिगुणं देवि सूर्यो दशगुणं भवेत् ॥१४॥

तत्र यद् यत् कृतं कर्म जपहोमादिकं प्रिये ।
अक्षयं तद् भवेद् देवि वचनं मम निश्चितम् ॥१५॥

राश्यादिगणनं त्यक्त्वा यवनैर्दृश्यते यदि ।
यवनस्य[1] तथा सिद्धिर्जायते पृथिवीतले ॥१६॥

दीक्षितोऽदीक्षितो वापि दृष्ट्वा स्नानं समाचरेत् ।
तदेवमक्षयं स्नानं गङ्गास्नानं भवेत् प्रिये ॥१७॥

विष्ठाकूपस्थितं तोयं गङ्गोदकसमं स्मृतम् ।
प्रशस्तं ग्रहणे काले नान्यथा वचनं मम ॥१८॥

षष्ठमासाधिको बालो यदि स्याद् वरवर्णिनि ।
ग्रहणे चन्द्रसूर्यस्य तस्य स्नानं प्रशस्यते ॥१९॥

अकृत्वा स्नानदानञ्च सहसा नरकं व्रजेत् ।
स भ्रष्टः स च पापिष्ठः सहसा सूकरः प्रिये ॥२०॥

तस्यान्नमुदकं देवि मूत्रं शोणितवत् प्रिये ।
जायते नात्र सन्देहो मम वाक्यं वरानने ॥२१॥

ब्राह्मणोऽब्राह्मणो वापि चन्द्रपर्वणि पार्वति ।
चाण्डालप्रभृतिः सर्वो ब्रह्मगोत्रे प्रवर्तते ॥२२॥

ब्रह्मेति नाम सर्वेषां राश्यादिगणनं कुतः ।
तस्मात्तु चञ्चलापाङ्गि संकल्पं नैव कारयेत् ॥२३॥

---

१. तस्मिन् काले वरारोहे क्षत्रादिजातिभेदतः ।
आचाण्डालप्रभृतयो द्विजतुल्या भवन्ति हि ॥ इत्यधिकः—क० ।

मासपक्षतिथीनां च निमित्तानि च पार्वति ।
न विचार्यं वरारोहे ग्रहणे चन्द्रसूर्ययोः ॥२४॥

ग्रासादिमोक्षकाले तु कुतो मासः कुतस्तिथिः ।
स कालः परमं ब्रह्म सर्वेषामक्षिगोचरम् ॥२५॥

तत् कथं पामरो लोको राश्यादिगणनं प्रिये ।
उपरागं परित्यज्य यश्चान्यं परिचिन्तयेत् ॥२६॥

स भवेद्रौरवे मग्नो ब्रह्मणश्चानुमानतः ।
रौरवात् पुनरागत्य पापयोनौ प्रवर्त्तते ॥२७॥

निष्कृतिर्नास्ति चार्वङ्गि तस्यापि च कदाचन ।
तस्मात् सर्वं परित्यज्य चन्द्रपर्वनिरीक्षणम् ॥२८॥

चन्द्रपर्वे यथा देवि सूर्यपर्वे तथा प्रिये ।
तत्र श्राद्धादिकं त्यक्त्वा विद्यां मन्त्रं जपेत् प्रिये ॥२९॥

अन्यथा नरकं याति पितॄन् सप्त नयत्यधः ।
अपरैकं प्रवक्ष्यामि रहस्यं शृणु सुन्दरि ॥३०॥

अकारादिक्षकारान्तं प्रतिपद्मे निरीक्षयेत् ।
ततस्तु प्रजपेत् शून्यं चन्द्रबिन्दुकसंयुतम् ॥३१॥

ततस्तु हृदयाकाशे शून्ये ज्योतिर्मयेषु च ।
अनुलोमविलोमेन मातृकां प्रजपेत् सुधीः ॥३२॥

ततस्तु साधकश्रेष्ठो वराटोपरि मातृकाम् ।
पद्मबीजं यथा देवि वर्णबीजं प्रभावयेत् ॥३३॥

चन्द्रबीजं पुटं कृत्वा जपेद् वर्णं प्रसन्नधीः ।
अनुलोमविलोमेन जप्त्वाऽमृतमयो भवेत् ॥३४॥

केवलं कामिनीं ध्यात्वा प्रफुल्लवदनान्तरम् ।
बीजादुत्पद्यते देवो देवी वा कमलेक्षणे ।
ततस्तु देवतां ध्यात्वा निरीक्ष्य देवविग्रहम् ॥३५॥

इति श्रीकामधेनुतन्त्रे महादेवमहादेवीसंवादे
एकविंशतितमः पटलः ॥

—:०:—

........................................ ........

( ग्रन्थपातः )

...स्यां च वरारोहे गङ्गायां स्नानमित्यहम् ॥१०॥
करिष्ये इति सङ्कल्प्य शिरःस्नानं समाचरेत् ।
अर्को धर्मपयो देवि अमाद्यर्थश्च मूर्तिमान् ॥११॥

श्रवणश्च महेशानि साक्षात्कामश्च मूर्तिमान् ।
व्यतीपाते महेशानि स्वयं मुक्तिः प्रगीयते ॥१२॥

माद्यस्तु चञ्चलापाङ्गि स्वयमेवेश्वरः प्रिये ।
एतत्तु कथितं देवि पञ्चयोगं परात्परम् ॥१३॥
कायिकं वाचिकं चैव मानसं पापमुत्कटम् ।
तत्सर्वं नाशमायाति गङ्गादर्शनमात्रतः ॥१४॥
कोटिजन्मार्जितं पापं जलस्पर्शाद्विनश्यति ।
ततस्तु मौशलं स्नानं कोटिसूर्यग्रहैः समम् ॥१५॥
फलमाप्नोति चार्वङ्गि नात्र कार्या विचारणा ।
आचम्य चञ्चलापाङ्गि वासं कुर्याद् विशालधीः ॥१६॥

इति कामधेनुतन्त्रे त्रयोविंशतितमः पटलः

—:०:—

श्रीमहादेव उवाच—

मालारहस्यं योगेन्द्र कथयस्व कृपानिधे ।
यदि पुच्छं जपेन्मन्त्रं हरेत्तेजांसि तन्मुखम् ॥ १ ॥

मुखाद् यदि जपेन्मन्त्रं पुच्छं च चञ्चलं भवेत् ।
चञ्चले सति चार्वङ्गि तज्जपं निष्फलं भवेत् ॥ २ ॥

श्रीईश्वर उवाच—

पञ्चाशदक्षरं देवि ग्रथितं चित्रनाडिषु ।
स्थाप्याक्षराणि पूर्वे वै सुमेरुं पुच्छं तर्पिणम् ॥ ३ ॥
सुमेरुं च परिचार्य्य अकरादिकमाज्जपेत् ।
मालारहस्यं चार्वङ्गि सुगोप्यं भुवनत्रये ॥ ४ ॥
जातिभेदं जीवभेदं सुगोप्यं च यथा प्रिये ।
जीवमन्त्रं प्रवक्ष्यामि सावधानावधारय ॥ ५ ॥
जीवमन्त्रं जातिमन्त्रं समानमिति निर्णयः ।
यथा ध्यानं महेशानि समानं याति जीवने ॥ ६ ॥
तद्ध्यानं शृणु चार्वङ्गि सावधानावधारय ।
द्विभुजां स्वर्णगौराङ्गीं पीतपट्टपरिच्छदाम् ॥ ७ ॥
नानाभरणदीप्ताङ्गीं किशोरीं नवयौवनाम् ।
कृष्णगन्धप्रलिप्ताङ्गीं सूर्यासनकृताश्रयाम् ॥ ८ ॥
तनुदीर्घाङ्गुलीं भास्वन्नखचन्द्रविराजिताम् ।
कदम्बकोरकाकारस्तनद्वयविराजिताम् ॥ ९ ॥
कर्पूरसकलोन्मिश्रताम्बूलपूरिताननाम् ।
कटाक्षलक्षसंयुक्तभ्रूलतापरिशोभिताम् ॥१०॥
सिन्दूरतिलकोद्दीप्तां कुटिलालकमण्डिताम् ।
सर्वत्रैवं महेशानि जीवं तिष्ठति सर्वदा ॥११॥
द्विजादीनां च सर्वेषामानन्दपटले स्थिताम् ।
एतत्ते कथितं सर्वं कामधेनोर्मतं प्रिये ॥१२॥

इति श्रीकामधेनुतन्त्रे देवीश्वरसंवादे चतुर्विंशतितमः पटलः ॥

समाप्तमिदं कामधेनुतन्त्रम्



# फेत्कारिणीतन्त्रम्

ॐ नमः परमदेवतायै

क्रोधोज्ज्वलन्तीं ज्वलनं वमन्तीं सृष्टिं दहन्तीं दितिजं ग्रसन्तीम् ।
भीमं नदन्तीं प्रणमामि कृत्यां रोरूयमाणां क्षुधयोग्रकालीम् ॥१॥

उन्मत्तभैरवं नारसिंहडामरभैरवम् ।
शिवाकारं मालिन्याद्यमसिताङ्गादियामलम्[1] ॥ २ ॥

सिद्धयोगीश्वरी[2] तन्त्रं योगिनीजालशम्बरम् ।
दृष्ट्वा कृत्याविधिं फेत्कारिणीतन्त्रं विरच्यते ॥ ३ ॥

पञ्चाशद्वर्णरूपात्मा मातृका परमेश्वरी ।
तत्रोत्पन्ना निगद्यन्ते प्रत्येकं शिवशक्तितः[3] ॥ ४ ॥

अस्या एताः[4] कलाः सर्वाः पञ्चाशद्वर्णसिद्धये[5] ।
तेभ्य एव समुत्पन्ना वर्णा ये[6] विष्णुशूलिनोः ॥ ५ ॥

मूर्तयः शक्तिसंयुक्ता उच्यन्ते ताः क्रमेण तु ।
प्रथमं केशवः प्रोक्तस्ततो नारायणो मतः ॥ ६ ॥

---

१. जालिकाद्यमसिताङ्गादियामलम्–क० ।
२. सिद्धियोगेश्वरं ।
३. शिवशक्तय: क० ।
४. न्यस्यान्नताः–क० ।
५. शर्व–क० ।
६. स्तु शिवशक्तयः–क० ।

माधवोऽप्यथ गोविन्दो विष्णुश्च मधुसूदनः ।
त्रिविक्रमस्तथा ख्यातो वामनः श्रीधरस्तथा ॥ ७ ॥

हृषीकेशः पद्मनाभो दामोदर इति स्मृतः ।
वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ८ ॥

एते स्वरभवाः प्रोक्ताः कथ्यन्ते व्यञ्जनोद्भवाः ।
चक्री गदी तथा शार्ङ्गी खड्गी शङ्खी हली तथा ॥ ९ ॥

मुसली च ततः शूली पाशी चाप्यङ्कुशी[1] तथा ।
मुकुन्दो[2] नन्दनो नन्दी नरो नरकजिद्धरिः ॥१०॥

कृष्णः सत्यस्तथा प्रोक्तः शाश्वतः शौरिरेव च ।
शूरो जनार्दनः ख्यातो भूधरो विश्वमूर्तिकः ॥११॥

वैकुण्ठश्च तथा प्रोक्तो नरोत्तमस्ततो वली ।
वलाग्रजस्तथा[3] वालो वृषघ्नश्च वृषोऽपि च ॥१२॥

हंसो वराहो विमलो नृसिंह इति कीर्तितः ।
कीर्तिः कान्तिस्तथा तुष्टिः पुष्टिर्धृतिरपि क्षमा ॥१३॥

शान्तिः क्रिया दया मेधा इच्छा[4] श्रद्धा तथा मता ।
लज्जा लक्ष्मीसरस्वत्यौ प्रीती रतिरिमाः स्वराः[5] ॥१४॥

ऋद्धिः समृद्धिः शुद्धिश्च भक्तिर्बुद्धिर्मतिः क्षमा ।
रमोमा क्लेदिनी क्लिन्ना वसुधा वसुदा परा ॥१५॥

---

१. चाङ्कुशीभृतः—क० ।

२. कुमुदो—घ० ।

३. बलानुजः—क० ।

४. हर्षा श्रुत्वा—क० ।

५. इतः परम्—“संजाता व्यञ्जनेनैता जया दुर्गा प्रभा मताः ।
सत्या चण्डा तथा वाणी विनाशिन्यपि सम्मता ॥
विश्वा विरजा विशिखा ि नदा सुनदा स्मृतिः ।” इत्यधिकः—क० ।

परा परायणा सूक्ष्मा सन्ध्या प्रजा प्रभा[1] निशा ।
अमोघा विद्युता चैव शक्तयः सर्वकामदाः ॥१६॥

शङ्खचक्रधराः सर्वा घनाभाः पीतवाससः ।
केशवाद्या निजाङ्गस्थाः शक्त्याऽलङ्कृतविग्रहाः ॥१७॥

एताः सस्मितवक्त्राश्च विद्युदाभाः प्रकीर्तिता ।
कान्ता क्षान्ता च कीर्त्याद्याः कमलाभयपाणिका ॥१८॥

श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्त्तिरमरेश्वरः ।
अर्घीशो भारभूतिश्च मौलीशः[2] शाल्वकोटरः ॥१९॥

झिण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनः स्वरजा रुद्रमूर्तयः ॥२०॥

ततः क्रोधीशचण्डेशपञ्चान्तकशिवोत्तमाः ।
अथैकरुद्रकर्मैकनेत्रोर्ध्वचतुराननाः[3] ॥२१॥

अजेशः सर्वसोमेशस्तथा लाङ्गलिदारुकौ ।
अर्धनारीश्वर श्यामा[4] कान्ताश्चापाढिदण्डिनौ ॥२२॥

[5]अद्रिमाणश्च मेषश्च लोहितश्च तथा शिखी ।
छगलण्डद्विरण्डेशौ महाकालकपालिनौ ॥२३॥

भुजङ्गेशः पिनाकीशः खड्गीशश्चकरस्तथा ।
श्वेतो भृङ्गीशनकुली शिवः संवर्तकस्तथा ॥२४॥

---

१. परा—क० ।

२. तिथीशः स्थाणुको हरः—क० ।

३. कूर्मेक —क० ।

४. श्योमा—क० ।

५. आद्रिमीनश्च—क० ।

एते रुद्राः स्ववर्णेभ्यो जाता उडुनिभाननाः ।
कान्तालिङ्गितदेहाश्च कपालशूलपाणयः ॥२५॥

पूर्णोदरा च विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्तुलाक्षी च दीर्घघोणा तथैव च ॥२६॥

सुदीर्घमुखीगोमुख्योर्नवमी दीर्घजिह्विका ।
कुण्डोदर्यूर्ध्वकेशी च ततो विकृतमुख्यपि ॥२७॥

ज्वालामुखी तथा चोल्कामुखी च श्रीमुखी तथा ।
विद्यामुखी स्वरोत्पन्ना एताः स्युः स्वरशक्तयः ॥२८॥

महाकालीसरस्वत्यौ सर्वसिद्धिसमन्विते ।
गौरी त्रैलोक्यविजया[1] तथा मन्त्रान्तशक्तिका ॥२९॥

भूतमाता लम्बोदरी भाविनी[2] नागरी तथा ।
खेचरी मञ्जरी चैव रूपिणी वीरिणी तथा ॥३०॥

काकोदरी पूतना च भद्रकाल्यपि योगिनी ।
शङ्खिनीगर्जिनीकालरात्रीकुब्जिन्य एव च ॥३१॥

कपर्दिनी वज्रिणी च जया च सुमुखेश्वरी ।
रेवती माधवी चैव वारुणी वायवी तथा ॥३२॥

रक्षोपधारिणी चान्या तथैव सहजाह्वयाः ।
लक्ष्मीश्च व्यापिनी माया ख्यातास्तु शिवशक्तयः ॥३३॥

रुद्राङ्गस्था जवाभासा[3] रतिसुन्दरविग्रहाः ।
रक्तोत्पलकपालाभ्यां विबद्धबाहवस्तथा ॥३४॥

---

१. विध्या—क० ।
२. द्राविणी—क० ।
३. जया भामा—ज० ।

पुंप्रकृत्या स्वरूपाया मातृकायाः शुभोपमाः ।
मात्रा[1]ज्ञातस्त्रिलिङ्गाद्यैर्भिन्नाः क्रूराश्च नामभिः ॥३५॥

पुंलिङ्गा हुंफडन्ताश्च स्वाहान्ता योषितो मताः ।
नपुंसका नमोऽन्ताश्च इत्युं[2]क्ता मनवस्त्रिधा ॥३६॥

मन्त्रविद्याविभागेन ते पुनर्द्विविधा मताः ।
ते स्युः पुंदेवता मन्त्रा विद्याः स्त्रीदेवतास्तथा ॥३७॥

पुंमन्त्राः क्लीबमन्त्राश्च योषिन्मन्त्राश्च मारणे ।
शान्त्यभिचारयोर्ग्राह्या यथा ज[3]प्यन्तु मन्त्रिभिः ॥३८॥

सौम्यमन्त्राः प्रधानाख्याः संयोज्याः क्रूरकर्मणा ।
आसीन्मन्त्रस्तु हंसाख्यो वर्णस्[4]तु परमात्मनः ॥३९॥

सोऽहमिति गतोऽद्वैतमद्वैतं हंसलोपतः ।

कण्ठं भित्त्वा विनिर्यातो हंसवर्णविलोपतः ॥४०॥
स चादिध्वनिसम्पन्नो ब्रह्मविष्णुशिवात्मकः ।

त्रैलोक्येऽपि ततो जातास्त्रयो वेदा गुणास्त्रयः ॥४१॥
त्रयोऽग्नयस्त्रय कालास्त्रयो दोषा स्वरास्त्रयः ।
प्रकर्षार्णवतां प्राप्ता महाध्वनि ध्रुवादयः ॥४२॥
[5]उंकारः कुटिलः प्रोक्तो मकारः काल एव च ।

ऐन्द्रो वली लकारश्च हंसोऽप्यथ ह[6] उच्यते ॥४३॥

---

१. मन्त्रा जाता–क० ।
२. ते पुनर्विविधा मता–क० ।
३. योगं–क० ।
४. हंसस्तु–क० ।
५. फकारः–घ. ।
६. स–क० ।

विन्ध्यवासिनी[1] माया च इकारस्तु कुचद्वयम् ।
माया लज्जा च क्रींकारो[2] हुंकारो कूर्च उच्यते ॥४४॥
द्विठः स्वाहा समाख्याता कालाग्निर्व्यापकोऽङ्कुशः ।
अस्त्रं फडित्यतो ब्रह्मा दक्षकर्णादितः शिवः ॥४५॥
सकारस्तु भृगुप्राणौ नो वाणी पावकाशनः ।
नागेशोज्ज्वलनो रेफो रकारस्त्विन्दुरीरितः ॥४६॥
सकुलो भग एकार उकारः शिव उच्यते ।
दक्षवामाविति प्रोक्तौ पाशी क्रः परिकीर्तितः ॥४७॥
लोलाक्षिका लकारश्च हकारो नकुलीश्वरः ।
इन्द्रासनगतो ब्रह्मा स त्रिमूर्तिश्च मन्मथः ॥४८॥
द्रौं ज्योतिस्त्रितत्त्वं ह्रीं हुं कूर्चः क्रोध ईरितः ।
वायुर्यकारो विख्यातो जीमूतः[3] कथितो बुधैः ॥४९॥
वह्नेरूर्ध्वगतो महादिसहितो वर्णो नृसिंहान्वयः
सार्णं वामविलोचनेव शशभृत् खण्डेन्दुमुक्तो ग्रहः ॥
कौलिन्याः कथितं तदेतदमलं बीजं न्यसेत् सादरं
भूतप्रेतपिशाचचेटकभये रक्षा भवेद् व्याहृतम् ॥५०॥
ह्सौस्तातीर्य इत्युक्तौ ह्सौर्ज्ञेयः सदाशिवः ।
शून्यं ह इति कथितो भैरवाद्यैः समाहितैः ॥५१॥

इति फेत्कारिणीतन्त्रे मन्त्रकोषविवरणं नाम
प्रथमः पटलः ।

—:०:—

---

१. बिन्दुमालिनी—क० ।
२. ह्रीं—क० ।
३. जोमोहः—क० ।

श्रीशिव उवाच

अथ कुण्डविधिं वक्ष्ये शान्तिकादिक्रमेण च ।
शान्तिके चतुरस्रं स्यात् पौष्टिके वृत्तमेव च ॥ १ ॥
त्रिकोणमभिचारे तु पञ्चास्रं मारणे मतम् ।
षडस्रं मोहने चैव सप्तास्रं स्तम्भने मतम् ॥ २ ॥
शत्रूच्छेदे तथाष्टास्रं नवास्रं व्याधिहा मतम् ।
होमे तु कारयेत् कुण्डमेकमेवैकहस्तकम् ॥ ३ ॥
चतुरस्रं त्रिकोणं वा वृत्तञ्च मेखलात्रयम् ।
सैकतैः स्थण्डिलं कुर्याच्चतुरङ्गुलसंस्थितम्[1] ॥ ४ ॥
चतुरस्रं तु पूर्वस्यां कुण्डं साम्राज्यसिद्धिदम् ।
शत्रूणां तापने शस्तं योन्याख्यं वह्निकोणगम्[2] ॥ ५ ॥
अर्धचन्द्रं तु याम्यायां शत्रूणां मारणे मतम् ।
त्रिकोणं नैर्ऋतेः कोणे रिपूणां व्याधिवर्धनम् ॥ ६ ॥
वारुण्यां तु सदावृत्तमायुःश्रीपुष्टिवर्धनम् ।
वायव्यां तु षडस्रन्तु शत्रूणां मारणे हितम् ॥ ७ ॥
सौम्यायां पद्मसंज्ञं तु श्रीमेधापुष्टिदं नृणाम् ।
सर्वकामप्रदं कुण्डमैशान्यामष्टकोणकम् ॥ ८ ॥

इति फेत्कारिणीतन्त्रे द्वितीयः पटलः ॥

—:०:—

अथ स्रुक् च स्रुवविधिं वक्ष्येऽहमवधारय ।
षट्त्रिंशदङ्गुला स्रुक् स्याच्चतुर्विंशाङ्गुलः स्रुवः ॥ १ ॥
मुखं कण्ठस्तथा वेदी[3] सप्त चैवाष्टभिः क्रमात् ।

---

१. उच्छ्रितम्—क० ।
२. वह्निकोणके—क० ।
३. देवी—घ० ।

आयामानाहतो दण्डो विंशतिश्चतुरङ्गुलः[1] ॥ २ ॥
वेदरामाङ्गुलैः कुण्डो गण्डी द्विचतुरङ्गुला ।
खातं वेदाङ्गुलैर्वृत्तमङ्गुलद्वितयं खनेत् ॥ ३ ॥
मेखला द्व्यङ्गुला तद्वच्छोभाशेषं विचिन्तयेत् ।
वेदीं त्र्यङ्गुलविस्तारां कुर्यात् कुण्डमुखाग्रयोः ॥ ४ ॥
कनिष्ठाग्रमितं वक्त्रं[2] स्रवद्घृतविनिर्गमे ।
कार्षिकं द्व्यङ्गुलं खातं पङ्के मृगपदाकृतिः ॥ ५ ॥
द्वाविंशत्यङ्गुलो दण्ड आनाहश्चतुरङ्गुलः ।
[3]कुण्डमूलाग्रयोर्गण्डी स्रुवे काञ्चनवद् भवेत् ॥ ६ ॥
सुवर्णरूप्यताम्रैर्वा स्रुक्स्रुवौ दारुजावपि ।
अयोमयौ च स्रुक्स्रुवौ कारस्करमयावपि ॥ ७ ॥
नागेन्द्रतनये विल्वः क्षुद्रकर्मणि संस्थितौ ।
चन्दनं खदिराश्वत्थप्लक्षचूतविकङ्कताः ॥ ८ ॥
शम्यामलकसारश्च पलाशश्चेति दारवः ।
[4]अस्त्राङ्गमूलविद्याभिः स्नानं कुर्याद् यथाविधि ॥ ९ ॥
पूजाप्रदेशमागत्य दत्त्वा चार्घ्यं विवस्वते ।
गन्धपुष्पादिभिः सम्यग् द्वारपूजां समाचरेत् ॥१०॥
कांस्यघण्टार्चनं कृत्वा द्वारमाच्छाद्य वाससा ।
कृत्वोपवीतं हस्तश्च उत्तरप्राङ्मुखः शुचिः ॥११॥

---

१. षडङ्गुलः—क. ।
२. कनिष्ठाग्रमितं रन्ध्रंस्रुचौघृतविनिर्गमे—क. ।
३. दण्डमूलाग्रयोर्दण्डी—क. ।
४. इतः परम्—"इति श्रीपश्चिमाम्नायादिके फेत्कारिणीमहातन्त्रे देवीश्वरसंवादे स्रुक्स्रुवाभिधानं नाम तृतीयः पटलः" इत्यधिकः पाठः—क. ।

उपविश्यासनं योज्यं पद्मं स्वस्तिकमेव वा।
पद्मासने च विद्यार्थी कुर्यात् सर्वं समाहितः ॥११॥

प्राङ्मुखोदङ्मुखो वापि वक्ष्यमाणक्रमेण तु।
श्रीकामः स्वस्तिकेनेह पश्चिमाभिमुखेन तु ॥१२॥

आसीनः प्रणवेनाथ परामृज्य करावुभौ।
अङ्गुलीषु च विन्यस्य अङ्गमन्त्राणि वै क्रमात् ॥१३॥

अस्त्रमन्त्रेण दिग्बन्धं कुर्यात् सर्वासु दिक्षु च।
अग्निप्राकारवत् कृत्वा ततो मन्त्रेण सर्वतः ॥१४॥

प्राणायामत्रयं कुर्यान्मन्त्रेण प्रणवेन वा।
उच्चारयेत्तु प्रणवं स्वरेणैकेन मन्त्रवित् ॥१५॥

उदरं पूरयित्वा तु वायुना यावदास्थितः।
प्राणायामो भवत्येवं पूरको देहपूरकः ॥१६॥

पिधाय सर्वगात्राणि निश्वासोच्छ्वासवर्जितः।
पूर्णकुम्भवत्तिष्ठेत्तु प्राणायामः स कुम्भकः ॥ १७ ॥

मुञ्चेद् वायुं तथैकेन पूरयेच्चैव मन्त्रवित्।
निश्वासयोगमुक्तस्तं वायुं बाह्येन रेचयेत् ॥१८॥

रेचकाह्वयः सम्प्रोक्तः प्राणायामो न संशयः।
जानू प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥१९॥

क्रियते चाङ्गुलीस्फोटः सा मात्रा परिकीर्तिता।
ततो द्वादशमात्राभिः पूरकः क्रियते तु वै ॥२०॥

तस्माद् द्विगुणमात्राभी रेचकः क्रियते तथा।
प्राणायामत्रयं चैव एकैकं त्रितयात्मकम् ॥२१॥

लिङ्गकार्यं हृदिस्थं तु चैतन्यं सर्वसाक्षिणम् ।
प्रणवेन विनिःसार्य ब्रह्मरन्ध्राद् बहिर्बुधैः ॥२२॥
तेनैव संपुटीकृत्य मस्तकोपरि विन्यसेत् ।
चैतन्यरहितं देहं बाह्यंचाभ्यन्तरं तथा ॥२३॥

नाभिमण्डलमध्यस्थं वायुमण्डलमध्यगम् ।
यं वर्णं धूम्रवर्णन्तु ध्यात्वा तेन विशोधयेत् ॥२४॥

अग्निमण्डलसंस्थेन जीवेनाग्निस्वरूपिणा[2] ।
निर्दहेदथ तं भस्मराशिं देहाकृतिं भवेत् ॥२५॥
भ्रूमध्यगं हृदिस्थं वा ध्यायेदरुणमण्डलम् ।
अर्धचन्द्राकृतिं श्वेतं पद्मद्वयपदान्वितम्[3] ॥२६॥
तत्रस्थेन वकारेण प्लावयेन्मधुरूपिणा ।
वीजन्तु पार्थिवं न्यस्य चिन्तयेद् व्योममण्डलम् ॥२७॥

प्रणवेन द्विधा कृत्वा तत्र चैतन्यरूपिणम् ।
मस्तकोपरि विन्यस्य चैतन्येन च योजयेत् ॥२८॥

अमृतप्लाविताद् वर्णात् सद्योजातमकल्मषम् ।
आत्मानं चिन्तयेन्मन्त्री देवतारूपिणं ततः ॥२९॥
ऋषिच्छन्दोदैवतानि स्मृत्वा न्यासं समाचरेत् ।
अङ्गन्यासकरन्यासौ देहन्यास इति त्रिधा ॥३०॥

उत्पत्तिस्थितिसंहारभेदभिन्नं गुणेन सः ।
प्रथमं स्यात् करन्यासो देहन्यासस्तु मध्यमः ॥३१॥
अङ्गन्यासस्तृतीयः स्यादिति शास्त्रस्य निर्णयः ।
ॐकारं सम्पुटीकृत्य मनुना व्यापकं न्यसेत् ॥३२॥

---

१. इतः पूर्वम्—"प्राणायामत्रयं कुर्यात् मूलेन प्रणवेन वा" इत्यधिकः–क० ।

२. बीजेन–क० ।

३. पदाङ्कितम्–क० ।

कूर्परादिकनिष्ठान्तं करन्यासास्तु पूर्ववतः ।
सर्वाङ्गेषु च विन्यस्य क्रमेणैवोत्क्रमेण तु ॥३३॥

दक्षिणाङ्गुष्ठमारभ्य वामाङ्गुष्ठं तथा ततः ।
औत्पत्तिकोऽस्ति मन्त्राणां संहाराख्यो विपर्ययः ॥३४॥

दक्षिणाङ्गुष्ठमारभ्य उभयोरपि हस्तयोः ।
कनिष्ठान्तं भवेन्न्यासः स्थितिर्नाम महोदयः ॥३५॥

शिरःप्रभृतिपादान्तं न्यासस्योत्पत्तिरिष्यते ।
पादादिकः शिरोऽन्तस्तु सोऽपि संहरणो भवेत् ॥३६॥

उदरोपक्रमो न्यासो हृदयान्तः स्थितिर्भवेत् ।
मन्त्राक्षराणां विन्यासेऽप्ययमेव क्रमोत्तमः ॥३७॥

हृदि मूर्ध्नि शिखास्थाने बाहौ पार्श्वे च दिक्षु च ।
नेत्रयोरङ्गमन्त्राणां षण्णां न्यासक्रमो भवेत् ॥३८॥

अस्त्रान्तान्यङ्गमन्त्राणि शैवे शाक्ते विदुर्बुधाः ।
नेत्रान्तानि तथोक्तानि वैष्णवे न्यासपूजयोः ॥३९॥

हृदये विधिवत् कार्यो नमः शिरसि ठद्वयम् ।
वषट् शिखायां कथितं कवचे हुमिति स्मृतम् ॥४०॥

नेत्रेण वौषट् कथितं न्यासनीयन्तु फट् तथा ।
तेऽङ्गुष्ठवर्जमङ्गुल्यश्चतस्रो हृदि मूर्धनि ॥४१॥
शिखायां मुष्टिरेव स्यादङ्गुष्ठकृतनासिकः ।
सर्वाङ्गुलीभिर्वा नाभौ पाण्योः कवचबन्धने ॥४२॥
तर्जन्यादित्रयं नेत्रे हस्ते हस्ततलद्वयम् ।
हस्तैर्विन्यस्य······ततो वै बन्धयेद् दिशः ॥४३॥
अङ्गुष्ठतर्जन्यग्राभ्यां दिशः पूर्वादिकाः क्रमात् ।
पञ्चाङ्गानि यदोक्तानि[1] तदा नेत्रं परित्यजेत् ॥४४॥

---

१. पदोक्तानि–ङ० ।

अनुक्ताङ्गेषु मन्त्रेषु पदशो वर्णशोऽपि वा ।
तेनैवाङ्गानि कल्प्यानि मन्त्रेण सकलेन वा ॥४५॥

उत्पत्तिसंज्ञको न्यासः संहाराख्यो यतेर्भवेत् ।
ऋषिच्छन्दोदैवतानि शिरोवदनहृत्सु च ॥४६॥

स्मरेद् जपादावात्मनि नमस्कृत्य ततोऽर्चयेत् ।
प्राणायामत्रयं कृत्वा प्रविश्य हृदयाम्बुजम् ॥४७॥

देवतां तत्र सञ्चिन्त्य मनसाराधयेत्ततः ।
येन क्रमेण वै मन्त्रैर्द्रव्यैर्नानाविधैः शुभैः ॥४८॥

तेन क्रमेण तेनैव मानसो याग ईरितः ।
न वा चोच्चारयेन्मन्त्रं मनसैव मनुं स्मरन् ॥४९॥

मुद्रां प्रदर्शयेत्तत्र देवतां भावयेत् पराम् ।
तत्र चावाहनं नेष्टं हृदये मानसार्चने ॥५०॥

आराध्य मनसा भक्त्या बाह्यपूजामथाचरेत् ।
स्थानशुद्धिं द्रव्यशुद्धिं कृत्वा पात्राणि शोधयेत् ॥५१॥

अर्घ्यपात्रादिकं तेषु कल्पयेद् विधिपूर्वकम् ।
पीठपूजां विधायाथ तत्र वा इष्टदेवताम् ॥५२॥

पूजयेत् परया भक्त्या विधिदृष्टेन कर्मणा ।
आसनावाहने चार्घ्यं पाद्यमाचमनं तथा ॥५३॥

स्नानं वासोपवीतञ्च भूषणानि च सर्वशः ।
गन्धं पुष्पं तथा धूपं दीपमन्नञ्च तर्पणम् ॥५४॥

माल्यानुलेपनं चैव नमस्कारविसर्जनम् ।
अष्टादशोपचाराश्च तैश्च पूजां समाचरेत् ॥५५॥

शक्तिभिर्मूर्तिभिश्चैव लोकपालैश्च संयुतः ।
पीठमन्त्रैः समायोगो नित्ययागः स उच्यते ॥५६॥

पीठेनैव समस्तेन बहिरावरणैर्विना ।
मन्त्रपूर्वकृतो यागो नित्ययागः स मध्यमः ॥५७॥
अग्निकार्येण हविषा भूषणैश्च समन्वितम् ।
द्रव्यशुद्धिसमायुक्तमुत्तमं पूजनं तथा ॥५८॥
अग्निकार्यविहीनं तु [1]कालमङ्गं निवेद्य च ।
उपचारैर्युतं सर्वं मध्यमं पूजनं स्मृतम् ॥५९॥
वस्त्रालङ्कारशोभादि वर्जयित्वा पृथग्विधि ।
केवलं पुण्ययोगं तु कनिष्ठं पूजनं भवेत् ॥६०॥
उशीरं चन्दनं चैव पात्रमात्रे तु कल्पयेत् ।
जातीकर्पूरकक्कोलबहुमूलं तमालकम् ॥६१॥
चूर्णयित्वा तथा[2] न्यायं क्षिपेदाचमनीयके ।
कुशाग्राण्यक्षतं चैव यवव्रीहितिलानपि ॥६२॥
आज्यसिद्धार्थपुष्पाणि निक्षिपेदर्घ्यपात्रके ।
माक्षिकं शर्करासर्पिर्दधिक्षीरयुतं सदा ॥६३॥
मधुपर्कं कल्पयित्वा प्रदद्याद्विधिपूर्वकम् ।
उशीरं कुङ्कुमञ्चैव मांसी मलयजं तथा ॥६४॥
मुराञ्चैव तु ह्रीवेरं कुष्ठञ्चागुरुमेव च ।
अष्टाङ्गान्यत्र गन्धस्य वैष्णवे कथितान्यपि ॥६५॥
रोचनाकपिकाश्मीरमांसी त्वगुरुचन्दनैः ।
[3]षष्ठो वैष्णवगन्धोऽयं शैवे शाक्ते च शस्यते ॥६६॥
आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानि च ॥६७॥

---

१. कालदेशानुसारतः—क० ।
२. यथा—क० ।
३. धनचोरैरष्टगन्धः—क० ।

गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा ।
प्रयोजयेत्तदर्चायामुपचारांस्तु षोडश ॥६८॥
अर्घ्यपाद्यासनमधुपर्कमाचमनान्यपि ।
गन्धादिका नैवेद्यान्ता पूजा पञ्चोपचारिका[1] ॥६९॥
सपर्या त्रिविधा प्रोक्ता तासामेकां समाश्रयेत् ।
मनसाराधितं ध्यात्वा वामनासापुटेन तु ॥७०॥
प्रणवेनाञ्जलिं कृत्वा न्यसेद्[2] दारुचितासने ।
हृदयेनाथ मन्त्रेण कल्पयित्वा तु सन्निधिम् ॥७१॥
सन्निरोधं ततः कुर्यान्मन्त्रेण कवचेन तु ।
प्रणवेनाभिमुख्यञ्च कृत्वा न्यासं विधाय च ॥७२॥
स्वदेहवद् देवदेहे ततः पाद्यादि कल्पयेत् ।
पाद्यञ्च पादयोर्दद्यादर्घ्यं शिरसि दीयते ॥७३॥
मुखे चाचमनीयं स्यान्मधुपर्कञ्च तत्र वै ।
पुनराचमनं वक्त्रे दद्यान्मन्त्रविशारदः ॥७४॥
पाद्यं सम्पादयाम्यस्मै इति पाद्यादि कल्पयेत् ।
प्रणवादिनमोऽन्तेन मन्त्रेणानेन संयुतः ॥७५॥
आदावन्ते च पूजायामत्यन्तं मूलविद्यया ।
पाद्यार्घ्याचमनीयानि दद्यादेतानि देशिकः ॥७६॥
विसर्जनं[3] यदात्मन्यारोपणञ्च अपेक्षितम् ।
मण्डलादौ तथाचर्म्यं[4] क्रमस्तस्य विवक्षितः ॥७७॥

---

१. दशोपचारिका—क० ।
२. दर्वाचितासने—क० ।
३. कुर्यात् तदा त्वात्मन्यपेक्षितम्—क० ।
४. तदा तस्य—क० ।

सपुष्पाभ्याञ्च हस्ताभ्यां ध्यायेदेवं तु साधकः ।
यागभूमिगते देव पारावारांस्तु संस्मरेत् ॥७८॥

ध्यायेद् देवं ततो वक्त्रे हृदये तदनन्तरम् ।
भुक्तिमुक्तिप्रदं देवं प्रसन्नवदनेक्षणम् ॥७९॥

तथात्मानं तु तं देवमेकीकृत्य विचिन्तयेत् ।
विसर्जनं यदान्यत्र विमुख्याघ्यँ तदा ददेत् ॥८०॥

यथासुखासितोऽन्यत्र गच्छस्वेति विसर्जयेत् ।
आचार्यैस्तु ततोऽन्यत्र क्वचिन्नेष्टं विसर्जनम् ॥८१॥

किन्तु तत्रैव हस्ताभ्यां पूर्ववत्तु निवेदयेत् ।
यथाशक्ति जपं कृत्वा प्राणायामत्रयं तथा ॥८२॥

विमुच्याङ्गानि च पुनरित्थं देवं विसर्जयेत् ।
जपकाले यदा पश्येदशुचिर्मन्त्रवित्तमः ॥८३॥

प्राणायामं ततः कृत्वा ततः शेषं समाचरेत् ।
यदा चैव जपेन्मन्त्री स्वयमस्य शुचिः पुनः ॥८४॥

स्नात्वा चैव यथापूर्वं न्यासं कृत्वा पुनर्जपेत् ।
पुरश्चरणकानीह एतानि कथयाम्यतः ॥८५॥

भैक्ष्यादिसुमिताहारः सकृद्[1]दादौ विधीयते ।
दिवा चैव जपं कुर्यात् पुरश्चरणिको द्विजः ॥८६॥

शाकयावकभक्ष्याशी चणकैः सह सर्पिषा ।
दध्ना मूलैः फलैर्वापि कुर्यादशनमन्वहम् ॥८७॥

ब्रह्मचर्यं तथैवोक्तं स्नानं त्रिषवणं तथा ।
पूर्वाह्णे देवतायाश्च पूजां कुर्याद् विशेषतः ॥८८॥

यावैर्यवान्नं शाकञ्च पयो भक्ष्यं हविष्यकम् ।
पूर्वं पूर्वं प्रशस्तं स्यादशनं मन्त्रसाधने ॥८९॥

---

१. रात्रौ–क० ।

सर्वमन्त्राः प्रयोक्तव्याः प्रायशः प्रणवादिकाः ।
अनन्यचेता आसीनो वाग्यतो विहितासनः ॥९०॥

अनुतिष्ठेत्तु मन्त्राणि गुरुवन्दनपूर्वकम् ।
क्षेत्रं तीर्थं वनारामदेवालयनदीह्रदाः ॥९१॥

कुटीविविक्तमित्येते देशाः स्युर्मन्त्रसिद्धिदाः ।
मन्त्रं सदेवताभावमाचारेषु च जाप्यतः ॥९२॥

कृष्णाष्टमीचतुर्दश्योर्ग्रहणादौ विशेषतः ।
उच्चैर्जपाद्विशिष्टं स्यादुपांशुर्दशभिर्गुणैः ॥९३॥

जिह्वाजपः शतगुणः सहस्रो मानसो जपः ।
दशलक्षजपादेकवर्णो मन्त्रः प्रसिध्यति ॥९४॥

वर्णवृद्धया जपे ह्रासस्तेनान्येषां समूहयेत् ।
बीजाद् द्वित्रिगुणं मन्त्रं मालासन्धौ जपक्रियाम् ॥९५॥

विंशत्यर्णाधिका मन्त्रा मालामन्त्रा इति स्मृताः ।
दशाक्षराधिका मन्त्रास्तदर्धा बीजसंज्ञकाः ॥९६॥

वार्द्धके सिद्धिदा मन्त्रा मालामन्त्रास्तु यौवने ।
पञ्चाक्षरात्मका वाल्ये मन्त्रास्ते सिद्धिदाः परे ॥९७॥

जपाद् दशांशं सर्वत्र हवनं तर्पणं विदुः ।
द्रव्याशक्तौ घृतं होमे त्वशक्तः सर्वतो जपेत् ॥९८॥

मूलमन्त्राद् दशांशं स्यादङ्गादीनां जपक्रिया ।
अशक्तावुक्तहोमस्य जपस्तु द्विगुणो भवेत् ॥९९॥

येषां जपे च होमे च संख्या नोक्ता मया प्रिये ।
तेषामष्टसहस्राणि संख्योक्ता जपहोमयोः ॥१००॥

---

१. प्रजायते—ज० ।

स्वाहान्तेनैव मन्त्रेण कुर्याद् होमं वलिं तथा ।
नमोऽन्तेन नमस्कारमर्चनञ्च[1] समाचरेत् ॥१०१॥
मन्त्रान्ते नाम संयोज्य तर्पयामीति तर्पणम् ।
संख्या नोक्ता जपे होमे चाष्टोत्तरसहस्रकम् ॥१०२॥
पौष्टिकादीनि कर्माणि यद्वारतिथियोगतः ।
प्रारब्धव्यानि विधिना तच्च संप्रोच्यते मया ॥१०३॥
पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ।
बुधेज्यवारसंयुक्ता शान्तिकर्मणि पूजिता ॥१०४॥
गुरुचन्द्रयुता षष्ठी चतुर्थी च त्रयोदशी ।
सप्तमी पौष्टिके शस्ता अष्टमी नवमी तथा ॥१०५॥
दशम्येकादशी चैव भानुशुक्रदिनान्विता ।
आकर्षणे त्वमावास्या नवमी प्रतिपत्तथा ॥१०६॥
पौर्णमासी मन्दभानुयुक्ता विद्वेषकर्मणि ।
कार्ष्णी चतुर्दशी तद्वदष्टमी मन्दतारका ॥१०७॥
उच्चाटने तिथिः शस्ता प्रदोषेषु विशेषतः ।
चतुर्दश्यष्टमी कृष्णा अमावस्या तथैव च ॥१०८॥
मन्दारकदिनेऽप्येताः[2] शस्ता मारणकर्मणि ।
बुधचन्द्रदिनोपेता पञ्चमी दशमी तथा ॥१०९॥
पौर्णमासी च विज्ञेया तिथिः स्तम्भनकर्मणि ।
शुभग्रहोदये कुर्यादशुभान्यशुभोदये ॥११०॥
रौद्रकर्मणि रिक्तार्के मृत्युयोगे च मारणम् ।
सूर्योदयं समारभ्य घटिकादशकं क्रमात् ॥१११॥

---

१. सर्वत्रैवं समाचरेत्—क० ।
२. मन्दारार्कदिनोपेता—क० ।

ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने ।
वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः ॥११२॥

हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ।
शिशिरः स्तम्भने ज्ञेयो विद्वेषे ग्रीष्म ईरितः ॥११३॥

प्रावृडुच्चाटने ज्ञेया शरन्मारणकर्मणि ।
संलिखेत् स्तम्भनं कुम्भे हर्यक्षे वृश्चिकोदये ॥११४॥

द्वेषोच्चाटादिकं नक्रकुलीरराजतुलोदये ।
मेषकन्याधनुर्मीने वश्यशान्तिकपौष्टिकम् ॥११५॥

मारणं चाष्टमे राशौ रिपोर्भेदादिनिग्रहम् ।
वश्यं पूर्वेऽह्नि मध्याह्ने विद्वेषोच्चाटनं लिखेत् ॥११६॥

शान्तिपुष्टिस्त्वहन्यन्ते सन्ध्याकाले तु मारणम् ।
अर्धरात्रे लिखेत् स्तम्भमाकृष्टिं प्राग् दिनोदयात् ॥११७॥

यदन्यच्छोभनं कार्यं तत् प्रत्यूषे लिखेद् बुधः ।
इन्द्रे स्तम्भनमुच्चाटमग्नौ सर्वाभिचारकम् ॥११८॥

याम्ये रक्षसि विद्वेषं शान्तिं वरुणसोमयोः ।
कुलोत्सादं मरुद्भागे पक्षे कलहनिग्रहौ ॥११९॥

कुर्वीत नोदितं कर्म यच्छुभं ब्रह्मणः पदे ।
वश्याकृष्टौ लिखेद् भूर्जे लिखेदुच्चाटनं ध्वजे ॥१२०॥

गर्दभत्वचि विद्वेषं स्तम्भनं गजचर्मणि ।
प्रेतचीरे समालिख्यं[1] तापज्वरादिमारणम् ॥१२१॥

विवादे च स्तम्भनादि शिलायामपि मोहनम् ।
वश्यां कुङ्कुमकर्पूररोचनाभिर्हरिद्रया ॥१२२॥

---

१. समालेख्य—क० ।

यावेन स्तम्भनाकृष्टिं लिखेच्चानामिका स्मृता ।
विद्वेषणं स्वरक्तेन[1] काकरक्तेन मारणम् ॥१२३॥
मोहं विद्वेषरक्तेन उच्चाटं चोष्ट्रजासृजा[2] ।
विद्वेषोच्चाटनं[3] काकपक्षेणापि च मारणम् ॥१२४॥
वश्ये चाकर्षणे स्तम्भे रक्तवर्णं विचिन्तयेत् ।
निर्विषीकरणे स्तम्भे रक्तवर्णं विचिन्तयेत् ॥१२५॥
शान्तौ पुष्टौ चाप्यायने सितम् ।
पीतं स्तम्भनकार्येषु धूम्रमुच्चाटने स्मरेत् ॥१२६॥
उन्मादे शक्रगोपाभं कृष्णवर्णं तु मारणे ।
आसनं श्वेतरूपं तु सात्त्विकं समुदाहृतम् ॥१२७॥
यानमार्गे[4] स्थितं पीतं राजसं परिकीर्तितम् ।
दण्डमानस्थितं रौद्रं कृष्णं तामसमुच्यते ॥१२८॥
सात्त्विकं मोक्षकामानां राजसं राज्यमिच्छताम् ।
तामसं शत्रुनाशार्थं सर्वव्याधिनिवारणम् ॥१२९॥
सर्वोपद्रवशान्त्यर्थं तामसं तु विचिन्तयेत् ।
रुद्राः[5] सताक्ष्यर्गन्धर्वयक्षरक्षोहिकिन्नराः ॥१३०॥
पिशाचभूतदैत्येन्द्रसिद्धाः किंपुरुषाः सुराः ।
सर्वेषामपि मन्त्राणामंशाः पञ्चदश स्मृताः ॥१३१॥
केचिदष्टादश प्राहुः समग्राणां नृणां मताः ।
द्व्यक्षरी कर्तरी सूची त्र्यक्षरी चतुरक्षरैः[6] ॥१३२॥

---

१. क्रोष्टुरक्तेन—क० ।
२. चन्द्रजामृता—क० ।
३. "वश्यादौ लेखनीदूर्वाकर्षणे शिखिजाच्छदा" इत्यधिकः—क० ।
४. राजसं पीतवर्णं तु रक्तश्याममुदाहृतम्—क० ।
५. रुद्राग्नि—क० ।
६. चतुरक्षरी—क० ।

मुद्गरो मुषलः पञ्चवर्णः षड्भिस्तु शृङ्खलाः ।
कवचः सप्तभिः शूलश्चाष्टाभिर्नवभिः परः ॥१३३॥

शक्तिश्च दशभिश्चैकादशभिः परशुः स्मृतः ।
चक्रं द्वादशभिर्वर्णैः कुलिशं स्यात् त्रयोदशैः ॥१३४॥

द्विसप्तभिश्च नाराचभुसुण्डी पक्षवर्णकाः ।
पद्मं षोडशभिर्वर्णैर्मन्त्रच्छेदे तु कर्तरी ॥१३५॥

भेदेन कथिता सूची भुञ्जानो मुद्गरः स्मृतः ।
मुषलः क्षोभणे बन्धे शृङ्खलः क्रकचच्छिदि ॥१३६॥

घाते शूलं परिस्तम्भे शक्तिराकृष्टिकर्मणि ।
विद्वेषे परशुं चक्रं सर्वकर्मसु योजयेत् ॥१३७॥

सन्धाने कुलिशः प्रोक्तो नाराचः सैन्यभेदने ।
भुसुण्डी मारणे पद्मं शान्तिपुष्ट्यादिकर्मणि ॥१३८॥

चक्रं तु रञ्जकं कर्म ऊर्ध्वं नैवं प्रयोजयेत् ।
क्वचिदेवं दर्शितं तु तत्त्वागमविरोधि च ॥१३९॥

सहस्राक्षरमन्त्रादेः प्रयोगविधिदर्शनात् ।
यथाकामो जपः कार्यो मन्त्राणामपि मे शृणु ॥१४०॥

मन्त्रादौ[1] योजनं नाम्नः पल्लवः परिकीर्तितः ।
मारणे विषसंहारे ग्रहभूतविनिग्रहे ॥१४१॥

उच्चाटने च विद्वेषे पल्लवो हि प्रशस्यते ।
मन्त्रादौ नामसंस्थानं योग इत्यभिधीयते ॥१४२॥

शान्तिके पौष्टिके वश्ये प्रायश्चित्ते विशोधने ।
मोहने दीपने योगं प्रयुञ्जन्ति मनीषिणः ॥१४३॥

---

१. "मन्त्रादौ...इत्यभिधीयते" नास्ति–क० ।

स्तम्भनोच्चाटनोद्भेदविद्वेषेषु स उच्यते ।
नाम्न[1] आद्यन्तमध्येषु मन्त्रः स्याद्रोध उच्यते ॥१४४॥

मन्त्राभिमुख्यकरणे सर्वव्याधिनिवारणे ।
ज्वरग्रहविषाद्यार्त्तिशान्तिके रोध उच्यते ॥१४५॥

सम्मोहने स एवाथ मन्त्रनामाक्षराणि च ।
एकैकान्तरितं यत्तु ग्रथनं[2] तत् प्रकीर्तितम् ॥१४६॥

तच्छान्तिके विधातव्यं नामाद्यन्ते यथा मनुः ।
तत् संपुटं भवेत्तत्तु कीलने परिभाषितम् ॥१४७॥

स्तम्भे मृत्युञ्जये दिव्ये रक्षादिव्ये च संपुटः ।
मन्त्राक्षराभ्यामेकैकं साध्यनामाक्षरं क्रमात् ॥१४८॥

कथ्यते स विदर्भस्तु वश्यकर्मणि पौष्टिके ।
एवं योगक्रमः प्रोक्तः सर्वकार्ये मनीषिभिः ॥१४९॥

बन्धनोचाटने द्वेषे संकीर्णे हुँ प्रयोजयेत् ।
फट्कारं छेदने हुँफट् विघ्नग्रहनिवारणे ॥१५०॥

क्षुद्रक्रियाद्युपध्वस्ते स्त्रियोऽन्यत्र नपुंसकाः ।
पुष्टौ चाप्यायने वौषट् बोधने[3] सनिकृन्ततौ ॥१५१॥
अग्निकार्ये जपेत् स्वाहा नमः सर्वत्र चार्चने ।

शान्तिपुष्टिवशद्वेषाकृष्ट्युचाटनमारणे ॥१५२॥
स्वाहा स्वधा वषट् हुं च वौषट् फट् योजयेत् क्रमात् ।

वश्याकर्षणसन्तापज्वरे स्वाहा प्रयोजयेत् ॥१५३॥
क्रोधोपशमनेशान्तौ प्रीतौ योज्यं नमो बुधैः ।

---

१. नाम्नश्चाद्यन्तमध्येषु–क० ।

२. प्रथमं–ख० ।

३. रोधने सलिलाकृतौ–क० ।

वषट् सम्मोहनोद्दीपपुष्टिमृत्युञ्जयेषु च ॥१५४॥
ह्रींकारं प्रीतिनाशश्च छेदने मारणे तथा ।
उच्चाटने च विद्वेषे वषट् चाग्निकृते वषट् ॥१५५॥
मन्त्रज्ञापनकार्ये च लाभालाभे वषट् स्मृतम् ।
स्त्रीपुंनपुंसकत्वेन त्रिधा स्युर्मन्त्रजातयः ॥१५६॥
स्त्रीमन्त्रा वह्निजायान्ता नमोऽन्ताश्च नपुंसकाः ।
हुं फट् पुमांस इत्युक्ता वश्योच्चाटनकर्मसु ॥१५७॥
ताराग्न्यन्यवियत्प्रायो[1] मन्त्र आग्नेय उच्यते ।
शिष्टः सौम्यः प्रशस्तौ तौ कर्मणोः क्रूरसौम्ययोः ॥१५८॥
आग्नेयमन्त्रः सौम्यः स्यात् प्रायशोऽन्ते नमोऽन्वितः ।
मन्त्रः शान्तोऽपि रौद्रत्वं हुँ फट् पल्लवितो यदि ॥१५९॥
सुप्तः प्रबुध्यमानो वा मन्त्रः सिद्धिं न यच्छति ।
स्वापकालो वामबाहो जागरो दक्षिणावहः ॥१६०॥
आग्नेयस्य मनोः सौम्यमन्त्रः स्यात् सुविपर्ययात् ।
प्रबोधकाले जानीयादुभयोरुभयावहम् ॥१६१॥
स्वापे[2] तु नोच्यं दाराणां स्तोभयेत् स्तोभकर्मणि ।
आग्नेयीं धारणां कृत्वा कुर्यादावेशनं क्रमात् ॥१६२॥
माहेन्द्रीं धारणां कृत्वा संहारं तु समारभेत्[3] ।
तत्रैव दक्षिणे चित्तं कृत्वा मारणमेव च ॥१६३॥

---

१. प्रणवताराादि च वियत्–क० ।

२. स्वापकाले तु दाराणाम्–क० ।

३. इतोऽग्रे—"कृत्वातु निर्विषं कुर्याद्वारुणीं धारणां पुनः ।
वशमन्त्रकक्षाकृष्टिवञ्चनं च समाहितः ॥
हृच्चक्रे वामभागे तु चित्तं संस्थाप्य आचरेत् ।" इत्यधिकः–क० ।

विद्वेषोच्चाटनोच्छेदे कुब्जीकरणमारभेत् ।
आधारे दक्षिणे भागे विषग्रहसमागमात् ॥१६४॥
सेनाश्च स्तम्भयेत् कृत्वा कार्यारम्भश्च मानवः ।
तत्रैव वामे कर्तव्यो व्यवहारश्च शत्रुतः ॥१६५॥

शान्तिकं पौष्टिकं वश्यं वनितायाश्च मोहनम् ।
बैन्दवे दक्षिणे भागे स्थाप्य चित्तं चरेद् बुधः ॥१६६॥

कर्माभिचारविद्यां तु वामे तत्रैव साधयेत् ।
आधारे कर्णिकायां तु चित्तं संस्थाप्य साधयेत् ॥१६७॥

सिद्धिं सारस्वतीं चान्यां शाक्तेयीश्चैव साधयेत् ।
पौष्टिकी सिद्धिरतुला धर्मकामार्थसिद्धिदा[1] ॥१६८॥
लभ्यते हृदयान्तस्य[2] कर्णिका स्थिरचेतसा ।
चतुरस्त्रार्द्धचन्द्रश्च त्रिकोणश्च षडस्त्रकम् ॥१६९॥
सुवृत्तश्च पृथिव्यादिमण्डलाकृतयः क्रमात् ।
पीतं शुक्लं तथा रक्तं कृष्णाभं धूम्रवर्णकम् ॥१७०॥
तत्रोर्वादीनि[3] बीजानि नरकं हयकारकम् ।
नाभिमध्ये मण्डलं तु वायोस्तद्बीजसंयुतम् ॥१७१॥

धारयेत्तत्र चैतन्यं वायुर्भूतविशेषकम्[4] ।
त्रिकोणं पिङ्गलो वह्निमण्डलं हृदि चिन्तयेत् ॥१७२॥
धारयेत्तत्र चैतन्यं अग्निभूतं समन्ततः ।
माहेन्द्रं मण्डलं कल्पे पृथिवीमण्डलाह्वयम् ॥१७३॥

---

१. मुक्तिदा—क० ।

२. हृदये न्यस्तकालिका—ख० ।

३. ततोर्च्यादीनि बीजानि नवकं—क० ।

४. वायुभूतं विशोधनम्—क० ।

कलापेन[1] युतं तत्र चैतन्यस्तम्भकं स्मरेत् ।
अर्धचन्द्रं ललाटे तु श्वेतपद्मद्वयाङ्कितम् ॥१७४॥

धारयेत्तत्र[2] चैतन्यं वारिरूपं विचिन्तयेत् ।
कल्पयित्वा विचारे च दक्षिणाप्लवगां महीम् ॥१७५॥

वसनं लोहितं प्रोक्तमुष्णीषं लोहितं स्मृतम् ।
वृत्तं दिवस्तत्षड्बिन्दुलाञ्छितं मातरिश्वनः ॥१७६॥

त्रिकोणं स्वस्तिकोपेतं वह्ने रन्ध्रेण संयतम् ।
अम्भोजमम्भसे भूमेश्चतुरस्रं सवज्रकम् ॥१७७॥

रतिर्वाणी रमा ज्येष्ठा दुर्गा काली तु ताः क्रमात् ।
षट् कर्मदेवताः प्रोक्ताः पूजादौ ताः प्रपूजयेत् ॥१७८॥

ऐशींचैन्द्री च निरृतिर्वाय्वग्नीनां दिशो मताः ।
स दैवतं दिक्कालादि ज्ञात्वा कर्माणि साधयेत् ॥१७९॥

आसनान्यथ वक्ष्यामि कर्मणा विहितेन तु ।
पद्मासनं पौष्टिके च शान्तिके स्वस्तिकासनम् ॥१८०॥

आकृष्टौ पौष्टिके तद्वद्विद्वेषे कुक्कुटासनम् ।
अर्धस्वस्तिकमुच्चाटे त्वर्धस्थापनपार्ष्णिकम् ॥१८१॥

मारणे स्तम्भने तद्वद्विकटं परिकीर्तितम् ।
वश्ये भद्रासनं तेषां कथ्यते चाथ भावना ॥१८२॥

षण्मुद्राः[3] क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः ।
मुसलाशनिखड्गाख्याः शान्तिकादिषु कर्मसु ॥१८३॥

---

१. लकारेण युतम्—क० ।

२. प्लावनं तत्र चैतन्यम्—क० ।

३. यन्मुद्राः—ख० ।

शान्तिके पौष्टिके वश्ये सौन्दर्यातिशयान्विता ।
सर्वाभरणसन्दीप्ता प्राप्तकाममनोरथा ॥१८४॥

ध्यातव्या[1] देवता सम्यक् सुप्रसन्नाननाम्बुजा ।
आकर्षणेऽपि तद्वच्च बडिशेनेव[2] मत्स्यकान् ॥१८५॥

साध्यमाकर्षणे द्वेषे मत्स्यमानं[3] जनैरिव ।
वध्यमाकर्षणे जनैर्दण्डैर्दारितस्तस्करो यथा ॥१८६॥

उलूको वायसाविष्टः स्मर्तव्योच्चाटने रिपुः ।
स्तम्भने च शिलाक्रान्तस्तृणं पर्णादिवत् स्मरेत् ॥१८७॥

आहतस्तस्करो राजपुरुषैः परशुर्यथा ।
व्याघ्रेण वा निष्प्रयत्नो हन्यते मारणे पुनः ॥१८८॥

यत्किञ्चिच्छवमारुह्य सन्दष्टौष्ठपुटः क्रुधा ।
कर्म कुर्यात्ततो मन्त्री यथा क्रूरेषु कर्मसु ॥१८९॥

मुक्ताभिः स्फटिकैर्वाऽपि समायोज्याक्षसूत्रकम् ।
शान्तिकर्मणि मिश्रे वा जपेन्मन्त्रस्य सिद्धये ॥१९०॥

प्रवालवज्रमणिभिर्वश्यपौष्टिकयोर्जपेत् ।
मत्तेभदन्तमणिभिर्जपेदाकृष्टिकर्मणि ॥१९१॥

[4]मृतयुद्धे च शूरस्य दशनैर्गर्दभस्य च ।
कृत्वाक्षमालां जप्तव्यं शत्रुमारणमिच्छता ॥१९२॥

साध्यकेशसूत्रयुक्तिस्तुरङ्गदशनोद्भवैः ।
अक्षमालां समालोक्य द्वेषोच्चाटनयोर्जपेत् ॥१९३॥

---

१. धातव्या—क० ।

२. बडिशानिव मत्स्यकान्—क० ।

३. मत्स्यमानं जवैरिव—क० ।

४. "मृतयुद्धे···मिच्छता" नास्ति—क० ।

मृतस्य युद्धशून्यस्य दशनैर्गर्दभस्य च ।
कृत्वा मालां प्रजप्तव्यं शत्रुमारणमिच्छता ॥१९४॥

क्रियते शङ्खमणिभिर्धर्मकामार्थसिद्धये ।
पद्माक्षैश्च जपेन्मन्त्रं सर्वकामार्थसिद्धये ॥१९५॥

रुद्राक्षमालया जप्तो मन्त्रः सर्वफलप्रदः ।
पद्मसूत्रकृता रज्जुः शस्ता शान्तिकपौष्टिके ॥१९६॥

आकृष्टयुचाटयोर्वाजिपुच्छवालसमुद्भवा ।
नरस्नायुविशेषैस्तु मारणे रज्जुरुत्तमा ॥१९७॥

अन्यासामक्षमालानां रज्जुः कार्पासिकी शुभा ।
सप्तविंशतिसंख्यातैः कृत्वा मुक्तिं प्रयच्छति ॥१९८॥

अक्षैस्तु पञ्चदशभिरभिचारफलप्रदा ।
अक्षमाला विनिर्दिष्टा तत्रादौ तत्त्वदर्शिभिः ॥१९९॥

अष्टोत्तरशतेनैव सर्वकर्मसु पूजिता ।
मध्यमाङ्गुष्ठकाभ्याञ्च जपेदाकर्षणं मनुम् ॥२००॥

अङ्गुष्ठतर्जनीभ्यां तु विद्वेषोच्चाटयोर्जपेत् ।
जपेज्ज्येष्ठकनिष्ठाभ्यां शत्रुमारणकर्मणि ॥२०१॥

अङ्गुष्ठानामिकाभ्यां तु जपेदन्येषु कर्मसु ।
अङ्गुष्ठेन जपेदित्थमन्यैरङ्गुलिभिः सहः ॥२०२॥

अङ्गुष्ठेन विना जप्यं कृतं तदफलं[1] भवेत् ।
जपेद् वश्ये पूर्वमुखे दक्षिणे चाभिचारके ॥२०३॥

पश्चिमे धनदं विन्द्यादुत्तरं शान्तिके भवेत् ।
आयुष्यरक्षां शान्तिं वा पुष्टिं वापि करिष्यति ॥२०४॥

---

१. तत्तफलं भवेत्–ख० ।

इति प्रधानं सम्बोध्य प्रार्थयेच्चाविसर्गतः ॥२०५॥

देवतां सम्बोध्य तत्कर्तृकां तत् साध्याख्याय मन्त्रो मन्त्रबीजगर्भं लिखेत्। उपदेवताऽङ्गानामेकाक्षरमन्त्रश्चेत्तदेव परितो लिखेत्। सामान्यमन्त्रलेखनादौ क्रमेणावगन्तव्यः। जपहोमादौ त्वेवं संकल्प्य पूर्णाहुत्यादिकर्मावसाने तथैव प्रार्थयेदिति रहस्यम्।

अष्टास्रे चतुरस्रे वा वृत्ते चाम्बुरुहाकृतौ।
शान्तिके पौष्टिके चैव होमः स्याद् यज्ञसाधकैः ॥२०६॥

कार्यः प्राग्वदनेनाथ सौम्येन वदनेन वा[1]।
आकृष्टौ वायुकुण्डे तु कौबेरीं दिङ्मुखेन तु ॥२०७॥

नैऋत्युदङ्मुखस्तस्मिन् कुण्डे विद्वेषणे हुनेत्।
आग्नेयीदिङ्मुखस्तत्र कुण्डे मारुतकेऽपि वा ॥२०८॥

उच्चाटने हुनेन्मन्त्री मारणे याम्यदिङ्मुखः।
जुहुयाद् याम्यकुण्डे तु मन्त्री तत्साधनैस्ततः ॥२०९॥

वज्रलाञ्छितकुण्डे तु ग्रहभूतनिवारणे।
वायव्यदिङ्मुखो वश्ये कुण्डे योन्याकृतौ हुनेत् ॥२१०॥

वज्रलाञ्छितकुण्डे तु स्तम्भे प्राग्वदनो हुनेत्।
द्रव्याण्यपि प्रवक्ष्यामि तत्तत्कर्मानुरूपतः ॥२११॥

शान्तिके तु पयः सर्पिस्तिलक्षीरक्रमेण तु।
अमृताख्या लता चैव पायसं तत्र कीर्त्तितम् ॥२१२॥

पौष्टिके तु प्रवक्ष्यामि होमद्रव्याण्यतः परम्।
विल्वपत्रैश्च राज्यं स्यात् जातीपुष्पैस्तथैव च ॥२१३॥

---

१. इतोऽग्रे—"रात्रावुदङ्मुखं कार्यं पूजाहोमादिकं शिव" इत्यधिकः—क०।

कन्यार्थी जुहुयाल्लाजैः श्रीकामः कमलैस्तथा ।
दध्ना च श्रियमाप्नोति अन्नैरन्नं घृतप्लुतैः ॥२१४॥

पञ्चवर्णेन[1] पुष्पेण जुहयाद् घृतसंप्लुतैः ।
तद्वर्णं लभते वस्त्रं त्रियामा नात्र संशयः ॥२१५॥

क्षीरेण सर्पिषा वापि कमलैर्मधुनाप्लुतैः ।
समृद्ध्यै जुहुयान्मन्त्री महादारिद्र्यशान्तये ॥२१६॥

लक्षहोमाल्लभेच्छान्तिं घृतविल्वतिलैर्निधिम्[2] ।
आकर्षणे तु लवणं प्रियङ्गु[3] पौष्टिकोदितैः ॥२१७॥

वश्यार्थी जातीकुसुमैराकृष्टौ करवीरजैः ।
कार्पासनिम्बैस्तक्राद्यैर्नवकेशैस्तथापि वा ॥२१८॥

उच्चाटने काकपक्षैरथवा मोहने बुधः ।
उन्मत्तबीजैर्जुहुयाद्द्विपरक्तेन मारणे ॥२१९॥

अजापयश्च तत्सर्पिः कार्पासास्थि नृणामपि ।
तन्मांसञ्चापि साध्यस्य नखरोमनरैरपि ॥२२०॥

एकीकृत्य हुनेन्मन्त्री शत्रुमारणकाङ्क्षया ।
लशुनैरसृजाभ्युक्ष्य गर्दभस्य च मारणे ॥२२१॥

जुहुयात् सर्पिषा तैलैरथवा शत्रुमारणे ।
रोहीबीजैस्तिलोपेतैरुत्सादे जुहुयाद्[4] यवैः ॥२२२॥

कटुतैलैः तुषकण्टकसंयुक्तैर्बीजैः कार्पासकैरपि ।
सर्षपैस्तिलसंमिश्रैर्हुनेत् सर्वाभिचारके ॥२२३॥

---

१. पद्मवर्णेन—क० ख० ।
२. इतोऽग्रे—"अमृतापायसाक्तेन मधुना मोहयेदरी" इत्यधिकः—क० ।
३. प्रियङ्ग बिल्वकं फलम्—क० ख० ।
४. जुहुयादरे—ख० ङ० ।

काकोलूकच्छदैः क्रूरैः कारस्करविभीतकैः ।
मरीचैः सर्षपैः सिद्धैरर्कक्षीरैः कटुद्रुमैः ॥२२४॥[1]
कटुतैलैः स्नुहीक्षीरैः कुर्यान्मारणकर्मणि ।
आयुःकामैर्घृतैस्तिलैर्दूर्वाभिराम्रपल्लवैः ॥२२५॥
पयसाक्तैराम्रपत्रैर्ज्वरं सद्यो विनाशयेत् ।
गुडूची मृत्युञ्जयेन तथा शान्तौ गजाश्वयोः २२६॥
जुहुयात् सर्षपैर्गौरैः सद्योरोगं हरेद् गवाम् ।
वृष्टिकामो वैतसीभिः समिद्भिः पत्रकैस्तथा ॥२२७॥
हुत्वा पुष्टिमवाप्नोति पुत्रजीवैस्तु पुत्रकम् ।
घृतगुग्गुलुहोमेन वाक्पतित्वं प्रजायते ॥२२८॥
मल्लिकाजातिविद्रुमनागपुन्नागसम्भवैः ।
पुष्पैः सरस्वतीसिद्धिस्तथा सर्वार्थसाधनम् ॥२२९॥
पयसा लवणैर्वापि हुनेद् वृष्टिनिवारणे ।
रक्तपुष्पैरपामार्गैरङ्कोलैश्च सुभद्रकैः ॥२३०॥
एभिर्मधुरसं सिक्तैर्मन्त्री कुर्याच्च वश्यकम् ।
वातोद्धूतैः शुष्कपत्रैः काष्ठैरशनिपातितैः ॥२३१॥
उष्ट्रास्थिना[2] चावकृष्टैः शत्रोरुच्चाटनं तथा ।
दूर्वागुडूचीगव्येन सर्पिषा तिलतण्डुलैः ॥२३२॥
अन्नैः समिद्भिः पालाशैः शान्तिं कुर्याद् विचक्षणः[3] ।
सुतीर्थे प्रजपेन्मन्त्रं पूर्वं पापविमुक्तये ॥२३३॥
शुद्धदेहाय मन्त्रोऽसौ ततः सिद्धिं प्रयच्छति ।
न ध्यातो नार्चितो मन्त्रः सुसिद्धो न प्रसीदति ॥२३४॥

---

१. कटुत्रयैः—क० ।

२. उष्ट्रास्थिनात्र चाङ्गारैः—ख०, नराङ्गारैः—क० ।

३. इतः परम्—"घृतैस्तु तुलसीपत्रैरैश्वर्यमतुलं भवेत्" इत्यधिकः—क० ।

ना जप्तः सिद्धिदो मन्त्रो ना हुतः फलदो भवेत् ।
पूजां ध्यानं जपं होमं यथा कर्मचतुष्टयम् ॥२३५॥

प्रत्यहं साधकः कुर्यात् स्वयं चेत् सिद्धिमिच्छति ।
जपस्यान्तः[1] शिवं ध्यायेद् ध्यानस्यान्तः[2] पुनर्जपः ॥२३६॥

जपध्यानसमायुक्तः शीघ्रं सिध्यति मन्त्रवित् ।
कारस्करश्यामलकोदुम्बरो जम्बुसंज्ञकः ॥२३७॥

खदिरः[3] कुष्ठकरचौ पिप्पलो नागरोहिणौ ।
पलाशप्लक्षकाम्रष्ठविल्वार्जुनविकङ्कताः[4] ॥२३८॥

मन्त्रः सारसिको मोट आरूढाग्निः सदागतिः ।
सविन्दुः सपराक्रान्तस्तुम्बुरुश्च[5] तथा ईशः ॥२३९॥

ईकारः स्वरमायेति[6] आकारः पाश उच्यते ।
क्रोमङ्कुशश्च हुं क्रोधः इ विष्णुश्च[7] परापरः ॥२४०॥

आद्यः सविन्दुकः सृष्टिवर्गान्तस्तु ह उच्यते ।
द्वाभ्यां वा बहुभिश्चैव संयुक्तः पिण्ड उच्यते ॥२४१॥

---

१. जपस्यान्ते–क० घ० ।

२. ध्यानान्ते च पुनर्जपेत्–क० घ० ।

३. कृष्णवंशौ च–ख० घ० ।

४. इतोऽग्रे—"वकुलः सरलः सर्जो वञ्जुलः पनसार्ककौ । शमीदम्बकाम्रातनिम्बमधुकान्द्राहिनो द्रुमाः "अश्विन्यादिक्रमेणैव ज्ञेयास्ते कीलकादिषु"–इत्यधिक–क० ख० घ० ।

५. तुम्बरुआय तादृशः–ख० घ० ।

६. स्मरमायेति–ख०, पाशीश–घ० ।

७. विष्णुः सिः–ख० घ०, शिः–क० ।

ईकारः[1] श्रीमहामाया एकारो भगसंज्ञकः ।
बिन्दुश्चन्द्रश्च[2] कुण्डोऽनुस्वारो हुंकार उच्यते ॥२४२॥

कलाविसर्ग इत्युक्त इकारो हः प्रकीर्तितः ।
मन्दिरान्त्यश्च कालाग्निः क्रोधस्तत्त्वेति क्षः स्मृतः ॥२४३॥

अन्तःस्थाः स्युर्यरलवा उष्माणः शषसहास्तथा ।
वाद्यं लकार एकार इति चान्ये प्रचक्षते ॥२४४॥

एवं श्रीकण्ठादीनां काल्याद्यन्यासां द्वादश शक्तीनामन्त्यवर्णेन न्यासो वक्ष्यते। तत्तदेव संज्ञा तद्वर्णसंज्ञात्र स्वरे द्रष्टव्येत्यलं सूचितेन।

निहन्तव्यो यदा शत्रुर्नान्यथा च स्थितिर्मता ।
इत्याकुलमनास्तद्वत् कुर्याद् ब्राह्मणवर्जितम् ॥२४५॥

कर्मणा प्रबलेनैव[3] प्रतिबन्धो विरोधिना ।
यदि सिद्धिं न लभते द्विस्त्रिर्वा पुनराचरेत् ॥२४६॥

दैवेनापहतोऽत्यन्तमैहिकानि न कारयेत् ।
नापराधोऽस्त्यत्र किञ्चित् प्राप्नुयादुपहास्यताम् ॥२४७॥

सामान्यतः परिज्ञाय प्रयोगविधिमुत्तमम् ।
तत्र कर्मविशेषेण कारयेदिति नान्यथा[4] ॥२४८॥

इति फेत्कारिणीतन्त्रे साधारणपटलस्तृतीयः ॥

—:०:—

---

१. इतः पूर्वम्—"चक्रेश्वरस्य मन्त्रेण इति क्षंकार अच्यते" इत्यधिकः–क० ख० घ० ।
२. बिन्द्वर्धचन्द्रदण्डानुस्वार अंकार उच्यते–क० ख० ।
३. प्रणवेनैव–ग० घ० ।
४. इतोऽग्रे—"अथात्र संप्रवक्ष्यामि तुलस्याः होममुत्तमम् ।
तुलसी श्वेता च रक्ता च पीता कृष्णा हरिप्रिया ॥
घृताक्तैस्तु समिद्धोमात् श्रीपतित्वं च जायते ।
तुलसीमञ्जरीभिश्च विष्णोः प्रीतिकरं महत् ॥

अथ[1] वक्ष्ये कुक्कुटानामाद्यमन्त्रवरं तथा ।
जगतामुपकारार्थं क्षपणैकगुरुर्यथा ॥१॥

पुरा प्रोक्तं नान्तं षष्ठस्वरपरिगतं बिन्दुमत्कुक्कुटाख्यं
वीप्सैतत्त्वां पुनरपि च पदं वीप्सितं पूर्वं[2]मन्त्रम्
[3]नान्तं भूतस्वरपरिगतं वेत्ति मन्त्रोऽयमुक्तः स्यादायुः
श्रीविभवसकलसुखसौभाग्यसम्पत्प्रदायी ॥२॥

प्रोक्तः पञ्चदशार्णोऽयं मन्त्रः कुक्कुटदैवतः ।
तत्सर्वं देवतातेजः सर्वस्य[4] शक्तिबृंहितम् ॥३॥

क्षीरोदधिमध्यगते द्वीपवरे कनकमयरत्नभूमौ
अनवरतसिकतात्युक्तामणिमयमृदुपवन उर्वी[5]तलरम्ये ।
[6]तत्र समुण्डितममलं विपुलतरुफलितरत्नफलजातं
हेमं[7]जालमयहीनं बहुमणिविलसद्विचित्रपत्रपरम् ॥४॥

---

तत्पत्रैर्मधुरोपेतैर्लक्ष्मी वाणी वशीभवेत् ।
तुलसीपायसाद्यैश्च होमात् सर्वसमृद्धयः ॥
इति श्रीपश्चिमाम्नाये फेत्कारिणीमहातन्त्रे हरपार्वतिसंवादे सर्वसाधारणपटले
चतुर्थः पटलः ॥" इत्यधिकः—क० ।

१. अथ वक्ष्ये संग्रहतः कुक्कुटामन्त्रमुत्तमम्—घ० ।

२. पूर्वकं तत्—क० ख० घ० ।

३. ङान्तम्—ख० घ०, कान्तम्—क० ।

४. शक्तिबृंहितविग्रहः—क० ।

५. अनवरतसिकतितमुक्तामणिमृदुपवनसुशीतले रम्ये—क० ख० घ० ।

६. तत्र समुस्थितममलं विपुलतरं फलितरत्नफलजातम्—क० ख० ।

७. हैमं तालमहीनं बहुमणिविलसद्विचित्रपत्रवरम्—क० ख० ।

तं पुनरधिष्ठितं[1] ध्यायेदधिकोज्ज्वलाङ्गमतिशोभम् ।
चूडाशोभितवक्त्रं[2] कुक्कुटमतितीक्ष्णनखचरणम् ॥५॥

वक्त्रं यस्य षडाननो गिरिसुता यस्योदरं कालहा
पृष्ठं यस्य च वामकुञ्जरमुखौ पादौ च सव्येतरौ ।
पक्षौ यस्य सुरद्रुमौ मणिमयीं यः शृङ्खलां बन्धुरां
आकर्षादिगुणं करोतु स तु नः सर्वानसौ कुक्कुटः ॥६॥

गौरीहस्तारविन्दे त्वनिशमधिवसन् यन्मुखारूढकायः
सर्वालङ्कारदीप्तः प्रचलितचरणः पक्षविक्षेपदक्षः ।
हेमाभो रत्नचञ्चुमणिमयविलसद्वृत्तकण्ठः सुरूपः
पायान्नस्ताम्रचूडः सकलजननतः सर्वसिद्धिप्रदाता ॥७॥

अथवा

सर्वप्रियः सागरमध्यरत्नद्वीपस्य तालाग्रनिवासिकुक्कुटः ।
वेद्याभिरामोऽखिलभूषणाढ्यो वशीकरोत्याशु सुसेवितोऽमरैः ॥८॥

अमुष्य पूर्वसेवार्थमेकलिङ्गे शिवालये ।
देवस्य महतीं पूजां कृत्वाऽऽसीन उदङ्मुखः ॥९॥

पर्वताग्रे नदीतीरे वृषशून्ये शिवालये ।
पश्चिमद्वारसंयुक्ते कुर्यान्मन्त्रपुरस्क्रियाम् ॥१०॥

गुरुं प्रणम्य मनसा आसनं परिकल्पयेत् ।
करशुद्धिं देहशुद्धिं तालत्रयमथाचरेत् ॥११॥

दिग्बन्धं कारयेत् पश्चात् विद्वानस्त्रेण तत्परम् ।
प्राणायामत्रयं पश्चात् प्रणवेन प्रकल्पयेत् ॥१२॥

---

१. तं पुनरधितिष्ठन्तं ध्यायेदधिकोज्ज्वलाङ्गमतिशोभनम्—क. ख. घ. ।
२. "चूडाशोभित ··प्रदाताप" नास्ति—क. ।

मातृकां विन्यसेत् पूर्वं पश्चान्न्यासं समाचरेत् ।
पक्षिमन्त्रस्य प्रथमं यं[1] मन्त्रं तं विनिर्दिशेत् ॥१३॥

द्वितीयपदमुच्चार्य शिरसैव[2] तु कारयेत् ।
वीं शिखायाश्च विन्यस्य वनपचितृतीयकम् ॥१४॥

तुरीयपदमुच्चार्य नेत्रे तु विनियोजयेत् ।
चञ्च्वास्त्रेण[3] च संयुक्तमङ्गषट्कं विधीयते ॥१५॥

पूँ हृदयाय नमो वीप्सौ तत्त्वां शिरसे स्वाहा ।
पूँ शिखायै वषट् वीप्सौ तत्त्वां कवचाय हुँ ॥१६॥

पूँ वीप्सितुं नेत्रत्रयाय वौषट् पूँ करतलपृष्ठाभ्याम् अस्त्राय फट् ।
नमः स्वाहा वषट् हुँ च वौषट् च क्रमान्न्यसेत् ॥१७॥

पूँमादि[4] पूमन्तरश्च क्रमशो विन्यसेत् सुधीः ।
ललाटविन्दुमध्ये च चक्षुःश्रवणयोरपि ॥१८॥

नासाविवरयोश्चैव आस्ये कण्ठे तथा हृदि ।
जठरे नाभिदेशे च लिङ्गे गुह्ये च विन्यसेत् ॥१९॥

समस्तेन तु मन्त्रेण मूर्धादिव्यापकं न्यसेत् ।
एवं विन्यस्तदेहस्तु ध्यायेत् पक्षिं शिवात्मकम् ॥२०॥

मनसा देवमभ्यर्च्य षोडशैरुपचारकैः ।
विज्ञाप्य बाह्ययोगेन[5] देवं सन्तोष्य यत्नतः ॥२१॥

ध्यात्वा कुक्कुटदेवं तं जपेद् भानुसहस्रकम् ।
तावच्छतं तर्पयित्वा पुरश्चर्या कृता भवेत् ॥२२॥

---

१. हृन्मन्त्रं तं विनिर्दिशेत्–क. ।

२. शिवा सवसु कारयेत्–क. ख. ।

३. ॐकाराभ्यां चास्त्रसंयुक्तमङ्गषट्कं विधीयते–क. ख. ।

४. प्रमादिवार्त्तवर्णांश्च क्रमशो विन्यसेत् सुधीः–क. ख. ।

५. बाह्ययागेन–ख. ।

[1]रक्षाकरणविद्वेषस्तम्भनोच्चाटनादिकम् ।
कर्माणि कुर्यादिष्टानि मन्त्रेणानेन मन्त्रवित् ॥२३॥

आलिख्य मन्त्रेण विदर्भितं यत् साध्याक्षरान्तान् लवणस्य पात्रे ।
प्राणान् प्रतिष्ठाप्य शतं तथाष्टौ जप्त्वा धृतं चेत् स वशं प्रयाति ॥२४॥

ताम्बूलं यद्यष्टोत्तरसहस्रं जप्त्वा भोक्[2]तुं दत्तं यस्याः ।
वश्या नित्यं प्रत्युपदे[3]शाद्धास्यन्नर्थान् प्रार्थितभोगान् ॥२५॥

मन्त्रं जप्तुमथ पञ्च शतं यः कनकाह्वयत्वं मपञ्चयुतम् ।
भक्ष्यभोज्यविधिषु प्रतियोज्यं सान्[4]वेयाति वशं मरणान्तम् ॥२६॥

मूलं मूलकमासतैलसहितं चित्राह्वयस्य त्वचं
पुष्पं बीजसवीर्यहस्तिकुसुमं स्वनासि[5]कान्तर्जलम् ।
पत्रं रौहिणमङ्गपञ्चकमलं तद्भाण्डयुक्तं मिथो
[6]दण्डं वा पुरुषस्य तद्धृतमिदं वश्याङ्गना मन्[7]मथः ॥२७॥

अष्टोत्तरशतं जप्तं हयमारकमूलकम् ।
सप्तरात्रं क्षिपेद् यस्या मूर्ध्नि सा वशगा भवेत् ॥२८॥

भूर्जे साध्यविदर्भितं मनुमिमं संलिख्य कौलालिकी
मृत्स्नाकल्पितपुत्तली हृदि कृता प्राणान् प्रतिष्ठाप्य च ।
जप्त्वा दिनं त्रिसन्ध्यमथवा चालोड्य गुण्डीरसै-
र्लिप्ते वश्यमवश्यमेव भविता चान्येषु [8]जन्मस्वपि ॥२९॥

---

१. वश्याकर्षण—क. ख. ।
२. भुक्तौ—क. ख. ।
३. देशादास्यन्नर्थान् प्रार्थितभोगान्—क. ।
४. सास्य याति—क. ख. ।
५. स्वर्णाविसिकान्तर्जलम्—क. ख. ।
६. दत्तं वा—क. ख. ।
७. मन्मथैः—क. ।
८. जन्मस्वपि—क. ख. ।

अष्टोत्तरसहस्रं[1] जप्तं प्रसूनकाण्डं कृताञ्जलेः शिरसा।
धारयति[2] सर्वलोके प्रियो भवेन्नियतमेव मन्त्रिवरः ॥३०॥

तद्वच्छदमथ वल्ली लक्ष्मीपुष्पाणि धारयेदेवम्[3]।
समृदा भद्रकरिष्णुः प्रियाश्च मुसलीशमन्त्रजापेन[4] ॥३१॥

मधुकश्च दूर्वादेवीं हंसां चैव तथा घृतम्।
तथैवैकं वरणमूलनाय का कथा मनुष्येषु ॥३२॥

दर्शनविद्रुमवार्द्रमनुस्वराक्षि[5] विश्वत्र्यैकैकभागेन।
अञ्जल्यादि क्रमशः संयोज्य देशमखिलं[6] वश्यकरम् ॥३३॥

प्रत्येकैकं शतमष्टौ जप्त्वा संयोज्य दशकमपि पिष्ट्वा गुटकीकृत्य सहस्राष्टं जप्त्वा गुटिकया रचिता तिलकक्रिया[7] सुनारीनरलोकरञ्जनार्थमिदं कपिलाघृतदीपितया तत्तद्दुर्वहुर्णगर्भया[8] वर्त्या कज्जलधृतमिव[9] तत्कर्पूरयुतम्। सहस्रपरिजप्तं दिनमनुदिननयनयुतं कुर्यादखिललोकं वश्यम्। इति वशीकरणम्।

---

१. शतम्—क. ख.।

२. शिरसा धारयन् सर्वलोकप्रियो भवेत्—ख.।

३. धारयेदेकम्—क.।

४. मुषसीशमन्त्रजापात्—क. ख.।

५. दशरविवसुरुद्रामनुस्वराक्षि—क.।

६. दकमखिलवश्य—क.।

७. तिलकक्रिया स्वर्णवीनवलोकाऽरुजानुदिनम्—क.।

८. दुर्गचूर्णगर्भया—क.।

९. कज्जलमुद्धृतमिव—क. ख.।

आत्मानं कुक्कुटं ध्यात्वा स्वकीयगणशक्तया ।
साध्यां शृङ्खलया कण्ठे बध्वाकर्षमनुं[1] जपेत् ॥३४॥

सहस्रमध्यरात्रे तु रात्रित्रयमतन्द्रितः ।
तुरीयकुक्कुटस्यान्ते साध्यनाम च कर्म च ॥३५॥

जपेत् संयोज्य वश्यार्थी कालेषु[2] सकलेष्वपि ।
यामारभ्य[3] जपेदेवं योषितं मदनालसाम् ॥३६॥

स्विद्यत्स्वेदार्द्रवसना मदनाकुलचेतसा[4] ।
उत्स्विन्नगुह्यजघना शिथिलांशुकभूषणा ॥३७॥

चलत्पादप्रविन्यासा स्फुरद्रोमाञ्चकञ्चुका ।
कामानलोष्णनिःश्वासा शोषिताधरपल्लवा ॥३८॥

विकीर्णकेशपाशा च प्रेरिता घूर्णितेक्षणा ।
रचिताञ्जलिरायाति मुखेनास्यालयं[5] निशि ॥३९॥

साध्यप्रणवदर्भितं[6] मनुमिमं ताम्बूलपत्रोदरे
लेखन्या प्रविलिख्य कर्मसहितं प्राणान् प्रतिष्ठाप्य च ।
जप्त्वाष्टौ शतमर्कदुग्धजनिता लेपे त्रिरात्रान्तरे
तप्तं दीपशिखाग्निना स्वयममूर्वश्योर्वशी चाश्रयेत् ॥४०॥

भूर्जे मन्त्रमिदं[7] विलिख्य सकलं साध्यान्वयाढ्यं पुटं
प्राप्तप्राणमथाष्टकोत्तरशतं जप्तं त्रिरात्रं पुनः ।

---

१. वश्याकर्षन्–क. ख. ।
२. काम्येषु–क. ख. घ. ।
३. जातमायुर्जपेदेवं योषितं सा मदालसा–क. ख. ।
४. चेतना–क. ख. घ. ।
५. स्वयमस्यालयं निशि–क. ख. ।
६. साध्याख्यानविदर्भितम्–क. ख. ।
७. मन्त्रममुम्–ख. घ. ।

मधुक्षौद्रक्षीरगतेष्विदं पृथगपि प्रक्षिप्य मन्त्रं जप-
न्नाकर्षत्यचिरादभीष्टवनितां नागादिलोकादपि ॥४१॥

आलिख्यैव शरावके मनुमिमं तन्नामकर्मान्वितं
रात्रौ रोचनया प्रणीतपवनं जप्त्वा च साष्टौ शतम् ।
तस्यानाभिमुखाङ्गजन्यभवनं संतापयन् खादिरे
वह्नौ[1] मत्तमतङ्गवेगविषमा योषा समायाति च ॥४२॥

नाभिमात्रजले स्थित्वा साध्यनामविदर्भितम् ।
त्रिसहस्रञ्च त्रिदिनं इष्टमाकर्षयेद् ध्रुवम् ॥४३॥

इत्याकर्षणम् ।

कपिरोम तथा हिङ्गु खरचर्मणि चूर्णयेत् ।
मन्त्रं जप्तं सप्तवारं नामकर्मविदर्भितम् ॥४४॥

त्रिसहस्रं पुनस्तेन स्निग्धयोरन्तराऽन्तरा ।
धूपो[2] भवति विद्विष्टौ स्निग्धावपि विभिद्यतः ॥४५॥

तालपत्रे[3] लिखेन्मन्त्रं नामकर्मविदर्भितम् ।
विषलिप्तं द्विधा[4] कृत्वा निखनेत् सिन्धुतीरयोः ॥४६॥

मन्त्रेणानेन[5] कर्मान्तं खादिराग्नौ सहस्रकम् ।
हुनेदन्योन्यविद्वेषो भवेतामपि रोगिणोः ॥४७॥

इति विद्वेषः ।

आलिख्यामे शरावे च निशायां साध्याक्षरं पुटितम् ।
मन्त्रं स्थापितपवनं सहस्रजप्तं चतुष्पथे निखनेत् ॥४८॥

---

१. वह्नौ सा तमनङ्गशेष विवशा—क., अनङ्गवेगविवशा—घ. ।

२. धूपैरतीव विद्विष्टौ—क. ख. घ. ।

३. कृतप्राणप्रतिष्ठान्तं प्रजप्तं त्रिसहस्रकम्—क. ख. घ. ।

४. त्रिधा—घ. ।

५. स्निग्धयोः शत्रुविद्वेषः स्यादुमेशानयोरपि ।
उलूककाकयोः पक्षौ गृहीत्वा मन्त्रवित्तमः ॥—क. ख.,
स्निग्धयोर्वा गुरुद्वेषः स्यादुमेशानयोरपि—घ. ।

स्तम्भनमेतदवश्यं भविता जगताञ्च नात्र सन्देहः ।

कृत्वा प्रतिकृतिरथवा श्मशानाङ्गारकेशवसनया सम्यगधिष्ठितपवनां[1] हृद्गते नाम्नीं समन्त्रललाटां वृषणस्थितपवनां सहस्रजप्तं तल्लक्षया[2] वसनां दग्धां स्मृत्वा लिखेत्[3]। श्मशानदेशे सपत्नीकस्य[4] वाक्स्तम्भः। आलिख्य चेष्टकायुगले मन्त्रं साध्यनामपुटितं निशायां निशीथकाले सहस्रं जप्तं प्रतिष्ठितप्राणं बन्धनमतितीक्ष्णतरम् । स्तम्भनमतितीक्ष्णाम्बुनिक्षिप्तम् ।

लिखितमन्त्रचितामयकीलकं सहितकर्म सनाम समाहतम् ।
कृतजपं त्रिसहस्रकसंख्यया पथि खनेदथ जालनिवारणम्[5] ॥४९॥

विहितनिम्बभवो[6] रिपुनामयुङ्मनुमिमं निशया कृतनामकम् ।
नवसहस्रजपाद् वसुसाधितं पथि खनेदथ सैन्यनिरोधकम् ॥५०॥

इति स्तम्भनम् । अथोच्चाटनम् ।

अङ्गारकं पितृभुवो रिपुपौषनक्षे[7]
जप्त्वा विनिर्मितमिदं पितृभूगताग्नौ ।
दग्ध्वा[8] च तद्भवविमिश्रितमत्र शत्रो-
रालिख्यनाम मनुकर्मयुगस्य मूर्ध्नि ॥५१॥

---

१. रसनाधिष्ठितपवनाम्–क. ख. घ. ।

२. तदुक्तया–क. ख. घ. ।

३. निखनेत्–क. ख. घ. ।

४. सदसि–क. ख. घ. ।

५. याननिवेशनम्–ख. ।

६. निम्बतरौ–क. ख. घ. ।

७. पितृवनोद्भवमेघलक्षे जप्त्वा विनिर्मितमिदन्–क. ।

८. 'दग्ध्वा' इति श्लोकार्धो नास्ति–घ. ।

क्षिप्तं प्रचालयति चाष्टसहस्रजप्तं
जप्त्वा शिवे कुजदिने सचतुर्दशीके ।
कर्मान्वयाढ्यमनुना त्रिसहस्रजप्तं[2]
दत्तं विधाय रिपुमूर्ध्नि विनिक्षिपेत् तम् ॥५२॥

उच्चाटयेद् ध्रुवमसौ रिपुमाशु चैतद्
अङ्गारकं पितृभुवो रिपुपौषनर्क्षे ।
जप्त्वा विनिर्मितमिदं रिपुनाम तस्मिन्
मन्त्रोपमं पुटितमष्टसहस्रजप्तम् ॥५३॥

तद्वैरिवेश्मनि विनाशकरं विकीर्णम्
कृत्वा श्मशानस्य चतुष्टयं किलन् ।
जप्त्वा सकर्मान्वयसंपुटं मनुं
सहस्रजप्तं निखनेद् द्विषां गृहे ॥५४॥

तद्द्वारि चोच्चाटनमाशु जायते ।
निरस्य काकनिलयं पितृभूगताग्नौ
जप्त्वा च तद्भसितमिश्रितमन्त्रशत्रोः ॥५५॥

आलिख्य नाम मनुकर्मयुगस्य मूर्ध्नि
प्रोच्चाटयेद् रिपुमष्टसहस्रजप्तम् ।
जप्त्वा परे कुजदिने सचतुर्दशीके
कर्मान्वयाढ्यमनुना च सहस्रजप्तम् ॥५६॥

दत्तं विधाय रिपुमूर्ध्नि विनिक्षिपेच्च
उच्चाटयेद्रिपुमसौ ध्रुवमाशु[3] चैतत् ।
श्मशानजोल्कारिपुनामकर्म
संपृक्तपत्रं च सहस्रजप्तम् ॥५७॥

---

१. परे—क. घ. ।

२. च—क. ख. घ. ।

३. द्रुतमाशु चैतत्—क. ख. घ. ।

द्वारे क्षिपेदुलूकमत्र[1] शत्रोरुच्चाटयेत् सप्तदिनान्तराले ।
कीलं चिताकाष्ठमयञ्च नाम कर्मान्वितं चाष्टसहस्रसंख्यम् ॥५८॥

मन्त्रेण जप्तं निखनेदरातिर्गेहे तदुच्चाटयति क्षणेन
उन्मत्तरसालोलितचितामसीं[2] काकपक्षेण ।
कारस्करफलकान्तरमनुं लिखेत्

काकवन्ध्याफलं कान्तमनुं लिखेत् कर्मनामसंपुटितम् ॥५९॥
प्रस्थाप्य प्राणानस्मिन् द्विपतोऽष्टविषानुलिप्तसंसिद्धम् ।
तत्रैव सहस्रजप्तं श्मशानदेशे चतुष्पथे वापि ॥६०॥

निखनेदरिभवने [3]तदम्बुमस्तके रिपोः क्षिप्तम् ।
देशान्तरमथवाऽसौ यास्यति लोकान्तरं सदा रोगी ॥६१॥

इत्युच्चाटनम् ॥

चतुर्थः पटलः ॥

—:०:—

मन्त्रं साध्यस्य नामप्रतिपुटितमथालिख्य तालस्य पत्रे
[4]पुत्तल्योर्निधायार्पितपवनमनोर्जपमन्त्रौ सहस्रकम् ।
वह्नावुन्मत्तदीप्ते पितृवनजनिते तीक्ष्णतैलेन लिप्तं
हत्वा स्थित्वा [5]निशार्क्षे त्रिदिनपरिमितं मोहयेन्मारयेद्वा ॥ १ ॥

---

१. मस्य–घ. ।

२. चितामयीम्–क. ।

३. तदष्टमर्क्षे रिपो–क. ।

४. पुत्तल्यां तं निधायार्पितपवनमथो जप्तमष्टौ सहस्रम्–क. घ. ।

५. निशार्द्धे–क. च. ।

साध्याख्यवृक्षकृतरूपमधिष्ठितेन[1]
जप्तं सहस्रमपि कीलयति श्मशाने।
शस्त्रेण दारयति साधितमन्त्रमङ्गं[2]
यद्यद्रिपोरपि विनश्यति तत्तदङ्गम् ॥ २ ॥
वैरिप्रसवमृत्तिकापदरजः संयुक्तचक्रा[3] मृदा
कृत्वा पुत्तलिकाञ्च नाम हृदये शीर्षे पदे वा लिखेत्।
अङ्गारैः पितृभूगतैर्मनुमिमं तन्नामकर्मान्वितं
तस्य न्यस्य हृदीदमाशु पवनं जप्यात् सहस्रद्वयम्[4] ॥ ३ ॥
सदा[5] च तेन शतधा शस्त्रेणाहतपुत्तलीम्
याम्याशाभिमुखो निदानदशभिर्दीप्ते श्मशानानले
तैलं तीक्ष्णभवं[6] विरिच्य जुहयान्नैर्ऋत्यऋक्षेऽथवा
मन्त्री[7] प्रेतपतेः पुरं श्रुतमसौ यास्यत्यरातिर्ध्रुवम् ॥ ४ ॥
अङ्गारवारे कुलिरादाय[8] तु रिपो-
रालिख्य पत्रे प्रतिमाप्रतिष्ठाम्।
प्राणान् प्रतिष्ठाप्य विषानुलिप्तां[9]
श्मशानभूमौ जुहुयाद् विनाश्यम् ॥ ५ ॥
रिपोः प्रतिकृतिं कृत्वा गोमयेन च तद्धृदि।
तालपत्रे समालिख्य तदा मनुविदर्भितम् ॥ ६ ॥

---

१. साध्यक्षंवृक्षकृतरूपमधितेऽस्त्रां–क. घ.।
२. साधयति यत्र चाङ्गां–च.।
३. संयुक्तचक्री–क. घ.।
४. त्रयम्–क. घ.।
५. संचिन्त्यैव हुताशने च शतधा शस्त्रेण तां पुत्तलीम्–क. घ.।
६. तीक्ष्णतरं निरिच्य जहुयात् नैधन्यवृक्षेऽथवा–क.।
७. मन्त्रं प्रेतपतेः पुरं कृतमसौ याम्योत्तराभिध्रुवम्–घ.।
८. कुलिकोदये–क. घ.।
९. विधिनानुलिप्तां श्मशानभूमौ जुहुयात् विनश्येत्–क. घ.।

विन्यस्य तत्प्रतिकृतेः स्थाप्योपरि च राजतम् ।
मृन्मयं वा घटं सम्यग् गोमयेन च पूरितम् ॥७॥

तत्रापि निक्षिपेत् पत्रं लिखितं स्यात्तदा बुधः ।
वैरिप्राणान् प्रतिष्ठाप्य यस्मिन् गोमयवारिणि ॥८॥

त्रिसन्ध्यान्ते जपेत्तस्मिन् छाया यावद् भविष्यति ।
दृष्ट्वा तां गोमयजले रिपुच्छायां समाहितः ॥९॥

शस्त्रेण छेदयेदङ्गं यस्य स्वहृदि भीषणम् ।
तत्तद्विनश्यति रिपोः सप्ताहान्नात्र संशयः ॥१०॥

हृदयोदरकण्ठेषु विच्छिन्ने भविता मृतिः ।
शिरोरोगो भवेत्तस्य व्रणे शस्त्रेण मस्तके ॥११॥

शुण्ठीं चित्रकहिङ्गुं च मरोचारोहिपिप्पली ।
मन्दारधूममाकन्दं प्रोक्तमेतद्विषं बुधैः ॥१२॥

काकमाचीमामलकीमौडुम्बरजम्बुखदिरकृष्णा च ।
वंशपिप्पलनागौ रौहिणनलिनसमुद्रसारिकाः ॥१३॥

हरिद्रानिम्बकुटजविकङ्कतकदम्बवकुलत्वक्संज्ञाः ।
वञ्जुलपनसार्कशमी कदम्बनिम्बं प्रकाशमूलञ्च ॥१४॥

ततः सहस्रं मनुमादराद् जपति यः ।
स रमाभवनं भवेज्जपविधौ कपिमांसीकुसुमैः ॥१५॥

समं जपित्वा कुक्कुटरूपिणो मनुमष्टोत्तरशतं जपेत् ।
सहस्रधा यन्महेशमनुः कुक्कुटमनुरूपकः ॥१६॥

---

१. यस्य यद्यदभीप्सितम्—क. ख. ।

२. विषाष्टकम्—क. ।

३. शिवं—क. ।

पञ्चान्वितस्य भवनञ्च मनोरथाद्यै-
रापूज्यते बहुविधैरपि वत्सरेण ॥१७॥

नित्यं प्रत्युषसि प्रतीतमनसापि पादेन भूधारणा-
च्चान्योऽन्येन समन्ततः स्वपुरतः पर्याक्षिपन्तं मुहुः ।
ध्यात्वा कुक्कुटमीशरूपमथवा भूत्वैव माया स्वयं
भक्त्या यः प्रजपेदुपेन्द्रमिव तं प्राप्नोत्विवानन्दयेत्[1] ॥१८॥

तुण्डेन खण्डीकृततालवृन्त[2]माच्छादयन्तं फलरत्नखण्डैः ।
ध्यात्वा मनुं स्वं नयनो जपेद् यो विद्विष्टमाखण्डलवत् समेति ॥१९॥

दोषायमाणं निजपक्षपत्रं पतत्परार्द्धं बहुमूल्यरत्नम् ।
ध्यात्वा मणिं नियतमेव मनुं प्रजप्य
प्रौढां श्रियं भृशमवाप्य च रत्नपूर्णाम् ॥२०॥

भूमौ काञ्चनमृत्तिकापदरजोराजीः किरन्तं मुदा
कूजन्तं चरणेन धान्यनिचयं नोत्कीर्य चञ्च्वादिना ।
सञ्चिन्त्योज्ज्वलताम्रचूडमरुणं किञ्चित्समाकुञ्चित-
ग्रीवं यः प्रजपेदमुष्य भवनं धान्यादिभिः पूर्यते ॥२१॥

दशौषधं दशभषितं मनुनामुना
कृतजपं शिरसा धृतम् ।
दुरितानि रोगविषभूतभयापहं
भजतां वशीकरणमतीव रमाकरम् ॥२२॥

सुजलेन्धनचर्मभषितं त्रिधा
विधिवत् सहस्रजप्तमभिरक्षति चाखिलम् ।
भूर्जपत्रमभिलिख्य तन्नाममात्रकं
नरमाशु रक्षितधूर्जपान्वितम् ॥२३॥

---

१. प्राप्येन्दिरानन्दयेत्—क. घ. ।

२. भालवृन्तं—क. ।

मनुना तण्डुलमनुना सहस्रजप्तं तु कुक्कुटं यो वेत्ति ।
सोऽसौ कुक्कुटहंसवद् युद्धेषु चोद्जेष्यति ॥२४॥

क्षिप्रं स्पृष्ट्वा सहस्रकमपि सञ्चिन्त्य कुक्कुटं प्रजपेत् ।
जेष्यति सपदि रणे तान् सभटैश्चरणायुधैः ॥२५॥

समायातो बहुना किमत्र मनुना लिखितं परिवाञ्छितं
सपदि साध्यते ।
अचिरेण तस्य भवने भजते वसतिं कमला विमला ॥२६॥

इति जपनिरतानां कुक्कुटाख्यानलक्षः
क्षपणकमुनिराह क्षिप्तभूतारिपक्षः ।
दुरितनिवहपक्षक्षेपणः सर्वभक्षः
प्रणतसुजनरक्षाविक्षतानां स्वपक्षः ॥२७॥

निखिलमभिमतानामर्थिनां कल्पवृक्षः
सुरवरनरनारीरञ्जनाकृष्टिदक्षः ॥२८॥

अनन्तं बिन्दुसंयुक्तं पुंकोलिद्वितयं ततः ।
वांशक्ति[1]श्चाथ पुंकोलीयुगलं विगलं ततः ॥२९॥

चुँकारं वरुणं तत्तदनन्ताढ्यं सं[2]मुद्धरेत् ।
क्रो[3]धं तदुद्धरेन्मन्त्रं कुक्कुटस्य मनोरमम् ॥३०॥

इति फेत्कारिणीतन्त्रे कुक्कुटेश्वरविवरणं नाम पञ्चमः पटलः ॥

—:०:—

१. हुंकारं वरुणारूढ़मनन्तं च समुद्धरेत्—क. ।

२. सबिन्दुकम्—घ. ।

३. क्रोमन्तमुद्धरेन्मन्त्रम्—क. ख. ।

४. "इति श्रीपश्चिमाम्नाये फेत्कारिणीमहातन्त्रे ईश्वरसंवादे चरणायुधो नाम पञ्चमः पटलः" इत्यधिकः—क. ।

देवी उवाच—

सूचिता मे पुरा शम्भो मन्त्रा नैकविधास्त्वया।
इदानीं श्रोतुमिच्छामि देवीमु[1]च्छिष्टपूर्विकाम् ॥१॥

शम्भुरुवाच—

शृणु देवि वरारोहे देवीं तां कथयाम्यहम्।
[2]यस्या विज्ञानमात्रेण भवेद् विद्यामयो नरः ॥२॥

देवी उवाच—

आँ पूँ कोलि पूँ कोलि वाँ ही पूं कोलि विगल चुँ वाँ हुँ हुँ।
को विधिः किं फलं [3]चास्य मयि विद्यास्वरूपतः।
कथ्यतां देव यत्नेन रहस्येन निवेदितम् ॥३॥

शम्भुरुवाच—

शृणु देवि विधिं वक्ष्ये फलं चोच्चाटनादिकम्।
वि[4]षं च स्थावरं देवि विद्याभावान् निहन्ति च ॥४॥
अथान्यत् संप्रवक्ष्यामि देवीं गुह्यतमां प्रिये।
उच्छिष्टपूर्विकां चैव मातङ्गीं सर्वसिद्धिदाम् ॥५॥
सर्वपापहरां देवीं सर्वदोषविवर्जिताम्।
यया विज्ञातया देव्या क्षयं गच्छन्ति चापदः ॥६॥
स्थावरं जङ्गमं चैव कृत्रिमं चाङ्गजं तथा।
विषं [5]जयति देवेशि स्वपराङ्गसमाश्रितम् ॥ ७ ॥
इयं विद्या परा विद्या सर्वपापापहारिणी।

---

१. स्वमन्त्रपूर्विकाम्—च।
२. यया विज्ञानमात्रेण अभूद् विद्यामयो नरः—क.।
३. चास्या—घ.।
४. विमुच्य स्थावरं देवि विद्या भवति हन्ति च—ङ.।
५. विषं क्षयमवाप्नोति विद्यां पञ्च''''''—घ.।

स्वर्गदा मोक्षदा चैव राज्यसौख्यफलप्रदा ॥ ८ ॥
इयं देवि मया पूर्वं साधिता विषनिर्जिता ।

सकृदुच्चारिता विद्या ब्रह्महत्याविशोधिनी[1] ॥ ९ ॥
सर्वपापापहन्त्रीयं लोकसौभाग्यदायिनी ।

यद्युच्छिष्टमुखो भूत्वा स्मरेद्देवीं कदाचन ॥१०॥
तदाचान्तो भवेद् देवि विनैवाचमने कृते ।

दुर्भगा सुभगा नूनं दुःखिता सुखिता भवेत् ॥११॥
वन्ध्यापि लभते पुत्रं शतहायनजीवितम् ।

निर्धनो धनमाप्नोति मूर्खो[2] विद्यामवाप्नुयात् ॥१२॥
यां यां प्रार्थयते सिद्धिं हठात्[3] तां तामवाप्नुयात् ।

विधानञ्च प्रवक्ष्यामि शृणु देवि मनोरमे ॥१३॥
भोजनानन्तरं देवि विनैवाचमने कृते ।

बलिं दत्त्वा प्रथमतो मूलमन्त्रेण साधकः ॥१४॥
ततो मन्त्रं जपेद् ध्यात्वा देवींतामिष्टसिद्धये ।

मन्त्रं शृणु महादेवि यथावत् कथयामि ते ॥१५॥
नम[4] उच्छिष्टशब्दं तु तथा चाण्डालिनीति च ।

सुमुखीति ततो देवि कीर्त्तयेत्तदनन्तरम् ॥१६॥
महापिशाचिनि पश्चाल्लज्जाबीजं ततः परम् ।

नादबिन्दुसमायुक्तं ठकारत्रितयं पुनः ॥१७॥
सविसर्गं महादेवि सर्वसिद्धिप्रदायकम् ।

---

१. विरोधिनी–ङ. ।
२. सर्वविद्याम्–ङ. ।
३. हस्तस्थान्ताम्–ङ. ।
४. उक्त्वा–ङ. ।

चतुर्विंशत्यक्षरीयं विद्या सर्वार्थदायिनी ॥१८॥
न तिथिर्न च नक्षत्रं नोपवासो विधीयते ।
नाङ्गन्यासकरन्यासौ न वर्णन्यास ईरितः ॥१९॥
नारिदोषो न वा विघ्नं नाशौचो नियमो न च ।
यस्य तिष्ठति मन्त्रोऽयं न स विघ्नैरवाप्यते ॥२०॥
ध्यानमस्याः प्रवक्ष्यामि यथावज्जगदीश्वरि ।
शवोपरि समासीनां रक्ताम्बरपरिच्छदाम् ॥२१॥
रक्तालङ्कारसंयुक्तां[1] गुञ्जाहारविभूषिताम् ।
सुवक्त्रां षोडशाब्दां तु पीनोन्नतपयोधराम् ॥२२॥
कपालकर्तृकाहस्तां परमज्योतिरूपिणीम् ।
वामदक्षिणयोगेन ध्यायेन्मन्त्रविदुत्तमः ॥२३॥
उच्छिष्टेन बलिं दत्त्वा जपेत्तद्गतमानसः ।
उच्छिष्टेनैव कर्तव्यो जपोऽस्याः सिद्धिमिच्छता ॥२४॥
उच्छिष्टं जपमानस्य जायन्ते सर्वसिद्धयः ।
अपरञ्च प्रवक्ष्यामि शृणु देवि फलप्रदम् ॥२५॥
होमं संतर्पणं चास्याः सहसा कार्यसिद्धये ।
स्थण्डिले मण्डलं कृत्वा चतुरस्रं समाहितः ॥२६॥
पूजयेन्मण्डले देवीं मूलमन्त्रेण मन्त्रवित् ।
ततोऽग्नेऽर्घ्यं समादाय वह्निरूपां व्यवस्थिताम् ॥२७॥
देवीं ध्यात्वा चरेद्धोमं दधिसिद्धार्थतण्डुलैः ।
सहस्रैकविधानेन राजा भवति वश्यगः ॥२८॥
मार्जारस्य तु मांसेन यो देव्यै होममाचरेत् ।
स प्राप्नोति परां विद्यां सर्वशास्त्रवशीकृताम् ॥२९॥
कुर्याच्छागस्य मांसेन होमं मधुसमन्वितम् ।

---

१. वस्त्रालङ्कारसंयुक्ताम्—ङ. ।

सहस्रैकविधानेन भवन्ति धनसिद्धयः ॥३०॥
विद्याकामश्चरेद्धोमं शर्करामधुपायसैः ।
नूनं तस्य भवन्त्येव सिद्धविद्याश्चतुर्दश[1] ॥३१॥

रजस्वलाया वस्त्रेण मधुना पायसेन च ।
होमं कृत्वा महादेवि त्रैलोक्यं वशमानयेत् ॥३२॥

नागवल्ल्या चरेद्धोमं मधुना सह सर्पिषा ।
अयुतैकविधानेन सिद्धिविद्या[2] भवेद् ध्रुवम् ॥३३॥

सद्योमार्जारमांसेन घृतेन मधुना सह ।
देवगन्धर्वकन्याया[3] भवेदाकर्षणं ध्रुवम् ॥३४॥

शशकस्य तु मांसेन मधुनालोडितेन तु ।
कृत्वा होममवाप्नोति विद्यावित्तवरैः[4] स्त्रियः ॥३५॥

धूस्तूरार्कस्य योगेन चितावह्नौ तु मन्त्रवित् ।
कोकिलाकाकपक्षैस्तु होमे शत्रून् विनाशयेत् ॥३६॥

उच्चाटनाय शत्रूणां होमं कुर्याच्च मन्त्रवित् ।
पूर्वोक्तेन विधानेन चिताकाष्ठहुताशने ॥३७॥

उलूककाकपक्षाभ्यां कुर्याद्धोमं निरन्तरम् ।
द्वेषयेच्छत्रुमन्योन्यं कलहाकुलमुद्धतम् ॥३८॥

उलूकपक्षहोमेन गर्भपातो वरस्त्रियाः ।
सहस्रैकविधानेन कुर्याद् होमं समाहितः ॥३९॥

विल्वपत्रेण साज्येन मासमेकं निरन्तरम् ।
अपि वन्ध्या लभेत् पुत्रं चिरजीविनमुत्तमम् ॥४०॥

---

१. सद्योविद्याश्चतुर्दश—क. ख. ।

२. सिद्धयोऽष्टौ—क. ।

३. चाण्डालिकेशयुक्तेन भवेदाकर्षणं ध्रुवम्—क. ख. घ. ।

४. विद्याधर—ङ. ।

बन्धूककुसुमं हुत्वा रक्तं मधुसमन्वितम् ।
दुर्भगाया हठाद्देवि सौभाग्यं सुखदायकम् ॥४१॥

प्रातरुत्थाय यः कश्चिद् होमं कुर्याद् दिने दिने ।
जवापुष्पेण साज्येन शतमष्टोत्तरं प्रिये ॥४२॥

षण्मासस्य प्रयोगेण भवेदाकर्षणं ध्रुवम् ।
देवगन्धर्वमर्त्यानां कन्या नागाङ्गजास्तथा ॥४३॥

हठादागत्य कामार्त्ता बलादालिङ्गयन्ति तम् ।
विद्यायाः क्रियते होमस्तिलपायससमिश्रितैः ॥४४॥

समाप्नोति महाविद्यां शास्त्रौघपदशालिनीम् ।
मधुना रुरुमांसेन होमं कुर्यात् प्रयत्नतः ॥४५॥

विद्यावान् धनवान् विद्धि शस्त्रशास्त्रवशीकृताम् ।
इयं देवि महादेवि वामाचारफलप्रदा ॥४६॥

दक्षिणाचारयोगेन न भवेत् फलदायिनी ।
भोजनानन्तरं चास्या बलिं दत्त्वा दिने दिने ॥४७॥

उच्छिष्टेन जपेन्मन्त्रं शतमष्टोत्तरं प्रिये ।
उज्जटे वा श्मशाने वा शून्यागारे चतुष्पथे ॥४८॥

बलिप्रदानतो देवि प्रत्यक्षा भवति ध्रुवम् ।
एषा देवी मया जप्ता भैरवाकारमिच्छता ॥४९॥

इत्येषा कथिता देवी सर्वपापापहारिणी ।
मन्त्रस्योच्चारणाद्देवि सर्वपापविवर्जितः ॥५०॥

उच्छिष्टदूषणं नास्ति स पवित्रो भवेद् ध्रुवम् ।
इत्युच्छिष्टचण्डालिनी देवी भुवनत्रयविश्रुता ॥५१॥

नान्या प्रवर्त्तते काचिद् विद्यां शृणु वरानने ।
शृणु देवि महाविद्यां समयाकालसाधिनीम् ॥५२॥

शङ्कर उवाच—

न तिथिर्न च नक्षत्रं न च साध्यादिमर्चयेत् ।
महाविद्येति विख्याता शिवदीक्षान्तगामिनी ॥५३॥

यज्ञोपवीतं देवेशि धार्यते साधकैर्नरैः ।
उच्छिष्टेनार्चयेद्देवीं महादेवेन साधिताम् ॥५४॥

नाप्यनवगतस्तिष्ठेत्[1] सर्वग्रन्थं सुविस्तरम् ।
बहुनोक्तेन किं देवि त्रैलोक्यमपि साधयेत् ॥५५॥

सदाकालं तु मन्त्रोऽयं स्मर्तव्यस्त्रिपुण्ड्रधारिणा[2] ।
पयसा गुडभक्तेन झषेण[3] जुहुयान्नरः ॥५६॥

आयुर्धनञ्च पुत्रांश्च विद्यामष्टादशीं लभेत् ।
गोप्तव्येयं प्रयत्नेन कथितव्या न कस्यचित् ॥५७॥

गुरुभक्तिः प्रकर्तव्या कायेन च धनेन च[4] ।
लोकापवादो न च देवि पापं नैवापरस्तिष्ठति मर्त्यलोके ॥५८॥

सुखं भुक्त्वा परे देवि प्लवश्च साधको व्रजेत् ।
पक्षैकसारां धनदैकसारां विद्यैकसाराञ्च शृणुष्व विद्याम् ॥५९॥

सर्वोपकारां परमार्थसारां महानुभावां भुवि कामधेनुम् ।

इति शिवदीक्षान्तर्गतभवसिद्धलक्ष्मीमते पश्चिमाम्नाये फेत्कारिणीतन्त्रे उच्छिष्टचाण्डालिनीविवरणं नाम षष्ठः पटलः ॥

—:०:—

१. नाप्यन्नविगतस्तिष्ठेत् सर्वग्रहसुविस्तरम्—क. ।

२. मन्त्रस्त्रिप्रणवात्मकः—क. ।

३. मांसेन—क. ।

४. इतः परम्—"मर्त्यलोके सुखं भुक्त्वा परे देवीपुरं व्रजेत्" इत्यधिकः—क. ।

धूमावती प्रयोगोऽयमधुना लिख्यते मया ।
दान्तावर्घीशबिन्द्वन्तो बीजो धूमावती द्विठः ॥ १ ॥
धूमावतीमनुः प्रोक्तः शत्रुनिग्रहकारकः ।
षडङ्गं याति संयुक्तं कल्पयेत्तेन मन्त्रवित् ॥ २ ॥
पिप्पलादो मुनिश्छन्दो निवृदेषा तु देवता ।
विवर्णा चञ्चला कृष्णा दीर्घा च मलिनाम्बरा[1] ॥ ३ ॥
विमुक्तकुन्तला[2] रूक्षा विधवा विरलद्विजा ।
काकध्वजरथारूढा विलम्बितपयोधरा ॥ ४ ॥
सूर्यहस्तातिरूक्षाक्षी धूतहस्ता[3] वरान्विता ।
प्रवृद्धघोषातिभृशं जटिला कुटिलेक्षणा ॥५॥
क्षुत्पिपासार्दिता नित्यं भीषणा कलहप्रदा[4] ।
एवंविधां समाध्यायेत् ततः कर्म समाचरेत् ॥ ६ ॥
तच्चतुर्थेन वर्णेन षष्ठस्वरयुतेन च ।
षड्दीर्घजातियुक्तेन कुर्यादङ्गानि मन्त्रवित् ॥ ७ ॥
जपेत् कृष्णचतुर्दश्यां पुरश्चरणसिद्धये ।
उपवासरतो मन्त्री शून्यागारे दिवानिशम् ॥ ८ ॥
श्मशाने विपिने वापि जपेल्लक्षन्तु वाग्यतः ।
सोष्णीश आर्द्रवासाश्च पुरश्चरणकर्मणि ॥ ९ ॥
साध्योपरि यन्त्रमालिख्य तस्मिन् संस्थाप्य शिवं यजेत् ।
अवष्टभ्य शिवं शत्रुनाम्नाऽथ प्रजपेन्मनुम् ॥१०॥

---

१. नलिनाम्बरा–ङ. ।

२. विद्योतकुन्तला–ङ. ।

३. पूतहस्ता–ङ. ।

४. कलहास्पदा–ख. ङ. ।

सहस्रादूर्ध्वतः शत्रुर्ज्वरेण परिगृह्यते ।
पञ्चगव्येन शान्तिः स्याज्ज्वरस्य पयसापि वा ॥११॥

मन्त्राद्यक्षरमालिख्य शत्रुनाम ततः परम् ।
द्वितीयान्तं मनोः शत्रोर्नामैवं मुनिना लिखेत् ॥१२॥

वनेऽयुतजपाच्छत्रोर्निश्चितं मरणं भवेत् ।
कृत्वा यन्त्रे [1]रिपोराख्यामरण्ये यामिनीदले ॥१३॥

उत्सादो जायते शत्रोर्मनोरयुतजापतः ।
दग्ध्वा काकं श्मशानाग्नौ तद्भस्मादाय मन्त्रितम् ॥१४॥

विरोधिनाम्नाष्टाशासु सद्य उच्चाटनं रिपोः ।
श्मशानभस्मना कृत्वा शिवं तस्योपरि न्यसेत् ॥१५॥

विरोधिनाम संलिख्य कृष्णपक्षे [2]समाचरेत् ।
महिषीक्षीरधूपञ्च दद्याच्छत्रुविपत्करम् ॥१६॥

महिषीरूपमाश्रित्य स्वप्ने शत्रुं [3]निपातयेत् ।
[4]वन्ध्याकरतले नासाद्वयोरूर्ध्वं रिपोर्न्यसेत् ॥१७॥

जलस्थः प्रजपेन्मन्त्री हूँकारान्नाशयेदरीन् ।
[5]श्मशानभस्मना लिङ्गं कृत्वा पुष्पादिनाऽर्चयेत् ॥१८॥

---

१. अरिणा—क. घ. ।

२. समर्चयेत्—क. घ. ।

३. इतोऽग्रे—"मन्त्रेणानेन निखनेत् तद्भस्म रिपुमन्दिरे ।
शत्रुमुच्चाटयेत्तूर्णं नात्र कार्या विचारणा ॥
न्यस्य पाणितले शत्रोराख्यानं चितिभस्मना ।
वह्नावधोमुखं क्रुद्धः स्थापयेन्नियुतं जपन् ॥
धूमावतीं मनुं मन्त्री शत्रुं यमपुरं नयेत् ।" इत्यधिकः—क. ख. घ. ।

४. रुद्धा करतले नामार्णयोरूर्ध्वं रिपोर्न्यसेत् ॥—क. ख. घ. ।

५. किन्निमित्तमरेर्गेहे यद्वत्तु तद्वद्भवेत्—ख. घ. ङ. ।

चिताकाष्ठानले क्षीरहोमाच्छान्तिः प्रजायते[1] ।
रजोधूपप्रदानेन गृध्ररूपेण कालिका ॥१९॥

मारयत्यरिमागत्य शान्तिर्निर्माल्यधूपतः ।
वराहवालधूपेन हन्याच्छूकररूपिणीम् ॥२०॥

अश्वत्थपत्रधूपेन शान्तिर्भवति नान्यथा ।
शान्तिः सर्वाभिचारस्य पञ्चगव्येन जायते ॥२१॥

क्षीरेण वापि देवेशि मधुरत्रितयेन वा ।

कीलेत् क्षीरतरोर्विदर्भ्य विलिखेन्मन्त्रेण नामाक्षरं
जप्त्वाऽऽलिख्य पदद्वये तु निखनेदुच्चाटनं विद्विषाम् ।
तत्पादद्वयधूलिकीर्णहविषा दद्याद् द्विजेभ्यो बलिं
तज्जप्त्वा चितिभस्मकीर्तितमनोर्हुत्वेति तद्वद्भवेत् ॥२२॥

वान्तं शत्रुगृहेषु तच्छिरसि वा तेषां कुलोच्चाटनं
वायव्ये विलिखेत्तदर्णसहितं वायुस्वराद्यौ शिवा ।
न्यक्षैः रक्ततयारिमाक्षरदशः कृत्वैव तत्रोषितं
चूर्णं तस्य च पल्लवे विनिहितं जप्तं सहस्राक्षरम् ॥२३॥

जप्त्वा वासे श्मशाने वा निर्माल्ये पादगोचरे ।
गर्दभावासभूमौ च भूतस्थाने चतुष्पथे ॥२४॥

ऊषरे मोहनाद् भूमौ पुष्पितावासके स्वयम् ।
आनीय शर्करां मन्त्री दिग्वासा दक्षिणामुखः ॥२५॥

---

१. इतः परम्—"भगवत्या समाभाष्य मनसा कर्म चिन्तयन् ।
निम्बकाकच्छदावेकीकृत्य चाष्टशतं जपेत् ॥
दद्याद् धूपं साध्यनाम्ना सद्यो विद्वेषयेदरीन् ।" इत्यधिकः–क. ख. ।

श्मशाने लोष्टं निःक्षिप्य तत्राग्नौ भर्ज्जयेत्तथा ।
चूर्णं तत्तु जपेल्लक्षं निक्षिपेच्छत्रुवेश्मनि ॥२६॥

सेनामध्ये च सर्वेषां पक्षादुच्चाटनं भवेत् ।
गर्त्ते पिपीलिकानान्तु पाद[1]भूमितले कणान् ॥२७॥

घृतान्नं सप्तरात्रन्तु जुहुयान्मन्त्रविन्निशि ।
भ्रमते काकवत् सर्वां महीमा[2]मरणादिषु ॥२८॥

कृत्वा प्रतिकृतिं शत्रोर्जन्मऋक्षेण मन्त्रवित् ।
कृत्वा प्रतिष्ठां प्राणस्य विद्धा मर्मसु कण्टकैः ॥२९॥

आयसैर्मन्त्रमावर्त्य वक्ष्यमाणैः प्रवेष्टयेत् ।
पूर्वोक्तशर्कराभिस्तु जप्त्वा नित्यं प्रतापयेत् ॥३०॥

सप्तरात्रेण तस्यापि भवत्युच्चाटनं ध्रुवम् ।
अथ सै[3]न्यद्वये लिख्य सारमेयवराहयोः ॥३१॥

मन्त्रेण गर्भितौ साध्यौ भौमवारोदयादिषु ।
धुस्तूररससंयुक्ता चिताङ्गारेण मन्त्रिणा ॥३२॥

वृषस्य पृष्ठतो बध्वा केशपाशेन तं जपेत् ।
श्मशाने शत्रुमाहूय तद्गेहे निखनेन्निशि ॥३३॥

विद्वेषणं भवेत् सद्यो गौरीशङ्करयोरपि ।
अश्वत्थत्वचि मन्त्राणैर्दर्भितं साध्यमालिखेत् ॥३४॥
[4]अन्यप्रियतरस्तत्तज्जप्त्वा उद्धृत्य चाभ्यसेत् ।

१. पादधूलिप्लुतान् कणान्—क. ।

२. भ्रमते काकवत् सर्वां महीमामरणादपि—ख. च. ।

३. शल्यद्वये लेख्यौ—क. ख. ।

४. अन्यद्विषतरोः स्तम्भं जप्त्वा च व्यत्ययान्न्यसेत् ।

पूर्वोक्तकण्टकैर्विद्धा जपेत् स्पृष्ट्वा शतं शतम्—क. ख. घ. ।

पूर्वोक्तकण्टकैर्विद्धा नयेत् स्पृष्ट्वा शतम् शतम् ॥३५॥

विद्विष्टौ भवतस्तौ तु नाम्नामपि च तत्क्षणात् ।
वर्णान्तान् विलिखेत् विषाख्यमभितः[1] कोणेषु मन्त्राक्षरैः
संरुद्धान् परितः प्रभञ्जनगृहं मध्ये च साध्यं पृथक् ।
अङ्गारैः कनकोद्भवैरविपदे मन्त्रं जपंस्ताडयेत्
कार्पासे लवणे कुजार्किदिवसे भूर्लोकविद्वेषताम् ॥३६॥

आपाद्य पूर्वाश्च मूर्त्तिं शत्रोरालिख्य शोपयेत् ।
[2]तापयेन्निशि तं जप्त्वा वह्नेरुपरि लम्बयेत् ॥३७॥

एवं सप्तदिनं द्रव्यैराजप्यालिख्य शोपयेत् ।
व्योमाग्निलशुनोन्मत्तहिङ्गुसिद्धार्थशूरणैः ॥३८॥

पिण्डैर्लवणसंपूतैरुन्मत्तद्रवसंयुतैः ।
पेषयित्वा तेन सम्यक् लिखेन्मन्त्री मनुं जपेत् ॥३९॥

निःक्षिप्य प्रतिमां तत्र हुनेन्नित्यं जपेन्मनुम् ।
बलिमध्ये खनेत् कीलं युक्तरूपं तथोपरि ॥४०॥

[3]वह्निं प्रज्वाल्य तत्कीलैर्द्रव्यसंयुक्ततो जपेत् ।
सप्तरात्रं ततः कुण्डं शून्यागारे पुरा हुनेत् ॥४१॥

त्रिकोणशूलदीप्तञ्च मेखलायतनान्वितम् ।
तत्रापि निखनेत् कीलं वह्निं प्रज्वाल्य पूर्ववत् ॥४२॥

ततः प्रतिकृतिं मन्त्री वह्नेरुपरि लम्बयेत् ।
मुक्तद्रव्येण संल्लिप्तामूर्ध्वपादामधोमुखीम् ॥४३॥

---

१. दिशाप्यभिमतः—ङ. ।

२. आतपे निशितां जप्त्वा—क. घ. ।

३. वह्निं प्रज्वाल्य तत्काष्ठैर्गव्ययुक्तं हुनेत् जपेत्—क. ख. घ. ।

रक्तद्रव्यैः समाराध्य प्रज्ज्वाल्य विषवृक्षजैः ।
इन्धनैः प्रतिमायाश्च समित्प्रज्वलितां हुनेत् ।
[1]अनेनादिभिराहुत्योर्निर्विषं यात्यसंशयः ॥४४॥

इति फेत्कारिणीतन्त्रे धूमावतीविवरणं नाम सप्तमः पटलः ॥

—: ० :—

श्रीदेवी उवाच—

अधुना श्रोतुमिच्छामि गृध्रकर्णीमनुं शिव ।

श्रीशिव उवाच—

गृध्रकर्णीमनुं देवि कथयामि शृणु प्रिये ॥१॥
गृध्रकर्णीपदं चोक्त्वा विरूपिणि पदं ततः ।
[2]लम्बस्तनिपदं पश्चाद् महोदरिपदं वदेत् ॥२॥
उत्पादयपदं भूयस्तथैवोपरि देवि च ।
पदान्येतानि वीप्सायै वदेत्त[3]न्मन्त्रमेव च ॥३॥
वह्निजायापदं चोक्त्वा ततो मन्त्रं जपेद् बुधः[4] ।
अयुतं मन्त्रसिद्ध्यर्थं मातृकान्यासतत्परः ॥४॥
पिप्पलादो मुनिश्रेष्ठो निवृच्छन्द उदाहृतम् ।
स्वयमेव तु पञ्चाङ्गभद्रकाली तु देवता ॥५॥
अतिरौद्री महादंष्ट्रा कृशा दीर्घा कृशोदरी ।
[5]प्रमत्तनयना शूरा दीर्घघोणा मदान्विता ॥६॥

---

१. आवर्णादिभिर्मृत्योर्वशं याति न संशयः—क० ।

२. लम्बोदरि—क० ।

३. वर्मास्त्रमेव च—क० ।

४. इतः परम्—"गृध्रकर्णाविरूपलम्बस्तनि महादेवि उत्पादय भूमिपतये देवि हूँ हूँ फट् फट् स्वाहा, गृध्रकर्णाविरूपलम्बोदरि उत्पादय देवि हूँ हूँ फट् फट् स्वाहा" इत्यधिकः—क० ।

५. सुवृत्तनयना—क० घ० ।

स्निग्धगम्भीरनिर्घोषा नीलजीमूतसन्निभा ।
भ्रुकुट्याशीव[1] संदीप्ता महावदनभीषणा ॥७॥

दष्टौष्ठा कोपताम्रोष्ठी रक्तदीर्घतनूरुहा ।
त्रिशूलैरुग्रदोर्दण्डा नरकीटपलाशिनी ॥८॥

अतिरक्ताम्बरा देवी रक्तमांसासवप्रिया ।
शिरोमाला विचित्राङ्गी पिबन्ती शोणितासवम् ॥९॥

नृत्यन्ती च हसन्ती च पिशाचगणसेविता ।
पिशाचस्कन्धमारुह्य भ्रमन्ती वसुधातलम् ॥१०॥

शङ्करस्य मुखोत्पन्ना योगिनी योगवल्लभा ।
इत्थंभूता भद्रकाली मातृभिः परिवारिता ॥११॥

ध्यात्वा सम्यक् समाराध्य मन्त्रकार्यं समारभेत् ।
धूमावत्याश्च यत् प्रोक्तमनया च तदाचरेत् ॥१२॥

उक्तः प्रयोग एवात्र विशेषविधिरुच्यते ।
विज्ञाय तं तु निर्घोषमेकसूत्रं[2] वनान्तरात् ॥१३॥

विषवृक्षं समादाय ततो होमं समाचरेत् ।
शून्यागारे वने वापि कुण्डं कृत्वा त्रिकोणकम् ॥१४॥

विल्ववृक्षेन्धनैर्वह्निं प्रज्वाल्य धारयेत् सुधीः ।
ततः कुण्डं जपेन्मन्त्री विषवृक्षस्य साधकः ॥१५॥

अष्टोत्तरशतं वह्नौ तदग्नौ प्रक्षिपेद् बुधः ।
सुविनीतं द्विजं धीरं कृत्वा चोत्तरसाक्षिणम् ॥१६॥

दिक्षु सर्वासु संस्थाप्य सुभटान् खड्गहस्तकान् ।
कृतरक्षः समाराध्यो वह्निः क्रोधसमन्वितः ॥१७॥

---

१. भ्रुकुट्टाट्टसंवीप्ता–क० ख० घ० ।
२. एकमूलनरान्तरात्–क० ख० ।

अष्टोत्तरशतं जप्त्वा दण्डाग्रं जातवेदसि ।
दत्त्वा सिद्धार्थके मन्त्री जुहुयात् सवनद्वयम् ॥१८॥

यष्ट्याग्रमग्नौ सुनिवेश्य पश्चात् सिद्धार्थकैस्तेन समुक्षितैश्च ।
हुनेत् सहस्रद्वयमत्र धीमान् विसृज्य वह्निं बलिदानपूर्वकम् ॥१९॥

ध्यायेद् देव्याः स्वरूपं प्रलयानलनिभं[1] रक्तवर्णोग्रनेत्रं
शूलाग्रप्रोतसिंहं तरुणनरशिरःस्रग्विणं[2] तीक्ष्णदंष्ट्रम् ।
उल्काव्यग्रोर्ध्वहस्तं रुधिरमधुमदभ्रान्तचित्तं सुघोरं
शत्रूणां सङ्घमुच्चैः करविधृतशिलादण्डनिर्घोषघोरम् ॥२०॥

भ्रामयित्वा[3] करेणोल्कां दक्षिणेन रिपोर्मुखम् ।
गत्वा दूरेण[4] विसृजेत् ततः क्रोधानले स्थितः ॥२१॥

सुमहाव्रत[5] तत्तीर्थं गत्वा वेगेन वाग्यतः ।
स्नात्वावश्यं शुचिर्भूत्वा कण्ठमात्रोदके स्थितः ॥२२॥

संजपेत्[6] स नरो दुर्गां सावित्रीं च समाहितः ।
अष्टोत्तरसहस्रं तु जपेदन्यच्छतं[7] शतम् ॥२३॥

उत्तीर्य[8] चाच्छाद्य ततः सुमोहाय सुरालयम् ।
गत्वा तु महतीं पूजां कृत्वा देवस्य चक्रिणः ॥२४॥

पादयुग्मं समालम्ब्य वर्णलक्षं जपेद् बुधः ।
तावज्जप्त्वा घटे सद्भिरभिपिञ्चेत् स्वकं वपुः ॥२५॥

---

१. घननिभं–क० ख० घ० ।
२. स्रग्वरम्–क०, स्रग्धरम्–ख० घ० ।
३. भावयित्वा–क० ख० घ० ।
४. ज्वरेण–क०, त्वरेण ख० ।
५. सुसहायस्ततस्तीर्थम्–क० ।
६. जपेत् सुदर्शनां दुर्गां–घ० ।
७. अष्टशतं शतम्–क० ।
८. उत्तीर्य वाससाच्छाद्य स्वसहायः सुरालयम्–क० घ० ।

दक्षिणां विधिवद् दत्त्वा शान्तिहोमञ्च कारयेत् ।
ध्यात्वा दुर्गां जपेल्लक्षं सावित्रीञ्च तथैव च ॥२६॥
कृत्वाभिषेकं ताभ्यां तु शक्तितो भोजयेद् द्विजान् ।
दक्षिणां शक्तितो दत्त्वा सिद्धो भवति साधकः ॥२७॥
रुद्रदण्डप्रयोगोऽयं दारुणो रणसूदनः ।
पुरा देवासुरे युद्धे हरेण किल निर्मितः ॥२८॥
तत्प्रयोगमहं वक्तुं न शक्नोमि तथाऽपि चेत् ।
प्रयोगमात्रं तद्वक्ष्ये विद्वेषोच्चाटनादिकम् ॥२९॥
विभीतकफलैः शत्रोर्लिखेन्नाम सहस्रकम् ।
मन्त्रं जप्त्वा सहस्रं तत् खनेत् पितृवने बुधः ॥३०॥
उच्चाटनं भवेत् क्षिप्रं मरणं[1] चापि किं पुनः ।
मानवानां द्विजश्रेष्ठ न कर्तव्यं मनीषिभिः ॥३१॥
तथैव किल तस्यैव त्रिकोणेऽधोमुखं लिखेत् ।
धूस्तूरबीजकर्णेन जप्त्वा वालिप्य तत्पदे ॥३२॥
खनेदुच्चाटयेच्छत्रून् वाताहतरजो यथा ।

इति फेत्कारिणीतन्त्रे गृध्रकर्णाविवरणं नाम
अष्टमः पटलः ॥

—: ० :—

श्रीशिव[2] उवाच—

साम्प्रतं संप्रवक्ष्यामि भद्रकालीमहामनुम् ।
श्रूयतां परमेशानि सावधानाऽवधारय ॥ १ ॥
प्रासादबीजमुद्धृत्य कालीति पदमुद्धरेत् ।
महाकालि पदं चोक्त्वा किलयुग्ममतः परम् ॥ २ ॥

---

१. मानवस्यापि—क० घ० ।
२. "श्रीशिव·····धारय" नास्ति—ख० ग० ।

[1]षडग्निवल्लभान्तोऽयं भद्रकालीमहामनुः ।
आराध्य प्रजपेन्नित्यमष्टोत्तरशतं मनुम् ॥ ३ ॥

( हौं कालि महाकालि किलि किलि फट् स्वाहा )
जपमाला विधातव्या अष्टाधिकशतेन च ।
ध्यातव्येयं महादेवो भद्रकाली भयापहा ॥ ४ ॥

क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी मुक्तकेशी रुदन्ती
नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं करोमि ।
हस्ताभ्यां धारयन्ती ज्वलदनलशिखासन्निभं पाशमुग्रं
दन्तैर्जम्बूफलाभैः परिहरतु भयं पातु मां भद्रकाली ॥ ५ ॥

प्रयोगश्चात्र कर्तव्यः सामान्यपटलोदितः ।
अशेषकालिकामन्त्रं कथितं कार्यसिद्धये ॥ ६ ॥

इयं देवी महादेवी शत्रुनिग्रहकारिणी ।
यथेष्टचेष्टया चिन्त्या धर्मकामार्थसिद्धिदा[2] ॥ ७ ॥

इति फेत्कारिणीतन्त्रे भद्रकालीविवरणं नाम
नवमः पटलः ॥

—: ० :—

अथातः संप्रवक्ष्यामि पुण्याप्त्यै दक्षिणाविधिम् ।
सर्वसिद्धिप्रदं साक्षान्महापातकनाशनम् ॥ १ ॥

दैवैर्देवत्वविषये सिद्धैः खेचरसिद्धये ।
गन्धर्वैर्दानवैर्यक्षैः स्वस्वकार्यार्थसिद्धये ॥ २ ॥

पन्नगै राक्षसैर्मर्त्यैर्मुनिभिश्च मुमुक्षुभिः ।
कामिभिर्धर्मिभिश्चार्थलिप्सुभिः सेवितां सदा ॥ ३ ॥

---

१. अस्त्रमग्निप्रियान्तोऽयम्-क० घ० ।
२. मुक्तिदा-क० ख० ।

देवीं दक्षिणसंज्ञां तां प्रवक्ष्यामि यथा मुने ।
ॐ करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ॥ ४ ॥

कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषणाम् ।
सद्यश्छिन्नशिरःखड्गवामाधोऽर्ध्वकराम्बुजाम् ॥ ५ ॥

अभयं वरदं चैव दक्षिणाधोर्ध्वपाणिकाम् ।
महामेघप्रभां श्यामां तथा चैव दिगम्बराम् ॥ ६ ॥

कण्ठावसक्तमुण्डालीं गलद्रुधिरचर्चिताम् ।
कर्णावतंसतां नीतशवयुग्मभयानकाम् ॥ ७ ॥

घोरद्रंष्ट्रां करालास्यां पीनोन्नतपयोधराम् ।
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम् ॥ ८ ॥

सृक्कद्वयगलद्रक्तधाराविस्फुरिताननाम् ।
घोररूपां महारौद्रीं श्मशानालयवासिनीम् ॥ ९ ॥

दन्तुरां दक्षिणव्यापिमुक्तालम्बिकचोच्चयाम् ।
शवरूपमहादेवहृदयोपरि संस्थिताम् ॥१०॥

शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम्[1] ।
महाकालेन च समं विपरीतरतातुराम् ॥११॥

सुखप्रसन्नवदनां स्मेराननसरोरुहाम् ।
एवं सञ्चिन्त्य कालीं तु श्मशानालयवासिनीम् ॥१२॥

प्रवक्ष्यामि मनुं तस्याः सर्वकामप्रदायकम् ।
( क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ
हूँ हूँ ह्रीँ ह्रीँ स्वाहा ॥ ) ॥१३॥

वर्गाद्यं वह्निसंस्थं च रतिबिन्दुसमन्वितम् ।
त्रिगुणञ्च ततः कूर्चयुग्मं लज्जायुगं ततः ॥१४॥

---

१. घोररावाम्–घ० ।

दक्षिणे कालिके चेति पूर्ववच्च ततः पुनः ।
ठद्वयेन समायुक्तं मन्त्रमेनं विदुर्बुधाः ॥१५॥

द्वात्रिंशत्यक्षरो मन्त्रः सर्वसिद्धिप्रदो नृणाम् ।
नात्र शुध्याद्यपेक्षास्ति न वा मित्रारिदूषणम् ॥१६॥

न वा प्रयासबाहुल्यं समयासमयादिकम् ।
न वित्तव्ययबाहुल्यं कायक्लेशकरं न च ॥१७॥

य एनं चिन्तयेन्मन्त्री सर्वकामसमृद्धिदम् ।
तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ॥१८॥

गद्यपद्यमयी वाणी सभायां तस्य जायते ।
तस्य दर्शनमात्रेण वादिनश्च पराजिताः ॥१९॥

राजानोऽपि हि दासत्वं भजन्ते किं परे जनाः ।
वह्नेः शैत्यं जलस्तम्भं गतिस्तम्भं विवस्वतः ॥२०॥

दिवारात्रिव्यत्ययञ्च स कर्तुं भवति क्षमः ।
ब्रह्महत्या सुरापानमगम्यागमनं तथा ॥२१॥

सर्वमाशु हरत्येव दक्षिणामेव चिन्तयेत् ।
वागीश्वरसमो वाचि धनैर्धनपतिर्भवेत् ॥२२॥

कामतुल्यः स नारीणां रिपूणां च यमोपमः ।
सर्वस्येह जनस्येह वल्लभः कीर्तिवर्द्धनः ॥२३॥

अन्ते च लभते देव्या दुर्लभाञ्च गतिं नरः ।
चन्द्रसूर्यप्रभो भूत्वा वसेत् कल्पायुतं दिवि ॥२४॥

इत्येवमादिकं चैव बहुना कथ्यते पुनः ।
न तस्य दुर्लभं किञ्चिद् यः स्मरेद् घोरदक्षिणाम् ॥२५॥

नागयज्ञोपवीताञ्च चन्द्रार्द्धकृतशेखराम् ।
जटाजूटञ्च सञ्चिन्त्य महाकालीसमीपगाम् ॥२६॥

कूर्चलज्जायुगं बीजद्वयं चान्ते तथैव च ।
एवं सञ्चिन्त्य देवीं तु रक्तपुष्पैः समर्चयेत् ॥२७॥

कामबाणसदाविद्धा निर्लज्जा विह्वला स्त्रियः ।
स्वं स्वं सन्त्यज्य भर्त्तारमालिङ्गन्ते सदैव तम् ॥२८॥

लोहितां शूलहस्तां तामेकशूलधरां तथा ।
महाकालसमीपस्थां ध्यात्वा पीतैः सुपुष्पकैः ॥२९॥

अभ्यर्च्य कालिकां पश्चात्तथैवान्तेऽपि योजयेत् ।
आकर्षणं भवत्येव सदा स्थावरजङ्गमम् ॥३०॥

स्वर्गपातालगं चापि किमन्यद् भूतले स्थितम् ।
आकर्षयति सर्वं हि महाकालवचो यथा ॥३१॥

कपिलां द्विभुजां कर्तृकपालसव्यदक्षिणाम् ।
ध्यात्वैवं हि च सर्वस्य चान्ते च द्वयमेव हि ॥३२॥

एवं प्रजप्य पुष्पेण कृष्णेनैनां प्रपूजयेत् ।
मारणं हि भवत्यस्य यमुद्दिश्य कृता क्रिया ॥३३॥

उच्चाटयति पिङ्गाक्षी संत्रासयति केकरी ।
विद्रावयति मुक्तास्या प्रोन्मत्तयति घूर्णिता ॥३४॥

विक्षोभयति संक्रुद्धा संपादयति सायुधा ।
संकोचयति संक्रुद्धा विप्रलब्धा विरोधयेत् ॥३५॥

यं यं भावं जनो नेयस्तद्भावस्थां स्मरेद्यदि ।
अत्र सर्वं प्रकर्तव्यं भावमात्रं विचिन्तयेत् ॥३६॥

उच्चाटयति नैवात्र सर्वत्र सुरतो मतः ।
स्नातः शुक्लाम्बरधरः कृतनित्यक्रियो दिवा ॥३७॥

रात्रौ नग्नः शयानश्च मैथुने च व्यवस्थितः ।
अथवा मुक्तकेशश्च तेन स्युः सर्वसिद्धयः ॥३८॥

स्तम्भनं मोहनञ्चैव वशीकारो विशेषतः ।
नग्नां परस्त्रियं वीक्षन् प्रजपेदयुतं नरः ॥३८॥

निकेतः सर्वविद्यानां पारगः सर्वदैव हि ।
तस्य दर्शनमात्रेण वादिनो निष्प्रभा मताः[1] ॥३९॥

गद्यपद्यमयी तस्य वाणी सर्वविधा भवेत् ।
अथवा मुक्तकेशश्च हविष्यं भक्षयेन्नरः ॥४०॥

प्रजपेदयुतं तावदेवं प्रतिविधिः स्मृतः ।
अष्टोत्तरशतं जप्त्वा भागमामन्त्रणेन च ॥४१॥

मैथुनं यः प्रयात्येवं धनधान्यसुतान्वितः ।
सर्वविद्यावतां श्रेष्ठो भवेद्धै नात्र संशयः ॥४२॥

ऋतुमत्या भगं पश्यन् प्रजपेदयुतं नरः ।
बालिशस्यापि तद्वाणी गद्यपद्यमयी भवेत् ॥४३॥

छन्दोबद्धा च वै तस्य वाणी वक्त्रात् प्रवर्तते ।
सुरतेषु सदा जप्यं महापातकमुक्तये[2] ॥४४॥

श्मशानालयमागत्य मुक्तकेशो दिगम्बरः ।
जपेदयुतसंख्यं तु सर्वकामार्थसिद्धये ॥४५॥

तत्रैव प्रेतमावास्य यो जपेन्मन्त्रवित्तमः ।
अयुतं वाग्यतो भूत्वा[3] विभीषिकपरायणः ॥४६॥

---

१. निष्प्रभं गता—घ० ।

२. इतः परम्—धनागमाय च तथा परयोषा समागमे ।
यदि योषिन्नसंसर्गस्तदा रेतः प्रयत्नतः ॥
समुत्सार्य ततो जप्यं सर्वकामार्थसिद्धये ।
इत्यधिकः—क० ख० घ० ।

३. मिथुनीभूय—घ० । मैथुनीभूय ख० ।

स याति परमां सिद्धिं देवैरपि सुदुर्लभाम् ।
आकर्षणं वशीकारोच्चाटनं[1] बोधनं तथा ॥४७॥

स्तम्भनं मोहनञ्चैव भासनं द्रावणं तथा ।
वाग्मित्वञ्च धनित्वञ्च बहुपुत्रित्वमेव च ॥४८॥

बहुवल्लभतां चैव सर्वप्रियत्वमेव हि ।
समायाति[2] खेचरत्वं देवत्वमपि चैव हि ॥४८॥

न जरा न च मृत्युर्वा न रोगो न च वा भयम् ।
न भीतिर्न मनुष्यस्य न च वाक् कायपातनम् ॥५०॥

अथवा स भवेन्नित्यं चतुर्विंशतिसिद्धियुक् ।
स्वदेहरुधिराक्तैश्च विल्वपत्रैः सहस्रशः ॥५१॥

श्मशानेऽभ्यर्च्य देवीं तु वागीशसमतां व्रजेत् ।
रेतोयुक्तेन पुष्पेण अर्कस्येह सहस्रशः ॥५२॥

श्मशानेऽभ्यर्च्य कालीं तु सर्वसिद्धिं स विन्दति ।
धनवान् वलवान् वाग्मी सर्वयोपित्प्रियः सुधीः ॥५३॥

जायते नात्र संदेहो महाकालवचो यथा ।
श्मशाने योपितं नीत्वा सुवस्त्रां गणिकां तथा ॥५४॥

रक्तचन्दनदिग्धाङ्गीं रक्तपुष्पैरलङ्कृताम् ।
जवापुष्पैर्मनुं प्रोक्ष्य ततो ध्यायेत्तु चण्डिकाम् ॥५५॥

ततो गत्वा लभेद्राज्यं यदि सा न भयायते ।
श्मशानशयने चैव शवासनगतः पुनः ॥५६॥

---

१. मारणोच्चाटने तथा—ख० घ० ।
२. स याति खेचरत्वम्—ख० ।

असकृत्तु जपेन्मन्त्रं सर्वथा[1] वाऽयुतैस्तथा[2] ।
रेतोभिश्च तथा तद्वत् स्वकीयेन कचेन[3] च ॥५७॥
मैथुनायितयोषाया भगप्रक्षालनेन च ।
मेषमाहिषरक्तेन नररक्तेन चैव हि ॥५८॥
मूषमार्जाररक्तेन वाग्मिता तस्य जायते ।
धनित्वं जायते तस्य सर्वसिद्धिः प्रजायते ॥५९॥
वचसा स भवेज्जीवो धनेन च धनाधिपः ।
आज्ञया देवराजोऽपि रूपेणापि मनोभवः ॥६०॥
बलेन पवनो ह्येष सर्वतत्त्वार्थसाधकः ।
साधिता साधितं मांसं सास्थि दद्यात् सदा बलिम् ॥६१॥
मूषमार्जारमांसश्च मेषमाहिषमेव च ।
[4]शवस्यास्थि प्रदातव्यं तथा मद्यसमन्वितम् ॥६२॥
स्वनखच्छिन्नमार्जारकेशं सम्मार्जनागतम् ।
निवेदयेत् श्मशाने तत् सर्वसिद्धीश्वरो भवेत् ॥६३॥
नारीरजोऽन्वितं कृत्वा पर्णानां[5] शतमुत्तमम् ।
प्रत्येकं प्रजपेन्मन्त्रं ततस्तद्धोमयेद् बुधः[6] ॥६४॥

---

१. सर्वसिद्धिप्रदं पुनः—ख० घ० ।
२. इतोऽग्रे—तर्पयेच्च श्मशाने तां रक्तमांसास्थिभिस्त्रिधा ।
त्रिस्त्रिर्मन्त्रमुदीर्यैवं सर्वसिद्धिर्भवेद् ध्रुवम् ॥
तर्पयेच्च पयोभिश्च रक्तधारायुतैस्तथा । इत्यधिकः—घ० ।
३. करेण च—घ० ।
४. सर्वं सास्थि प्रदातव्यं तथा रोमसमन्वितम्—घ० ।
५. वर्णानाम्—घ० ।
६. इतोऽग्रे—युगानामयुतं तेन पूजिता दक्षिणा भवेत् ।
भूमिसंशोधनं कृत्वा कृत्वा वेदिं तथा बुधः ।
सर्वसिद्धिर्भवेत् तस्य वाग्मी वीरश्च जायते ।
न तस्य दुर्लभं किञ्चित् पृथिव्यां चारु विद्यते ॥ इत्यधिकः—घ० ।

योनिरूपं हि कुण्डं वै कृत्वा वितस्तिमानतः ।
हस्तविस्तारतः कृत्वा हस्तश्चापि तथाप्यधः ॥६५॥
तत्र कार्या हि विप्रेण वह्निस्थापनकक्रिया ।
महाकालाय देवाय प्रदद्यात् प्रथमाहुतिम् ॥६६॥
दद्यादाज्येन भक्तेन मांसेन रुधिरेण च ।
कृष्णपुष्पेण साज्येन रेतसापि विशेषतः ॥६७॥
रुरुमांसेन साज्येन भक्तेन रुधिरेण च ।
आमिषादिकमप्येवं जुहुयात् पितृकानने ॥६८॥
स्नातः शुक्लाम्बरधरः शुचिः प्रयतमानसः ।
दिवा चैव प्रकर्तव्यं सर्वकामार्थसिद्धये ॥६९॥
रात्रौ नग्नो मुक्तकेशो मैथुनेनापि तत्त्वतः ।
प्रकर्त्तव्यं प्रयत्नेन सर्वकामार्थसिद्धये ॥७०॥
द्विजानाञ्चैव सर्वेषां दिवाविधिरिहोच्यते ।
शूद्राणाञ्च तथा प्रोक्तं रात्रौ दृष्टं महामतम् ॥७१॥
यद्यत् कामयते चित्ते तत्तदाप्नोति नित्यशः ।
महाकालं हुनेद्यत्नात् पश्चाद्देवीं प्रयत्नतः ॥७२॥
त्रिधा विभज्य मन्त्रं वै यत्नात् साधकसत्तमः ।
मांसं रक्तं त्वचं केशं नखं भक्तञ्च पायसम् ॥७३॥
आज्यञ्चेति प्रयत्नेन होतव्यं सर्वसिद्धये ।
एवं कृत्वा विधातव्यं लभते सिद्धिमुत्तमाम् ॥७४॥
यद्यत् प्रार्थयते चित्ते तत्तदाप्नोति नित्यशः ।
देवत्वं दानवत्वञ्च सिद्धचारणतां तथा ॥
सदा हुत्वा समाप्नोति नित्यमेवमतन्द्रितः ॥७५॥

---

१. नररक्तेन यत्नतः–घ० ।

अथ वक्ष्यामहं देव्या पूजाविधिमनुत्तमम् ।
त्रिकोणं विन्यसेत् पूर्वं पुनः पश्चात् त्रिकोणकम् ॥७६॥

नवकोणं तु तस्यान्ते तन्मध्ये स्थापयेच्छिवाम्[1] ।
एवं पञ्चदशारं[2] वै रेखाभिः परिवेष्टयेत् ॥७७॥

वहिरष्टदलं कार्यं चतुर्द्वारोपशोभितम् ।
ततः पूर्वादिकोणेषु वामावर्तेन विन्यसेत् ॥७८॥

कालीं कपालिनीं कुल्वां[3] कुरुकुल्वां विरोधिनीम्[4] ।
विप्रचित्तां तु विन्यस्य वहिः षट्कोणके पुनः ॥७९॥

उग्रामुग्रप्रभां दीप्तां परत्रिकोणके[5] न्यसेत् ।
नीलां घनां वलाकाञ्च तथैवापरके त्रिके ॥८०॥

मात्रां मुद्रां मितां चैवापरत्रिकोणके बुधः ।
सर्वाः श्यामा असिकरा मुण्डमालाविभूषिताः ॥८१॥

तर्जनीं वामहस्तेन धारयन्त्यश्च[6] सस्मिताः ।
तद्बहिर्मूलतश्चापि[7] ब्राह्मी नारायणी तथा ॥८२॥

माहेश्वरी च चामुण्डा कौमारी चापराजिता ।
वाराही च तथा पूज्या नारसिंही तथैव च ॥८३॥

ततो मध्ये त्रिकोणान्तर्न्यसेद् देवीञ्च दक्षिणाम् ।
महाकालञ्च तथैव न्यसेच्चैष विधिः स्मृतः ॥८४॥

---

१. इतोऽग्रे—"तत्तु षट्कोणकं कृत्वा वहिः षट्कोणकं तथा" इत्यधिकः–ख० ।
२. पञ्चत्रिकोणं वै–ख० घ० ।
३. प्रथमे तु त्रिकोणके–ख० घ० ।
४. इतोऽग्रे—"अरुकुल्यां विरोधिन्यो विप्रचिन्तां तथा परे" इत्यधिकः–ख० घ० ।
५. तृतीये तु त्रिकोणके–ख० घ० ।
६. धारयन्तश्च सर्वतः–ख० घ० ।
७. बहिर्मण्डलतश्चापि–ख० घ० ।

सर्वासामपि देवीनां बलिपूजा तथैव च ।
अनुलेपनकं चापि विभवेनोपकल्पितम् ॥८५॥

त्रिस्त्रिः पूजा प्रकर्तव्या सर्वासामपि सर्वदा ।
अङ्गन्यासकरन्यासौ यथावत् कथयाम्यहम् ॥८६॥

दीर्घषट्कयुताद्येन प्रणवाद्येन[1] मन्त्रवित् ।
षडङ्गानि न्यसेन्मन्त्री त्रिः सकृद् वा यथासुखम् ॥८७॥

पञ्चाशद्भिश्च वर्णैश्च हृदयं द्वौ भुजौ तथा ।
तथा जङ्घाद्वयश्चैव योजनीयं दिशो दश ॥८८॥

पञ्चधा दशधा वापि मूलमन्त्रेण सप्तधा ।
समस्ताङ्गं प्रकुर्वीत शोधितं मन्त्रवित्तमः ॥८९॥

ततः पूर्वोक्तरूपां तां ध्यायेद्वै घोरदक्षिणाम् ।
योगिनीचक्रसहितां महाकालसमन्विताम् ॥९०॥

संपूज्य प्रयतश्चापि वलिं स प्रतिपादयेत् ।
वलिमुत्थाप्य नैवेद्यं नैर्ऋत्याञ्च निवेदयेत् ॥९१॥

हृदये चैव देवीं स्वे समर्प्य विधिवद् बुधः ।
निर्माल्यं वै शुचौ देशे धारणीयं प्रयत्नतः[2] ॥९२॥

लक्षञ्चैव जपेन्मन्त्री हविष्याशी दिवा शुचिः ।
अशुचिश्च तथा रात्रौ लक्षमेकं तथैव च ॥९३॥

दशांशं होमयेन्मन्त्री तर्पयेदभिषेचयेत् ।
होमेऽपि तर्पणे चैव यथावत् कथितो विधिः ॥९४॥

---

१. रतिबिन्दुयुतेन च– ख० घ० ।

२. सदैव हि–ख० घ० ।

एवं देवीं कलुषदहनीं पूजयित्वा यथावद्
धृत्वा तावद् बलिमपि तथा तर्पयित्वाऽभिषिच्य ।
यं यं कामं रचयति मनः स्वाहितं मर्त्यलोक-
स्तं तं प्राप्य प्रयाति प्रतिपदपदवीं योगिभिः प्रार्थनीयाम् ॥९५॥
भैरवोऽस्य ऋषिः प्रोक्तस्त्रिष्टुपूछन्द उदाहृतम् ।
श्मशानकालिका देवी क्रींबीजं हूँ च शक्तिकः ॥९६॥
सकलसिद्ध्यर्थे विनियोगः ।

इति फेत्कारिणीतन्त्रे श्मशानकालिकाकथने
दशमः पटलः ॥

———

कैलासशिखरासीनं चन्द्रखण्डविराजितम् ।
वक्षःस्थले समासीना[1] पृच्छति स्म नगात्मजा ॥ १ ॥

श्रीदेवी उवाच

कथयेशान[2] सर्वज्ञ भारतास्ते[3] तपोधनाः ।
कां विद्यां प्राप्य कवयो भारतादीन् प्रचक्रिरे ॥ २ ॥
श्रुत्वा नगात्मजावाक्यं रहस्यं परमेश्वरः ।
प्राह प्रियां परिष्वज्य साधु साध्विति पूजयन् ॥ ३ ॥

श्रीशिव उवाच

शृणु साध्वि महाविद्यामज्ञानेन्धनदाहिनीम् ।
यामवाप्य महात्मानो धर्मकामार्थमुक्तिषु ॥ ४ ॥
नासाध्यं मेनिरे किञ्चित् कवयः शुद्धबुद्धयः ।
वादे वदसि यां वाक्यस्तम्भिनीं प्रतिवादिनीम् ॥ ५ ॥

---

१. सुखासीना—ख० घ० ।
२. कथमीशान—घ० ।
३, लभन्ते स्म—ख० ।

विद्या हानिकरी वैरी विदुषां बलिदानतः ।
हास्याय या सदस्यानामशुद्धं[1] जल्पनादिना ॥ ६ ॥

वादिनं वाथ राजानं मन्त्रिणं वशमानयेत् ।
ज्ञानमात्रेण मन्त्रस्य मतिरुग्रा प्रजायते ॥ ७ ॥

जपादेव तु सार्वज्ञ्यं जायते नात्र संशयः ।
जिह्वायां न्यसनादेव मूर्खोऽपि[2] सुकविर्भवेत् ॥ ८ ॥

प्रत्यालीढपदार्पिताङ्घ्रिशवहृद्घोराट्टहासा परा
खड्गेन्दीवरकर्तृखर्परभुजा हूंकारबीजोद्भवा

खर्वा नीलविशालपिङ्गलजटाजूटोग्रनागैर्युता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम् ॥ ९ ॥

अव्याहतमतिः शास्त्रे विजयी वाक्पतिर्भवेत् ।
महाचीनक्रमां नत्वा तारां त्रिभवतारिणीम् ॥१०॥

तत्साधनविधिं वक्ष्ये मम सर्वज्ञसाधनम्[3] ।
[4]सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ॥११॥

न च दोषो दिवारात्रौ न सन्ध्यायां महानिशि ।
वस्त्रासनस्थानगेहदेहस्पर्शादिवारिणः ॥१२॥

शुद्धिं न चारयेदत्र निर्विकल्पं मनश्चरेत् ।
नात्र सिद्धाद्यपेक्षास्ति न वा मित्रादिदूषणम् ॥१३॥

य एवं चिन्तयेद् देवीं सर्वकामसमृद्धिदाम् ।
गद्यपद्यमयी वाणी सभायां तस्य जायते ॥१४॥

---

१. शुद्धमपि जल्पनात्—ख० घ० ।

२. मूकोऽपि—ख०

३. साधकम्—ख० घ० ।

४. "सर्व एव शुभः" इत्यतः "बलिष्वपि" पर्यन्तं नास्ति—ख० घ० ।

तस्य दर्शनमात्रेण वादिनो निष्प्रभा मताः ।
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः ॥१५॥

सर्वदा पूजयेद् देवीमस्नातः कृतभोजनः ।
महानिशि शुचौ देशे बलिं मन्त्रेण दापयेत् ॥१६॥

स्त्रीद्वेषो नैव कर्तव्यो विशेषात् पूजनं स्त्रियाः ।
जपस्थाने महाशङ्खं निवेश्योर्ध्वं जपश्चरेत् ॥१७॥

स्त्रियं गच्छन् स्पृशन् पश्यन् यत्र तत्राप्यचूडके ।
उपहारं यथायोग्यं भक्ष्यद्रव्यान् यथारुचीन् ॥१८॥

मांसं मत्स्यं दधि क्षौद्रं पयः शाकाज्यमैक्षवम् ।
भक्ताद्यशेषभक्ष्याणि दत्त्वा भक्षन् जपश्चरेत् ॥१९॥

दिक्कालनियमो नास्ति स्थित्यादिनियमो न च ।
जपे न कालनियमो नार्चादिषु बलिष्वपि ॥२०॥

स्वेच्छया[1] नियमोक्तोऽत्र महामन्त्रस्य साधने ।
नाधर्मो जायते तेन किञ्चिद् धर्मो महान् भवेत् ॥२१॥

स्वेच्छाचारोऽत्र गदितः प्रचरेद् धृष्टमानसः ।
कृतार्थं मन्यमानस्तु सन्तुष्टनिजमानसः ॥२२॥

सुगन्धिश्वेतलौहित्यकुसुमैरर्च्चयेत् दलैः ।
विल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः ॥२३॥
एकलिङ्गे श्मशाने च शून्यागारे चतुष्पथे ।

तत्रस्थः साधयेद् योगी तारां त्रिभवतारिणीम् ॥२४॥
अवाप्य मन्त्रं विधिवत् परितोष्य गुरुं तथा ।

गोभूहिरण्यवस्त्राद्यैर्यथाविभवविस्तरैः ॥२५॥
मृदुचूडकमासीनोऽप्यन्येषु कोमलेऽपि वा ।

---

१. स्वेच्छयेत्यतः···वर्जितैः शुभैः पर्यन्तं नास्ति–ख० घ० ।

विष्टरेषु समाश्रित्य साधयेत् सिद्धिमुत्तमाम् ॥२६॥
भूतशुद्धिं विधायाथ शून्यं विश्वं विचिन्तयेत् ।
निर्लेपं निर्मलं शुद्धमात्मानं तारिणीमयम् ॥२७॥
अन्तरिक्षे ततो ध्यायेदाःकाराद् रक्तपङ्कजम् ।
भूयस्तस्योपरि ध्यायेत् टांकारात् श्वेतपङ्कजम् ॥२८॥
तस्योपरि पुनर्ध्यायेद् इकारं नीलसन्निभम् ।
ततो हुकारजां पश्येत् कर्तृकां बीजभूषिताम् ॥२९॥
कर्तृकोपरि तां ध्यायेदात्मानं तारिणीमयम् ।
प्रत्यालीढपदां घोरां मुण्डमालाविभूषिताम् ॥ ३० ॥
खर्वां लम्बोदरीं भीमां व्याघ्रचर्मावृत्तां कटौ ।
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ॥ ३१ ॥
बालार्कमण्डलाकारलोचनत्रयभूषिताम् ।
चतुर्भुजां ललज्जिह्वां भीमरूपां वरप्रदाम् ॥ ३२ ॥
खड्गकर्तृधरां पक्षे वामोत्पलकपालिनीम् ।
पिङ्गोग्रैकजटां ध्यायेद् मौलावक्षोभ्यभूषिताम् ॥३३॥
सुमुखं चतुरस्रञ्च वृत्तं गोमुखमेव च ।
योनिमुद्रेति विख्याता पञ्चमुद्रा नमस्कृता ॥ ३४ ॥
ज्वलच्चितामध्यगतां घोरदंष्ट्राकरालिनीम् ।
सावेशस्मेरवदनां स्त्र्यलङ्कारविभूषिताम् ॥ ३५ ॥
विश्वव्यापकतोयान्तः श्वेतपद्मान्तरस्थिताम् ।
भावनारससम्पन्नो भवेद् योगी महाकविः ॥ ३६ ॥
जडोऽपि यदि मूर्खः स्याद् भावनावशतत्परः ।
लभतेऽभिमतां वाणीं मन्त्रस्य लक्षजापतः ॥ ३७ ॥

( ह्रीं स्त्रीं हूँ फट् )

त्र्यक्षरोऽयं महामन्त्रः फट्कारान्तो हृदि स्थितः ।
पञ्चरश्मिसमायुक्तोऽप्यज्ञानेन्धनदाहकः ॥ ३८ ॥
तस्योद्धारविधिं वक्ष्ये मम सार्वज्ञ्यकारणम् ।
प्रथमं सपरं दत्त्वा चतुर्थस्वरभूषितम् ॥ ३९ ॥
रेफारूढं स्फुरद्दीप्तमिन्दुविन्दुविभूषितम् ।
स्तंकारश्च ततो दद्यात् चतुर्थस्वरभूषितम् ॥ ४० ॥
दीर्घौकारसमायुक्तं हंकारं योजयेत्ततः ।
फट्कारं तु ततो दद्यात् सम्पूर्णं सिद्धिमन्त्रकम् ॥ ४१ ॥
कल्पयेत् स्थिरचित्तेन पण्डितोऽहं महाकविः ।
अजस्रभावनाभ्यासाद् भवेद् देवो न संशयः ॥ ४२ ॥
सुविमलनखपाणिपादकान्तै-
मुंदितमनाः परभूषणेषु मौनी ।
हरिहरकमलोद्भवाङ्घ्रिभक्तो
भवति चिराय सरस्वतीनिवासः ॥ ४३ ॥
कृतसुकृतसहस्रानेकजन्मप्रतानै-
र्यदि भवति मनुष्यो गुर्वधीनश्चिराय ।
कथमपि मनुमेनं प्राप्य शिष्याय नास्मै
निजकुलतिलकाय ज्येष्ठपुत्राय दद्यात् ॥ ४४ ॥
न पापरतये दद्याद् नाभक्ताय कदाचन ।
गुरुभक्ताय शान्ताय दद्यात् पात्रे दयात्मने ॥ ४५ ॥
मनुर्विमृश्य दातव्यो ज्येष्ठस्यापि विनीतताम् ।
पुत्राय किमथान्यस्मै विगोत्राय सुपौरुषम् ॥ ४६ ॥
मधुना त्रिदिनादर्वाग्
जिह्वायां विन्यसेदमुम् ।
( मन्त्री ) यदि पठति पठितोऽसौ
न पठति चेन्नास्य मूर्खता भवति ॥ ४७ ॥

गुरुचरणसरोजं सर्वदा भक्तिभावात्
परिचरति विधेयो वास्य सर्वात्मना स्यात् ।
कथमपि मनुमेनं मानजन्मा नरोऽसौ
भवति जगति वादिद्वैतसिद्धान्तहन्ता ॥ ४८ ॥

सर्वदा गोपयेदेनं मनुं च गुरुमेव च ।
तेन वीर्यवती विद्या निर्वीर्या स्यात् प्रकाशनात् ॥ ४९ ॥

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः[1] पिता ।
तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ॥ ५० ॥

न कदाचिद् भवेन्मूर्खो मनुं यो वेत्ति मानवः ।
त्रिलोक्यां भवति ख्यातो विधायास्य च पूजनम् ॥ ५१ ॥

यस्मिन् दिवसे लभते मनुं तत्र लाभो यदि स्यात् ।
नियतं लभते व्यत्ययमपि सदसत्कर्मणोरुभयोः ॥ ५२ ॥

उपदेशादङ्गमन्त्रो बलिमन्त्रस्तथैव च ।
ज्ञातव्या विदुषा सिद्धिरस्य मन्त्रस्य लाभतः ॥ ५३ ॥

उपांशुः स्यात् शतगुणः साहस्रो मानसः स्मृतः ।
अचिरादीहिता सिद्धिर्महाशङ्खस्य मालया ॥ ५४ ॥

यस्मिन् मन्त्रे य आचारस्तत्र धर्मस्तु तादृशः ।
कृतार्थस्तेन जायेत स्वर्गं वा मोक्षमेव वा ॥ ५५ ॥

भ्रान्तिस्तत्र न कर्तव्या सिद्धिहानिः प्रजायते ।
शुद्धचित्तो भवेन्नित्यं सिद्धिः स्यादपवर्गदा[2] ॥ ५६ ॥

उपचारविशेषेण राजपत्नीं वशं नयेत् ।
राजानं जपमात्रेण बलिना सकलं जगत् ॥ ५७ ॥

---

१. मन्त्रदः—घ० ।
२. परमार्थदा—क० ।

इति नीलसरस्वत्याः प्रपञ्चोऽयं प्रदर्शितः ।
ब्रह्मणा पूर्वमस्मभ्यं मया तुभ्यं नगात्मजे ॥ ५८ ॥

सिद्धमन्त्रो यदा मन्त्री बालिशस्यापि मूर्द्धनि ।
करं दत्वा दिशत्याशु सोऽपि श्लोकान् करोत्युत ॥ ५९ ॥

नीलसारस्वते मन्त्रे कविताविघ्नकारिणि ।
अनास्था च द्वितीयं तु न किञ्चिद् विघ्नकारणम् ॥ ६० ॥

सदा प्रसादं[1] भजतां सदा नीलसरस्वतीम् ।
विशेषतः कलियुगे मत्प्रसादाद् भविष्यति ॥ ६१ ॥

अल्पज्ञमपि विद्वांसो मानयिष्यन्ति वाग्मिनः ।
वाचस्पतिरिवाचार्यं पश्यन्मन्त्रज्ञमीदृशम्[2] ॥ ६२ ॥

मन्त्रस्य ज्ञानमात्रेण चानुभावद्वयं भवेत् ।
तात्कालिकी च कविता परैरनभिभाविता[3] ॥ ६३ ॥

विद्या ब्राह्मणमित्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥ ६४ ॥

यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम् ।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ ६५ ॥

यद्यदृष्टवशाल्लाभो मन्त्रस्यास्य भवेत् प्रिये ।
स्वगोत्रे पौरुषं नैतदन्यगोत्रं नयेत् सुधीः ॥ ६६ ॥

विद्यां वेदानवाप्नोति कीर्तिमायुः सुतान् बहून् ।
स वासः श्रीसरस्वत्योर्यत्र सारस्वतो मनुः ॥ ६७ ॥

---

१. क्षिप्रप्रसादात् भजताम्—क० ख० घ० ।
२. मादृतम्—क० घ० ।
३. अनभिभाव्यता—ख० घ० ।

पुष्करिण्या जलेऽगाधे यष्टिकाष्ठं तमोग्रहे।
दन्तेनानीय तत् तूर्णं कीलकं तेन कारयेत् ॥ ६८ ॥

तेन मधुघृताक्तेन पद्मिनीपत्रमात्रके।
लिखेद् वज्रावलीमध्ये मूलमन्त्रश्च सिद्धिदम् ॥ ६९ ॥

तत्कुण्डे चतुरस्रे तु निक्षिप्य जुहुयादपि।
सहस्रं क्षीरनीराक्तं पद्मानां लोहितत्विषाम् ॥ ७० ॥

प्रणवं पूर्वमुच्चार्य पद्मे युग्मं तथैव च।
महापद्मे पदं ब्रूयात् पद्मावति पदं ततः ॥ ७१ ॥
माये स्वाहेति मन्त्रेण यथा पूर्वं बलिं हरेत्।
एवं यः कुरु कर्म स स्याद् द्रुतकविर्ध्रुवम् ॥ ७२ ॥
अर्धरात्रे ततो नित्यं बलिं दद्यात् चतुष्पथे।
प्रणवं पूर्वमुद्धृत्य हृल्लेखां च ततः परम् ॥ ७३ ॥
एकजटे पदस्यान्ते महाशब्दमुदीरयेत्।

यक्षाधिपदमाभाष्य पतये पदतो मम ॥ ७४ ॥
उपनीतं पदं चोक्त्वा बलिं गृह्णेति च द्विधा।

गृह्णापय द्विधा चोक्त्वा मम सर्वपदान्ततः ॥ ७५ ॥
शान्तिं कुरु पदं ब्रूयात् परविद्यामनन्तरम्।
द्विधाकृष्येति च ब्रूयात् त्रुटं छिन्धीति च द्विधा ॥ ७६ ॥
सर्वादि च ततो जगद्वशमानयशब्दतः।

मायास्वाहेति मन्त्रोऽयं बल्यादौ वृद्धिसिद्धितः ॥ ७७ ॥
परसैन्यग्रहारिष्टरोगकृत्यानिवारणम्।
अथवा मधुलाजाभ्यां जिह्वायां बालकस्य तु ॥ ७८ ॥
नाडीच्छेदाद् यथा पूर्वं लिखेद्धेमशलाकया।

मूलमन्त्रं लिखेन्मन्त्री यस्योष्ठे श्वेतदूर्वया ॥ ७९ ॥
वाक्योच्चारणतो बालो वाग्मी द्रुतकविर्भवेत्।

शताभिजप्तमात्रेण रोचनातिलको नरः ॥ ८० ॥
कृत्वा पश्यति यं मन्त्री तं कुर्यादात्मवद्वशम् ।
श्मशानाङ्गारमादाय मङ्गले वासरे निशि ॥ ८१ ॥
कृष्णवस्त्रेण संवेष्टय बध्नीयाद्रक्ततन्तुना ।
शताभिमन्त्रितं तच्च प्रक्षिपेदरिमन्दिरे ॥ ८२ ॥
सप्ताहाभ्यन्तरे तेषामुच्चाटनमिदं महत् ।
नरास्थिनि लिखेन्मन्त्रं क्षारयुक्तहरिद्रया ॥ ८३ ॥
सहस्रं परिसंजप्य निशायां रविवासरे[1] ।
क्षिप्यते यस्य गेहे तु मृत्युस्तस्य त्रिमासतः ॥ ८४ ॥
क्षेत्रे तु शस्यहानिः स्याज्जवहानिस्तुरङ्गमे ।
योनियुग्मे लिखेद् भूर्जे लाक्षारसेन मन्त्रवित् ॥ ८५ ॥
तन्मध्ये साध्यसंयुक्तं मूलमन्त्रं लिखेत्ततः ।
स्वरान् क्रमगतांश्चापि कादिवर्णान् यथाक्रमम् ॥ ८६ ॥
अष्टवर्गसमायुक्तं यन्त्रमेतत् प्रयोजयेत् ।
वेष्टितं पीतवस्त्रेण यत्नेन परिवेष्टयेत् ॥ ८७ ॥
बध्नीयात् पट्टसूत्रेण शिशूनां कण्ठभूषणम् ।
स्त्रीणां वामकरे बन्धमन्येषां दक्षिणे करे ॥ ८८ ॥
वन्ध्यापि लभते पुत्रं निर्धनो धनवान् भवेत् ।
इयं रक्षा पुरा बद्धा ज्ञानार्थं गोतमादिभिः ॥ ८९ ॥
कीर्त्यर्थं पार्थिवैश्चान्यैः संग्रामे जयकाङ्क्षिभिः ।

इति निगदितमेतद् गोतमाद्यैर्यदुक्तं
सकलजनहितार्थं मन्त्रवर्णस्वरूपम् ।
यदधिगमवशात् स्याद्वाञ्छिताशेषसिद्धि-
र्द्रुततरकवितायै यत्नमन्यं त्यजेच्च ॥ ९० ॥

---

१. शनिवासरे–क० ।

अथ ते संप्रवक्ष्यामि पूजाविधिमनुत्तमम् ।
आदौ जलमधिष्ठाय पादयोः क्षालनं ततः ॥ ९१ ॥
द्विराचम्य शिखां बध्वा ततो भूमिविशोधनम् ।
विघ्नानुत्सादयित्वा तु कुर्याद् भूम्यभिमन्त्रणम् ॥ ९२ ॥
यन्त्रं लिखित्वाऽधिष्ठाय पुष्पं वाक्कायमानसम् ।
मृद्वासनं समभ्यास्य मायां पूर्वदले लिखेत् ॥ ९३ ॥
याम्ये बीजं द्वितीयं तु चोत्तरे फं[1] पश्चिमे ढं ।
मध्ये बीजं लिखेत्तारं भूतशुद्धिं समाचरेत् ॥ ९४ ॥
मायां नाभौ रक्तवर्णां ध्यात्वा तज्जातवह्निना ।
शुष्कं पापात्मकं देहं दग्[2]धं सञ्चिन्तयेत्ततः ॥ ९५ ॥
ह्रीकारं हृदि पीताभं तदुद्भूतेन वायुना ।
भस्म प्रोत्सारितं ध्यात्वा ललाटे चिन्तयेत्ततः ॥ ९६ ॥
[3]कूर्चं तूषारवर्णाभं तदुद्भूतामृतेन तु ।
तदस्थिप्लावितं कृत्वा तत्रात्मानं विचिन्तयेत् ॥ ९७ ॥
समस्तदोषनिर्मुक्तं निर्मलं देवतात्मकम् ।
विश्वव्यापकतोयान्तां बीजोत्थ[4]बीजकर्णिकाम् ॥ ९८ ॥
खर्वां श्यामां प्रत्यालीढां शवाधिरूढां चिताग्निमध्यस्थाम् ।
वृत्तारुणत्रिनेत्रां मौलावक्षोभ्यभूषितां पञ्चमुद्रा-
ढ्यां मर्त्यशिरोमालासेकजटामुदग्रदशनास्याम् ।
युवतीमुग्राहियुतां चपलचलल्लोलां व्याघ्रचर्म-
कटिवस्त्रां निस्त्रिंशकर्तृकोत्पलां शुभ्रकपालां
महोदरीमीडे ॥ ९९ ॥

१. चोत्तरे पश्चिमे तु फट्—क० ।
२. वायुबीजं जपेत्ततः—घ० ।
३. कुर्चार्णया ववर्णाभं—क० ख० घ० ।
४. स्वबीजोद्भवमूर्तिकाम्—क० ।

चिन्तयित्वैवमात्मानं करान्गन्यासमाचरेत् ।
षड्दीर्घाढ्येन बीजेन पाण्यङ्गपूजनं ततः ॥ १०० ॥

आवाह्य स्थापयित्वादावर्घ्यं दत्त्वानुलेपयेत् ।
श्रीमदेकजटे चैव वज्रपुष्पमित्यभिधाय च ॥ १०१ ॥

मूलेनाग्निप्रियान्तेन सतारेण यजेत् पुनः ।
दत्त्वा गन्धादिकमपि बलियुक्तं निवेदयेत् ॥ १०२ ॥

अक्षोभ्यवज्रमादौ तु तारिणीं मूर्ध्नि पूजयेत् ।
प्रणवाद्यग्निजायान्तं वज्रपुष्पं विनिक्षिपेत् ॥ १०३ ॥

तथा वैरोचनं शङ्खं पाण्डवं पद्मनाभकम् ।
असिताभं यजेन्मन्त्री दिक्ष्वैन्द्रीतश्चतुर्दले ॥ १०४ ॥

नामकं नामकश्चैव[1] पाण्डवं तारया सह ।
वह्न्यादिषु चतुष्कोणे स्वैः स्वैर्मन्त्रैर्यजेत् क्रमात् ॥१०५॥

द्वारे पूर्वादितः पद्मान्तकं चापि यमान्तकम् ।
विघ्नान्तकं समभ्यर्च्य पूजयेन्नरकान्तकम् ॥१०६॥

नात्युच्चं नातिनीचं स्याद् ध्यात्वा मन्त्री जपेन्मनुम् ।
बलिं दत्त्वा नमस्कृत्य स्तुत्वा देवीं विसर्जयेत् ॥१०७॥

सयोनिगोमयेनाष्टपत्रमब्जं सुशोभनम् ।
भूपुरं बहुरत्नाढ्यं[2] यन्त्रमेकजटात्मकम् ॥१०८॥

बलिपूजादिकं दद्यान्निशायां क्रियते सदा ।
तत्तदक्षयतां याति तारादेव्याः प्रसादतः ॥ १०९ ॥

---

१. रोचनं नाकमं चैव–क०, नामकां मामकां चैव–घ० ।
२. वसुवस्त्राढ्यम्–क० ख० ग० ।

श्रीमदेकजटेत्युक्त्वा वज्रपुष्पं प्रतीच्छतु ।
तारादिवह्निजायान्तमुदीर्य यजनं चरेत् ॥११०॥

इति श्रीफेत्कारिणीतन्त्रे श्रीमदेकजटाप्रकरणे एकादशः पटलः ॥

———

श्रीशिव उवाच

अथातः संप्रवक्ष्यामि महाकालीमहामनुम् ।
यस्य विज्ञानमात्रेण नासाध्यं वर्तते भुवि ॥ १ ॥

प्रलयाऽग्निरुधिरगतावूर्ध्वकेश्या समन्वितौ ।
नादबिन्दुसमायुक्तावेवं क्रोधद्वयं पुनः ॥ २ ॥

पशुं गृहाण पदतो वर्मास्त्रानलवल्लभा ।
चतुर्दशाक्षरी प्रोक्ता महाकाली ध्रुवादिका ॥ ३ ॥
( ओं फ्रें फ्रें हूँ हूँ पशुं गृहाण हूँ फट् स्वाहा )

प्रेक्तान्विकानलवधूस्तारादिरपरो[1] मनुः ।
हरद्वयं स्तम्भयुग्मं कीलयद्वयमुद्धरेत् ॥ ४ ॥

वह्निजायान्त उक्तोऽयं ध्रुवादिरपरो मनुः ।
न्यासशुद्धीनृष्यादींश्च नात्र कार्या विचारणा ॥ ५ ॥

कृष्णतोयेन सम्पूर्णे कृष्णकुम्भेऽथ कालिकाम् ।
ब्रह्मादिदिक्षु दूतीभिर्युक्ताः संपूज्य भक्तितः ॥ ६ ॥

पञ्चवक्त्रां महारौद्रीं प्रतिवक्त्रत्रिलोचनाम् ।
शक्तिशूलधनुर्बाणखड्गखेटवराभयाम् ॥ ७ ॥

दक्षादक्षभुजैर्देवीं बिभ्राणां भोगिभूषणाम् ।
अर्द्धचन्द्रां जटायुक्तां जिह्वाललनभीषणाम् ॥ ८ ॥

---

१. प्रेथोऽमुकयानलवधूस्तारि--क० ख० ।

निर्मांसमेदुरामस्थिपञ्जरां मुण्डमालिनीम् ।
मत्तव्यालोपवीताङ्गीं भूतवेतालवेष्टिताम् ॥ ९ ॥
मेदोवसावलिप्ताङ्गीं महाप्रेताधिरूढकाम् ।
ध्यात्वैवं सिद्धिदं साध्यं साधयेन्मनसि स्थितम् ॥ १० ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथैवेन्द्री चामुण्डा चण्डिकाष्टमी ॥ ११ ॥
पूर्वादीशानपर्यन्तं कुम्भाङ्के संस्थिता इमाः ।
कर्णिकायां ततो देवी महाकालभयापहा ॥ १२ ॥
नामोच्चारेण संरुद्धे वह्नौ संज्वलिते परे ।
जुहुयाद्वैरिणं क्रुद्धो देवीमन्त्रं जपन् यथा ॥ १३ ॥
समिधं पिचुमर्दस्य विभीतं चित्रकाष्ठिका ।
हरं विषं राजिण्ठश्च ककजालवला[1]न्विता ॥ १४ ॥
गृहे चैवं[2] श्मशाने वा विभीताङ्गारहोमतः ।
सप्ताहाद् वैरिणं हन्ति कालिकामन्त्रयोगतः ॥ १५ ॥
उच्चाटमपराह्ने तु सन्ध्यायां मारणं तथा ।
दक्षिणस्यां दिशि स्थित्वा ग्रामादेर्दक्षिणामुखः ॥ १६ ॥

इति श्रीफेत्कारिणीतन्त्रे महाकालीमन्त्रद्वये[3] द्वादशः पटलः ॥

---

अथातः संप्रवक्ष्यामि मन्त्रं परिमलात्मकम् ।
यस्य विज्ञानमात्रेण नासाध्यं भुवनत्रये ॥ १ ॥
रुद्रजाया महायोगिन्यतो गौरीपदं वदेत् ।
भुवनभयङ्करीपदं वर्मान्तमुच्चरेन्मनुम् ॥ २ ॥

---

१. वनान्विता—क० ।

२. गृहधूमश्मशानास्थि—क० ख० घ० ।

३. मन्त्रत्रयाख्यानं नाम—क० ।

षड्दीर्घयुक्तबीजेन मन्त्रार्द्धेनास्त्रयोगिनीम् ।
हृदयश्च ततोऽर्द्धेन वर्मास्त्रेण शिरः क्रमात् ॥ ३ ॥
शिखा—कवच—नेत्रास्त्रमेवं न्यासक्रमः स्मृतः ।
अङ्गिराश्च ऋषिर्देवी गायत्रीच्छन्द ईरितम् ॥ ४ ॥
सिंहवक्त्रा च भूतानां भयङ्कारिण्यतः परम् ।
महाकृत्वा देवता चेत्युक्त्वा न्यासं समाचरेत् ॥ ५ ॥
सिंहाननां कृष्णमुखीं लम्बमानपयोधराम् ।
दंष्ट्राकरालवदनां त्रिनेत्रां सर्वतोज्ज्वलाम् ॥ ६ ॥
कृष्णकञ्चुकसंवीतां विधूमाग्निसमप्रभाम् ।
त्रिशूलचक्रमुषल[1]खट्वाङ्गकरपङ्कजाम् ॥ ७ ॥
लेलिहानां महाजिह्वां विद्युत्प्रेक्षणभीषणाम् ।
ध्यात्वा कृत्यां विधानेन पूजयेन्मन्त्रवित्तमः[2] ॥ ८ ॥
ध्यात्वा कृत्यामर्चयेत् रक्तपुष्पैश्च वश्यके ।
कृष्णं मारणकार्येषु मांसरक्तासवैस्तथा ॥ ९ ॥
कृत्याश्च मदनां सर्वकुल्लां[3] स्वच्छादनीं तथा ।
भीषणां श्रीमतीं चैव प्रतिष्ठाञ्च तथा पराम् ॥१०॥
विद्यामभ्यर्चयेदष्टपत्रेषु क्रमतः सुधीः ।
पूर्वे तु शाङ्करीं नाम शुक्लवर्णाम्बरान्विताम् ॥११॥

---

१. चषक—क० ।

२. इतोऽग्रे—

सहस्रहोमतः सिद्धि कामितां लभते नरः ।
जपादयुतसंख्याऽस्य पुरश्चर्याविधिः स्मृतः ॥
सदेष्टसिद्धिदो मन्त्रो जायते नात्र संशयः ।
त्रिसन्ध्यं त्र्यधिकं त्रिशज्जप्तो वश्यमनुः स्मृतः ॥
सदाकालं जपेन्मन्त्रं वाचां सिद्धिमवाप्नुयात् ।
इत्यधिकः—क० ख० घ० ।

३. कुल्यामुच्छादनीम्—क० ख० घ० ।

द्विभुजां सौम्यवदनां पाशाङ्कुशधरां शिवाम् ।
दक्षिणे भीषिकां नाम ललज्जिह्वां सुधामुखीम् ॥१२॥
कृष्णवर्णां रक्तकेशीं रक्तमाल्यानुलेपनाम् ।
चतुर्भुजां सिंहनादज्वलच्छूलकपालिनीम् ॥१३॥
खङ्गहस्तां शिरोमालां सर्वाभरणभूपिताम् ।
पश्चिमे वारुणीं नाम स्वर्णवर्णां हसन्मुखीम् ॥१४॥
सुवर्णमालिकां शुभ्रदंष्ट्रामभयदां सदा ।
उत्तरे भीमिकां नाम चतुर्वर्गभयङ्करीम् ॥१५॥
पूजयित्वा जपेन्मन्त्री नित्यमष्टोत्तरं शतम् ।
अथास्या विनियोगस्तु कर्तव्यो मन्त्रिणा सदा ॥१६॥
कालं विदित्वा प्रतिमां मधूच्छिष्टेन कारयेत् ।
द्वादशाङ्गुलतः शत्रोर्नखलोमसमन्वितम् ॥१७॥
हृदये नामधेयं च फट्कारं सर्वकर्मके ।
अमुष्य प्राणा इह चामुष्य जीव इह स्थितः ॥१८॥
( आं क्रीं क्रौं यं रं लं वं शं पं सं हं सः )
अमुष्य सर्वेन्द्रियाणि चामुष्य वाङ्मनश्चक्षुः-
श्रोत्रघ्राणप्राणा इहानय त्वमग्निवल्लभा ।
इति प्राणं प्रतिष्ठाप्य मरिचैः प्रतिमां लेपयेत्ततः ॥१९॥
मृतब्राह्मणचाण्डालकेशाभ्यां पादयोः पृथक् ।
बद्ध्वा कारस्करमये तोरणे वाप्यधोमुखी ॥२०॥
तस्याधो मेखलायुक्तं त्रिकोणं यत्र[1] कुण्डकम् ।
तत्र सायं[2] विधायाग्निं परिस्तीर्य शरैस्तृणैः ॥२१॥

---

१. वह्नि–घ०, अग्नि–ख० ।
२. सारं–ख० घ०।

विभीतकपरिध्मातं कल्पयेद् यस्य मारणम् ।
जुहुयान्[1]निचुलैर्लाजैः काकोलूकस्य पिच्छकैः ॥२२॥
दारयैनं शोषयैनं मारयेत्यभिधाय च ।
अष्टोत्तरशतेनैव मनु[2]जो जुहुयात्ततः ॥२३॥

होमान्ते विधिवत् कृत्यामाराध्याग्नेस्तु सन्निधौ ।
योऽयं मे कण्ठग्रहोऽतिदूरस्थो वान्तिकेऽपि च ॥२४॥
सर्वे[3]ऽपि तृप्तिमायान्तु इत्युक्त्वा तु निवेदयेत् ।
संरक्ष्याग्निं विधानेन नवरात्रं समाचरेत् ॥२५॥

मृतस्तिष्ठति मृतानांशवस्तावदस्त्रविघ्नः ।
अर्कक्षीरेण मरिचं पिष्ट्वा सिद्धार्थमेव च ।
जले संलोड्य मन्त्रेण रिपुं ध्यात्वा निरुद्धदृक् ॥२६॥

कृष्णाम्बरोत्तरी योगपादेनाक्रम्य तद्रिपुम् ।
वज्रं शूलमिदं ध्यात्वा त[4]स्योपरि विनिक्षिपेत् ॥२७॥
नवरात्रान्तरे शत्रुर्म्रियते नात्र संशयः ।
ह[5]रसिद्धे चितावह्नौ तैलसिक्तैर्विभीतकैः ॥२८॥
यु[6]द्ध्यतो म्रियते शत्रुः सत्यमेव गणोदितम् ।
रिपोः प्रतिकृतिं कृत्वा साध्यक्षफलकेऽमले ॥२९॥

अर्कक्षीरेण मरिचं पिष्ट्वा तत्रैव लेपयेत् ।
फट्कारं हृदये कृत्वा शिवनिर्माल्यकूपके ॥३॥

---

१. निम्बतैलाक्तैः–क० ख० घ० ।
२. अनया जुहुयात् बुधः–क० ।
३. पिब गृह्ण असृक् तस्य हुत्वेत्युक्त्वा निवेदयेत्–क० ।
४. साध्यक्षफलके शुभे–क० ।
५. दूरसिद्धे चितावह्नौ तेन सिक्तैर्विभीतकैः–क० ।
६. जुह्वतो–क० घ० ।

क्षिपेत् कृष्णचतुर्दश्यां जप्त्वा मन्त्रं सहस्रशः ।
सद्योऽवगाहनं कृत्वा कुर्यादस्यानुरक्षणम्[1] ॥३१॥
मन्त्रं जप्त्वा विधानेन भेदयेत् सिंहमुद्रया ।
षण्मासान् म्रियते शत्रुः सन्ध्ययोरुभयोरपि ॥३२॥
वाय्वोः समुद्धृतं पर्णं शुष्कं वैभीतकं ततः ।
गृहीत्वा च लिखेन्मन्त्री कृष्णसर्पस्य शोणितैः ॥३३॥
नामधेयं रिपोरन्ते वायुबीजं प्रयोजयेत् ।
निखनेत्तस्य गेहे तु करिवत्[2] भ्रमते ध्रुवम् ॥ ३४ ॥
वातोद्धूतैः शुष्कपत्रैः काष्ठैरशनिपातितैः ।
उष्ट्रास्थिना चिताङ्गारैः शत्रोरुच्चाटनं भवेत् ॥ ३५ ॥
दूर्वा गुडूचीगन्धेन सर्पिषा तिलतण्डुलैः ।
अन्नैः समिद्भिः पालाशैः शान्तिं कुर्याद्विचक्षणः ॥ ३६ ॥
लक्ष्मीं बिल्वफलैः पत्रैर्नन्द्यावर्तैः श्रिये तथा ।
वज्रपुष्पैरपामार्गैरङ्गारैश्च[3] सुभद्रकैः ॥ ३७ ॥
मधुरत्रयसंसिक्तैरेभिः कुर्यात्तु वश्यकम् ।
उक्तमौशनसे तन्त्रे वारमस्यापि[4] कथ्यते ॥ ३८ ॥
शान्तिं कृत्वा विधानेन जपेत् परिमलं त्विदम् ।
महाव्याधिप्रशमनं नित्यमष्टाधिकं शतम् ॥ ३९ ॥
जपेदेकाग्रचित्तस्थो लोकवश्यकरं परम् ।
मनसा चिन्तयेत् कृत्यां गजारूढां वितन्द्रिताम्[5] ॥ ४० ॥

---

१. यस्यात्मरक्षणम्—क० ।
२. काकवत्—क० घ० ।
३. रक्तपुष्पैः—क० ध० ।
४. बाहुलस्य—क०, वासवस्य—घ० ।
५. दिगम्बराम्—क० ।

[1]चौरव्याघ्रमृगादीनां सलिलादिभयापहाम् ।
सकृच्छ्रवणमात्रेण सर्वपापविनाशनम् ॥ ४१ ॥
समाभिमन्त्रितं तोयं पीत्वा नित्यं समाहितः ।
मेधावी च भवेद्वाग्मी तावज्जप्त्वाभिषेकतः ॥ ४२ ॥
सप्ताभिमन्त्रितं कृत्वा विषमप्यमृतं भवेत् ।
मासं पक्षं द्विमासं वा षण्मासं वत्सरं तथा ॥ ४३ ॥
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।
अथ वक्ष्ये विशेषेण महाशान्तिविधिक्रमम् ॥ ४४ ॥
सर्वसिद्धिकरं पुण्यं सर्वपापविनाशनम् ।
सर्वग्रहादिदोषाणां नाशनं सिद्धिकारणम् ॥ ४५ ॥
सर्वमुद्राप्रहरणं सर्वारिष्टविनाशनम् ।
अकालमृत्युमथनं सदा विजयवर्धनम् ॥ ४६ ॥
आयुष्यं पावनं पुष्टिलक्ष्मीसौभाग्यवश्यकृत् ।
पुत्रदं कीर्तिदं चैव अलक्ष्मीमलनाशनम् ॥ ४७ ॥
महाव्याधिप्रशनमपस्मारविनाशनम् ।
योगिनीभूतवेतालाः प्रेतकूष्माण्डपन्नगाः ॥ ४८ ॥
तत्र स्थाने न तिष्ठन्ति डाकिन्याद्या विशेषतः ।
कृत्यामभ्यर्चयेद् वत्से यथाविधिपुरःसरम् ॥ ४९ ॥
षोडशारं लिखेत् पद्मं योनियुक्तं सबिन्दुकम् ।
तन्मध्येऽष्टदलं लिख्य पकारादीन् न्यसेत् क्रमात् ॥ ५० ॥
तन्मध्ये रसकोणं तु लिखेन्मूलं मनुं स्मरन् ।
चन्द्रबिम्बं लिखेन्मध्ये तस्योर्ध्वे प्रतिमां लिखेत् ॥ ५१ ॥
तस्य मध्ये लिखेत् कूर्मं वस्त्रं[2] स्रग्दामभूषितम् ।
तस्य मध्ये न्यसेत् कृत्यां सर्व[3]लक्षणसंयुताम् ॥ ५२ ॥

---

१. चौरव्याघ्रेत्यतो नाशनमिति पर्यन्तं नास्ति—ङ० ।
२. वैस्रग्दामभूषितम्—ख० ।
३. पूजयेद् गणनायकम्—क० घ० ।

पूजयेच्च यथान्यायं पायसं तु निवेदयेत् ।
परितोऽष्टघटे न्यस्या असिताङ्गादिभैरवाः ॥ ५३ ॥
असिताङ्गो रुरुश्चण्डः क्रोधीशोन्मत्तभैरवः ।
कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः ॥ ५४ ॥
गन्धपुष्पादिनाभ्यर्च्य तद्बाह्ये क्षेत्रपालकान् ।
लोकेशान्तं यजेद्देवीं तदग्रे होममाचरेत् ॥ ५५ ॥
जुहुयादाज्यापामार्गाविक्षतं तिलसर्षपौ ।
दूर्वाग्रखदिराश्वत्थं प्रत्येकं तु शताष्टकम् ॥ ५६ ॥
कुण्डे वा स्थण्डिले वापि होमकर्म समाचरेत् ।
तस्य दक्षिणपार्श्वे तु लक्ष्मीं ध्यायेद्यथाविधि ॥ ५७ ॥
कुम्भमध्ये न्यसेद् देवीं दक्षिणे तु श्रियं स्मरेत् ।
वामपार्श्वे यजेद् देवीं हृल्लेखां भुवनेश्वरीम् ॥ ५८ ॥
तस्यैव वामपार्श्वे तु पूजयेदणिमादिकम् ।
अयुतं मूलमन्त्रं तु जपेन्मृत्युविनाशनम् ॥ ५९ ॥
अयुतं भ्रूणहत्यां तु जपेत् परिमलं विदुः ।
महाव्याधिप्रशमनं तावज्जप्त्वाभिषेकतः ॥ ६० ॥
एवं यः कुरुते मर्त्यः पुण्यां गतिमवाप्नुयात् ।
येन ज्ञातं परिमलं यस्य वक्त्रे स्थितं सदा ॥ ६१ ॥
तस्यासाध्यं न विद्येत व्याधिभ्योऽपि भयं नहि ।
इत्यादिबहुले तन्त्रे ज्ञेयः परिमलो मनुः ॥ ६२ ॥
महाशान्तिकरः पुंसां दुःखदारिद्रनाशनः ।

तस्य वश्या भवेत् क्षिप्रमश्वारूढा तथा भवेत् ।
[1]सावित्र्या संपुटीकृत्य दुर्गाबीजं समं न्यसेत् ॥ ६३ ॥
इष्टसिद्धिर्भवेदाशु नात्र कार्या विचारणा ।
आत्मनो वा परस्यापि रोगादिपरिपीडितः ॥ ६४ ॥
समारभ्य जपेन्मन्त्री सद्यः सद्यो विमुच्यते ।
धान्यहोमाद् भवेद् धान्यं पयसा पशुलाभकृत् ॥ ६५ ॥
बिल्वाल्लक्ष्मीमवाप्नोति सत्यं सत्यं न संशयः ।
आदित्यमण्डलादग्रे यत् कृत्वा शुचि रोधशः ॥ ६६ ॥
ज्वरो निर्दग्धमानश्च अधोवदनमारुतम् ।
जानुदघ्ने जले तिष्ठन् ध्यायेद् वह्निमयं जलम् ॥ ६७ ॥
रिपुदेहे विनिःक्षिप्य सहस्रं क्रोधसंयुतः ।
प्रज्वाल्य हस्तं हृदयं शतं पद्मादिभिः स्पृशेत् ॥ ६८ ॥
प्रोक्षणेन जलस्यैव वैरिणः कारयेद् बुधः ।
आदित्यमण्डलाधस्तादग्निनापो विदर्भितम् ॥ ६९ ॥
तयोर्मध्यगतः शत्रुर्ज्वालामालाकुलावृतः ।
ध्यातः शत्रुर्विचार्यैतन्नात्र कार्या विचारणा ॥ ७० ॥

[2]इति श्रीफेत्कारिणीतन्त्रे त्रयोदशः पटलः ॥

—:०:—

---

१. सावित्र्या इत्यतः कार्या विचारणेति पर्यन्तं नास्ति—क० ख० घ० ।

२. इति श्रीपश्चिमाम्नाये फेत्कारिणीमहातन्त्रे शिवपार्वतीसंवादे महाकृत्यदेवीपरिमलोपाख्याने त्रयोदशः पटलः ॥ —ख० ।

श्रीशिव उवाच—

ध्यायेद्दुर्गां जयाख्यां गजमुखजननीं विश्वरूपां भवानीं
हेरम्बं पाययन्तीं स्तनमनवरतं रत्नसिंहासनस्थाम् ।
ब्रह्माद्यैर्देववृन्दैर्युगकरकलितां सेवितां सिद्धसंघै
रत्नालङ्कारपूरां परमशिववधूमभ्रवर्णां त्रिनेत्राम् ॥ १ ॥

एवं ध्यात्वा महादेवीं मनुं तस्या जपेत् सुधीः ।
अथातः संप्रवक्ष्यामि जयदुर्गामनुं प्रिये ॥ २ ॥
यस्याः प्रसादमात्रेण स्वयं सदाशिवो भवेत् ।
दुर्गे दुर्गे पदं चोक्त्वा रक्षणीति पदं ततः ॥ ३ ॥
तारादिवह्निजायान्तो जयदुर्गामहामनुः ।
पातिमध्यगतं कृत्वा न्यसेत् मन्त्रपदं बुधः ॥ ४ ॥
रक्षाकरीयं कथिता जयदुर्गा वर्मसंयुता ।
श्यामां त्रिलोचनां ध्यात्वा ह्यात्मानं च चतुर्भुजाम् ॥ ५ ॥
शङ्खचक्रेषु शूलानि[2] वहन्तीं रौद्ररूपिणीम् ।
युद्धे च व्यवहारादौ जयादौ तज्जपेन्नरः ॥ ६ ॥
( ॐ दुर्गे दुर्गे रक्षणि स्वाहा हूँ हूँ हूँ )
जयां श्रीं पूजयेन्नित्यां खड्गं[3] च छुरिकां तथा ।
जयदुर्गामनुः प्रोक्तः कथ्यते चापरो मनुः ॥ ७ ॥
नमो भगवतीत्युक्त्वा ज्वालामालिन्यतः परम् ।
गृध्रगणपरिवृते द्विठस्तारादिरीरितः ॥ ८ ॥
ॐ नमो हृदयं प्रोक्तं भगवति शिरसस्तथा ।

---

१. ध्यायेदित्यतः सदाशिवो भवेदित्यन्तं नास्ति—ख० ग०, पटलारम्भत इति जातवेदाद्या अष्टौ दुर्गा इत्यन्तं नास्ति मुद्रितपुस्तके ।
२. शूलासि—ख० घ० ।
३. यक्षे—घ० ख० च०, संङ्खं—च० ।

ज्वालामालिनि च शिखागृध्रगणपरिवृते ततः ॥ ९ ॥
कवचं स्वाहास्त्रमित्येतज्जातियुक्तं न्यसेत्तनौ ।
( ॐ नमो भगवति ज्वालामालिनि गृध्रगणपरिवृते स्वाहा )
अयुतं नियुतं चैतत् जपेन्मन्त्रं जपाज्जयी ॥ १० ॥
रुद्राङ्गनाग्निजायाभ्यां रुद्धं ज्वालामुखीत्यपि ।
मन्त्रान्तरं समाख्यातं ज्वालामुख्या मनूत्तमः ॥ ११ ॥
( ह्रीँ स्वाहा ज्वालामुखि ह्रीँ स्वाहा )
दीपतैलाक्तपादोऽर्धरात्रे गुरुदिनादितः ।
जपेदष्टसहस्रं तु त्रयोविंशतिवासरान् ॥ १२ ॥
प्रत्यहं सायनं षट्कं ददातीति न संशयः ।
नारायणीये कथितमगस्त्येन[1] पुरा पुनः ॥ १३ ॥
दुर्गा नवप्रकाराः स्युः नवदुर्गा विशेषतः[2] ।
सुसिद्धिमिच्छता गोप्या नाम्नापि न समीरयेत् ॥ १४ ॥
पुत्रस्य नृपतेश्चापि धार्मिकस्य विशेषतः ।
नवदुर्गाविधानेन दर्शयेत् कार्यगौरवात् ॥ १५ ॥
नृपोऽपि सम्यगाराध्य मन्त्रज्ञं विविधैर्धनैः ।
भक्त्या सन्निहितं कुर्याद्रक्षार्थं नित्यमादरात् ॥ १६ ॥
आपत्स्वयं प्रयोक्तव्यो मारणादौ विशेषतः ।
ततो मन्त्री प्रयत्नेन प्रकुर्यान्मारणक्रियाम् ॥ १७ ॥
परैरभ्यर्थितो मन्त्री राज्ञे सर्वं निवेदयेत् ।
निवेद्य विधिवत् पश्चात् मन्त्रिवर्येण निर्दहेत् ॥ १८ ॥
स्मृतिमात्रेण वै मन्त्री रिपून् सर्वान् विनाशयेत् ।
प्रदद्यात् दक्षिणां तस्मै सहस्रं शतमेव वा ॥ १९ ॥
गवां सुवर्णनिष्काणां भूमिं वा शस्यशालिनीम् ।
सर्वशान्तिमवाप्नोति सर्वरक्षाकृतिर्भवेत् ॥ २० ॥

---

१. नवधा पुनः—ख० ग० ।
२. विधानतः—ग० ।

नवदुर्गाविधानेन ध्यानस्यादौ विशेषतः ।
तद्वत् कर्माणि कुर्वीत नात्र कार्या विचारणा ॥ २१ ॥
कृष्णां त्रिलोचनां शङ्खचक्रशूलासिधारिणीम् ।
ज्वालामुखीं भीमरूपां ध्यायेत् त्रैलोक्यभीतिदाम्[1] ॥ २२ ॥

[2]इति फेत्कारिणीमहातन्त्रे शिवपार्वतीसंवादे जयदुर्गा-
गृध्रगणपरिवृतज्वालामुखीकथनं नाम
चतुर्दशः पटलः ॥

—:०:—

१. सुन्दरीम्–ग० ।

२. इति श्रीपश्चिमाम्नाये–क० ।

श्रीशिव उवाच—

आग्नेयमभिधास्यामि मन्त्रं सर्वार्थसाधकम् ।
मारीचिः काश्यपः प्रोक्तो मनुरस्य महात्मनोः ॥ १ ॥
त्रिष्टुप्छन्दो देवताऽत्र जातवेदोऽग्निरीरितः ।
नवभिः सप्तभिः षड्भिः सप्तभिः पुनरष्टभिः ॥ २ ॥
सप्तभिर्मूलमन्त्राणैः षडङ्गविधिरीरितः ।

यथा जातवेदसे हृदयाय नमः । सोममरातीयतो शिरसे स्वाहा । निदधाति वेदः शिखायै वषट् । स नः परिषदति कवचाय हुँ । दुर्गाणि विश्वानावेव नेत्रत्रयाय वौषट् । सिन्धुं दुरितात्यग्निः अस्त्राय फट् । इति षडङ्गानि । अथ मन्त्रः—

जातवेदसे सुनवाम सोममरातीयतो निदधाति वेदः ।
स नः परिषदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः ॥

इति आग्नेय मन्त्र इति चतुश्चत्वारिंशदक्षरं ज्ञेयम् । इति मूलेनैव षडङ्गानि ।

अङ्गुष्ठगुल्फजङ्घासु जानुनोरुरुयुग्मके ।
कट्यन्धुनाभिषु हृदि स्तनयोः पार्श्वयोर्द्वयोः ॥ ४ ॥
पृष्ठे च स्कन्धयोर्मध्ये बाहुमूलेऽपि बाहुषु ।
प्रकूर्परप्रकोष्ठेषु मणिबन्धतलेषु च ॥ ५ ॥
मुखनासाक्षिकर्णेषु गण्डमस्तिष्कमूर्द्धसु ।
क्रमेण विन्यसेद् वर्णान् विद्वान् मन्त्रसमुद्भवान् ॥ ६ ॥
शिरोललाटनयनकर्णौष्ठरसनासु च ।
सकण्ठबाहुहृत्कुक्षिकटिगुह्योरुजानुषु ॥ ७ ॥
जङ्घयोः पादयोर्न्यसेत् पदान्यस्य मनोः सुधीः ।

अत्राक्षरविन्यासे द्वयोः स्थाने एकमक्षरम् । पदन्यासे चोच्चरेदेकं बाह्वोरेकमुरुजानुजङ्घाचरणद्वयेषु चैकैकं न्यसेत् ।

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत् ॥९॥

दक्षिणपार्श्वे चक्रखड्गशरमुपलवराणि वामपार्श्वे शङ्खखेटकधनुरभयानि क्वापि ।

मन्त्रवर्णसहस्राणि जपेन्मन्त्रं विशालधीः ।
तदन्ते तिलसिद्धार्थचित्रमूलैः समिद्वरैः ॥१०॥
क्षीरद्रुमाणामाज्येन हविपाक्यैर्घृतान्वितैः ।
चतुश्चत्वारिंशदाढ्यं चतुश्शतसमन्वितम् ॥११॥
चतुःसहस्रं जुहुयादर्चिते हव्यवाहने ।
मण्डले सर्वतोभद्रे षट्कोणाङ्कितकर्णिके ॥१२॥
विधिना वक्ष्यमाणेन पीठं देव्याः प्रपूजयेत् ।

षड्गुणितं यन्त्रं कृत्वा कोणेषु दुर्गाबीजमालिख्य बहिर्वीथ्यादिकं परिकल्प्य—

जयाख्यां विजयां भद्रां भद्रकालीमनन्तरम् ।
सुमुखीं दुर्मुखीं संज्ञां पश्चाद् व्याघ्रमुखीं पुनः ॥१३॥
अथ सिंहमुखीं दुर्गां नवशक्तीः प्रपूजयेत् ।
आसनं सिंहमन्त्रेण दद्यादुक्तेन देशिकः ॥१४॥

ॐ [1]वज्रनखदंष्ट्राय सिंहाय नमः ।

मूर्तिं मूलेन सङ्कल्प्य तस्यामावाह्य पूजयेत् ।
(सर्वविद्यामयी ब्रह्मविद्यामन्नपूर्णान्तर्गतामुच्यते) ॥१५॥
षडङ्गानि यथापूर्वं केशरेष्वर्चयेत् सुधीः ।
श्र्यादिपादाष्टकोत्पन्ना मूर्तयोऽर्च्या बहिः पुनः ॥१६॥

---

१. वज्रनखदंष्ट्राय महासनाय क०, वज्रनखदंष्ट्रामुधाय महासिंहासनाय–घ० ।

जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ।
अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ॥१७॥
कौमारतत्त्वतेजाः स्यात् विश्वमुखो देवमुखस्ततः ।
ततो भूसलिलाग्निवाय्वथानन्तनमोऽन्वितान् ॥१८॥
चतुर्दिक्षु समभ्यर्च्य कोणेष्वेतत् कलाः पुनः ।
ततश्च पूर्वादिदिक्षु पृथिव्यादिचतुष्टयम् ॥१९॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरितीरिता ।
कलाचतुष्टयं कोणेषु संपूज्य यथाविधि ॥२०॥
पूर्वादिदिक्षु संपूज्य जालाद्या वर्णशक्तयः ।
जागता तपनी वेदगर्भा दहनरूपिणी ॥२१॥
सेन्दुखण्डा शुम्भहन्त्री नभश्चारिण्यनन्तरम् ।
वागीश्वरी मदवहा[1] सोमरूपा मनोजवा ॥२२॥
मरुद्वेगा रात्रिसंज्ञा तीव्रकोपा यशोवती ।
तोयात्मिका पुनर्नित्या दयावत्यपहारिणी ॥२३॥
तिरस्क्रिया वेदमाता तत्प्रिया मदनप्रिया[2] ।
समाराध्या नन्दनी च परा विश्वविमर्दिनी ॥२४॥
षष्ठी च दण्डिनी तिग्मा दुर्गा गायत्र्यनन्तरम् ।
निरवद्या विशालाक्षी श्वासोद्वाहा च नादिनी ॥२५॥
वेदना वह्निगर्भा च सिंहवाहाह्वया तथा ।
धुर्या दुर्विषहा पश्चादद्रिजा तापहारिणी ॥२६॥
त्यक्तदोषा निःसपत्ना चत्वारिंशच्चतुर्युताः ।
लोकपालांस्तथाऽभ्यर्चेत् वज्राद्यायुधसंयुतान् ॥२७॥
इत्थं पूजादिभिः सिद्धे मन्त्रेऽस्मिन् साधकोत्तमः ।
आग्नेयास्त्राधिकारी स्यात् तद्विधानमुदीर्यते ॥२८॥

---

१. मदहरा–ख० । २. मदनातरा–ख० ।

आग्नेयास्त्रमिति प्रोक्तं विलोमपठितो मनुः ।
पूर्वोक्ता एव ऋष्याद्या मन्त्रस्य परिकीर्तिताः ॥२९॥
प्रतिलोमक्रमादस्य षडङ्गानि प्रकल्पयेत् ।
मन्त्रन्यासपदन्यासौ विदध्यात् प्रतिलोमतः ॥३०॥
ध्यानभेदान् विजानीयाद् गुर्वादेशान्न चान्यथा ।
पूर्ववज्जपक्लृप्तिः स्याद् जुहुयात् पूर्वसंख्यया ॥३१॥
पञ्चगव्यसुपक्वेन चरुणा तस्य सिद्धये ।
अर्चनं पूर्ववत् कुर्यात् तत् शक्तीः प्रतिलोमतः ॥३२॥
सर्वत्र देशिकः कुर्यात् गायत्र्या द्विगुणं[1] जपम् ।
क्रूरकर्माणि कुर्वीत प्रतिलोमविधानतः ॥३३॥
शान्तिकं पौष्टिकं कर्म कर्तव्यमनुलोमतः ।
प्रयोगकाले प्रजपेदष्टौ पादान् विलोमतः ॥३४॥
शोधितो जायते पश्चाद् मन्त्रोऽयं विधिनाऽमुना ।
श्र्यादिः पञ्चाक्षरः पादो ज्ञेयो ज्ञानेन्द्रियात्मकः ॥३५॥
धूमाद्योऽन्यः पञ्चवर्णः स्मृतः कर्मेन्द्रियात्मकः ।
चाद्यस्तृतीयः पञ्चार्णः पञ्चभूतमयः स्मृतः ॥३६॥
त्याज्यः सप्ताक्षरः पादश्चतुर्थो धातुरूपकः ।
दः पूर्वः पञ्चमः पाद ऊर्मिरूपः षडक्षरः ॥३७॥
तोवर्णादिः षडर्णोऽन्यः षाट्कौशिकमयो मतः ।
सोपूर्वः पञ्चवर्णोऽन्यः शब्दादिमय ईरितः ॥३८॥
सेवर्णाद्यष्टमो ज्ञेयः पञ्चार्णो वचनादिकः ।
एवं तत्त्वसमायोगात् पादक्लृप्तिरुदाहृता ॥३९॥
तत्तत्पादाक्षरोत्पन्नास्ताराद्या वह्निदेवताः ।
प्रधानमूर्तिप्रतिमाः स्वस्ववर्णोदितप्रभाः ॥४०॥

---

१. त्रिगुणं—ग० ।

प्रज्वलत्केशवदना भीमदंष्ट्रा भयानकाः ।
देवता इन्द्रियोत्पन्ना ऊर्ध्वदृष्टय ईरिताः ॥४१॥
देवता भूतपादोत्थास्तिर्यग्वक्त्राः प्रकीर्तिताः ।
धातुरूपाक्षरोत्पन्ना उद्यानलशोभिताः ॥४२॥
ऊर्मिजा ऊर्ध्ववदनाः केशोत्थास्तिर्यगाननाः ।
एताः सर्वाः स्मृताः क्लीवा इन्द्रियार्थोद्भवाः स्त्रियः ॥४३॥
अथ तिर्य्यङ्मुखोपेता ईरितावर्णदेवताः ।
स्वाभिमुख्यः स्मृताः सौम्ये पराङ्मुख्योऽन्यकर्मणि ॥४४॥
आद्यसंख्याः समुत्पन्ना देवता ज्वलिताननाः ।
याभिर्मन्त्री दहेत् शत्रोः राज्यं सगिरिकाननम् ॥४५॥
अस्त्रं मनुष्यनक्षत्रेष्वारभेत विचक्षणः ।
आसुरेषु प्रयुञ्जीत देवतासु च संहरेत् ॥४६॥
पूर्वोत्तरत्रयं पश्चात् भरण्यार्द्रा च रोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥४७॥
ज्येष्ठा शतभिषा मूला धनिष्ठाश्लेषकृत्तिका ।
चित्रा मघा विशाखाः स्युस्तारा राक्षसदेवताः ॥४८॥
अश्विनी रेवती पुष्या स्वाती हस्ता पुनर्वसुः ।
अनुराधा मृगशिरः श्रवणं देवतारकाः ॥४९॥
देवता इन्द्रियोत्पन्ना ऊर्ध्वदृष्टय ईरिताः ।
उपक्रमेत नन्दासु रिक्तास्वस्त्रं विसर्जयेत् ॥५०॥
भद्रास्वारोहणं कुर्यात् जयास्वानन्त्यमुत्तमम् ।
उपक्रमो भौमवारे शनिवारे विसर्जनम् ॥५१॥
प्रतिसंहरणं वारे गुरोः शुक्रस्य वा भवेत् ।
स्थिरेषु राशिष्वारम्भश्चरेषु च विसर्जनम् ॥५२॥

---

१. कोषोत्थर–घ० ।

अस्त्रसंहरणं कुर्यादुभयात्मसु देशिकः ।
कृष्णपक्षेऽनलेनास्त्रं विसृजेच्छशिना पुनः ॥५३॥

शुक्लपक्षे क्रमादस्त्रं पुनरात्मनि संहरेत् ।
भानुना मोक्षसंहारौ कुर्यात् पक्षद्वये सुधीः ॥५४॥

पश्चिमाभिमुखो भूत्वा कर्म सर्वत्र साधयेत् ।
नक्षत्रवृक्षसकलान् साध्याख्यान् कर्मसंयुतान् ॥५५॥

तत्तन्मन्त्राक्षरोपेतान् मन्त्री मन्त्रार्णसंख्यया ।
जुहुयादेधिते वह्नौ मारयेद्रिपुमात्मनः ॥५६॥

कृष्णाष्टमीं समारभ्य यावत् कृष्णा चतुर्दशी ।
धुस्तूरविषवृक्षाख्यभूरुहोत्थान् समिद्वरान् ॥५७॥

राजितैलेन संलिप्तान् पृथक् सप्तसहस्रकम् ।
जुहुयात् संयतो भूत्वा रिपुर्यमपुरं व्रजेत् ॥५८॥

सप्तरात्रं प्रजुहुयात् सिद्धार्थस्नेहलोलितैः ।
आर्द्रवस्त्रो वृष्टिकाले मरिचैर्मधुनाऽमुना ॥५९॥

निगृह्यते ज्वरेणारिः प्रलयाग्निसमेन सः ।
तालपत्रे समालिख्य शत्रुनाम यथाविधि ॥६०॥

आग्नेयास्त्रेण संवेष्ट्य कुण्डमध्ये निखन्य तत् ।
जुहुयान्मरिचैः क्रुद्धो ज्वराक्रान्तः स जायते ॥६१॥

तदादाय क्षिपेत्तोये शीतले स वशो भवेत् ।
पिष्ट्वाऽपामार्गबीजानि मरिचं मधुसंयुतम् ॥६२॥

अत्युष्णलवणे तोये निःक्षिप्य क्वथयेत्ततः ।
ऋक्षवृक्षप्रतिकृतेर्हृदये वदने नसि ॥६३॥

---

१. मधूक—क० ।

किञ्चित्किञ्चित् क्षिपेत्तोयं दर्व्या कारस्करोत्थया ।
आग्नेयमुच्चरेद् मन्त्रं सोऽचिरात् ज्वरितो भवेत् ॥६४॥

क्वथितेऽम्भसि तां क्षिप्त्वा हन्यात् शत्रुमयत्नतः ।
तीक्ष्णस्नेहेन संल्लिप्तां शत्रोः प्रतिकृतिं निशि ॥६५॥

तापयेदेधिते वह्नौ प्रतिलोमं मनुं जपन् ।
ज्वरेण बाध्यते सद्यो होमादस्य मृतिर्भवेद् ॥६६॥

सामुद्रे लवणे[1] हिङ्गुविषजीरकलोडिते ।
क्वथिते पुत्तलीं साध्य नक्षत्रतरुनिर्मिताम् ॥६७॥

अधोवक्त्रां विनिक्षिप्य यष्टया विषतरूत्थया ।
तच्छिरस्ताडनं कुर्याद् जपेदस्त्रं विलोमतः ॥६८॥

सप्ताहान्मरणं याति शत्रुर्ज्वरविमोहितः ।
आदित्यरथनागेन्द्रग्रस्तीकृतविषाहतम् ॥६९॥

नग्नं तैलेन लिप्ताङ्गं दग्धं भानुमरीचिभिः ।
अधोमुखं निजरिपुं ध्यात्वा क्वाथितवारिणा ॥७०॥

तर्पयेद् भानुमालोक्य शत्रुर्मृत्युप्रियो भवेत् ।
बिभ्रन्तीं मुसलं शूलं ध्यायेत् कालघनप्रभाम् ॥७१॥

कार्पासबीजैर्निम्बस्य पत्रैर्मेषीघृतप्लुतैः ।
हुत्वा विद्वेषयेत् शत्रून् मन्त्रेणानेन देशिकः ॥७२॥

बिभ्राणां तर्जनीं शूलं ध्यात्वा देवीं भयङ्करीम् ।
महिषीघृतसंयुक्तैः पल्लवैर्विषवृक्षजैः ॥७३॥

हुत्वा रिपोः क्षणात् सेनामुच्चाटयति मन्त्रवित् ।
ध्यात्वा देवीं पुरा प्रोक्तां चतुर्भिर्मरिचादिभिः[2] ॥७४॥

---

१. सलिले—घ० ।
२. चतुर्भिर्मरिचान्वितैः—क० घ० ।

अजारुधिरसंसिक्तैः जुहुयाद् दिवसत्रयम् ।
रिपोरुच्चाटनं कुर्यात् सेनाया[1] नात्र संशयः ॥७५॥

अग्निशूलधरां दुर्गां ज्वलन्तीं प्रलयाग्निवत् ।
ध्यात्वा सर्षपतैलाक्तैर्बीजैर्धुस्तूरसम्भवैः ॥७६॥

हुत्वा विमोहयेत् शत्रून् मरिचैश्च ससर्षपैः ।
कालाञ्जननिभां दुर्गां शूलखड्गधरां स्मरेत् ॥७७॥

नक्षत्रवृक्षसंभूतैर्व्रणकृत्स्नेहसंप्लुतैः ।
समिद्वरैः प्रजुहुयात् हन्यान्मासेन वैरिणम् ॥७८॥
सिंहाधिरूढां धावन्तीं धावमानं रिपुं प्रति ।
शरान् कार्मुकनिर्मुक्तान् वह्निज्वालामुखाकुलान् ॥७९॥

मुञ्चन्तीं संस्मरन् दुर्गां तर्पयेदुष्णवारिणा ।
भानुबिम्बं समालोक्य रिपोरुच्चाटनं भवेत् ॥८०॥

स्पृशेच्च हृदयं मन्त्री तथा रक्षार्थमात्मनः ।
अतिदुर्गामयोमुष्टिं गदाहस्तां विचिन्तयेत् ॥८१॥

विद्युद्दामसमानाभां महिषीघृतसंप्लुतैः ।
पुलाकैर्जुहुयाद् निम्बविभीतकसमिद्वरैः ॥८२॥

कोद्रवैरथवा शत्रोः सेनायाः स्तम्भनं भवेत् ।
आत्तपाशाङ्कुशां रक्तां गालिदुर्गामनुं स्मरेत् ।
लोणैः समधुरैः साध्यवृक्षकाष्ठैधितेऽनले ॥८३॥

जुहुयात् निशि सप्ताहान्मन्त्रविद् वशयेन्नृपान्[2] ।
पाशाङ्कुशधरां रक्तां विश्वदुर्गां विचिन्तयेत् ॥८४॥
कलिनीकुसुमैः फुल्लैश्चन्दनाम्भःसमुक्षितैः ।
जुहुयान्निशि यो मन्त्री तस्य विश्वं वशं भवेत् ॥८५॥

---

१. हेलया–क० । २. द्वेष–ख० ।

शरच्चन्द्रनिभां देवीं परमानन्दकारिणीम्[1] ।
पाशाङ्कुशधरां ध्यात्वा सिन्धुदुर्गां समिद्वरैः ॥८६॥
वैतसैर्मधुना सिक्तैर्जुहुयाद् दृष्टिसिद्धये ।
कपालं त्रिशिखं पाशमङ्कुशं विभ्रतीं करैः ॥८७॥
जवाकुसुमसंकाशामग्निदुर्गां विचिन्तयेत् ।
हुत्वा लवणपुत्तल्या मधुरत्रययुक्तया ॥८८॥
एवं ध्यायेद् वाञ्छितार्थान्मन्त्रविन्नात्र संशयः ।
अतिदुर्गाणि इत्याद्या यदर्णास्त्रिधुरीरिताः ॥८९॥
दुर्गार्णान्ताथ गाल्याद्या गालिदुर्गा समीरिता ।
विन्द्वाद्यान्यक्षरान्ता[2] सा विश्वदुर्गा प्रकीर्तिता ॥९०॥
सिन्ध्वाद्या सा वकारान्ता सिन्धुदुर्गा निगद्यते ।
तां तामग्न्यादिकामेनामग्निदुर्गां विदुर्बुधाः ॥९१॥
अङ्गने स्थण्डिलं कृत्वा सुगन्धिकुसुमादिभिः ।
देवीमभ्यर्चयेन्नित्यं प्रागुक्तेनैव वर्त्मना ॥९२॥
आहरेद् रात्रिषु बलिं चरुणा सर्वसिद्धये[3] ।
कृत्यारोगभयद्रोहभूतारीन् नाशयेदयम् ॥९३॥
यथावदग्निमाराध्य शस्तैः[4] पुष्पैर्मनोरमैः ।
स्थित्वा तस्याग्रतो मन्त्री जपेन्मन्त्रमनन्यधीः ॥९४॥
जपोऽयं सर्वसिद्ध्यै स्यान्नात्र कार्या विचारणा ।
लवणैर्मधुना सिक्तैर्जुहुयात् पश्चिमामुखः ॥९५॥
मन्त्रार्णसंख्यया मन्त्री रिपुमेव वशं नयेत् ।
शालीन् प्रक्षाल्य संशोध्य शुद्धान् कुर्वीत तण्डुलान् ॥९६॥

---

१. विगलत्परमामृताम्–ख०घ० । २. विश्वाद्या–क०
३. सिद्धिदम्–ख० । ४. गन्धैः–क० ।

जपित्वा पञ्चगव्येन संस्कृते हव्यवाहने ।
चरुं पचेत् जपेद् मन्त्रमवतार्य पुनः सुधीः ॥९७॥

अर्चयित्वा विषहरीं देवीमग्नौ यथा पुरा ।
जुहुयात् चरुणानेन साज्येनाष्टसहस्रकम् ॥९८॥

पात्रे संपातनं कुर्वन् साध्यं तत् प्राशयेत् पुनः ।
शिष्टं तन्निखनेद् द्वारि संपातं प्राङ्गणान्तरे ॥९९॥

कृत्यारोगा विनश्यन्ति सह भूतग्रहामयैः ।
परैरुत्पादिता कृत्या पुनस्तानेव भक्षयेत् ॥१००॥

व्रीहिभिर्हविषा क्षीरैः पयोवृक्षसमिद्वरैः ।
आज्यैर्मधुत्रयोपेतैरेतैर्दशशतं पृथक् ॥१०१॥

जुहुयात् सम्पदां भूमिः साधको भवति ध्रुवम् ।
भास्करे मेषराशिस्थे मन्त्रज्ञोऽनुगुणे दिने ॥१०२॥

नद्यां सागरगामिन्यां सततं पुष्कलाम्भसि ।
उद्धृत्यादाय सिकताः संशोध्य परिशोधयेत् ॥१०३॥

न्यस्य ताः पञ्चगव्येषु संस्कृते हव्यवाहने ।
भर्जयेन्मनुना सिद्ध्यै दर्व्या ब्रह्मतरूत्थया ॥१०४॥

सिंहमीनधनुःस्थेऽर्के कृष्णपक्षेऽष्टमीतिथौ ।
विशाखाकृत्तिकामूलाहस्तोत्तरमघासु च ॥१०५॥

रोहिण्यां श्रवणे वारौ मन्दवाक्पतिदैवतौ ।
विहायाऽन्येषु कुर्वीत सिकतास्थापनं सुधीः ॥१०६॥

गृहग्रामादिराष्ट्राणां रक्षार्थं कथिताः शुभाः ।
प्रस्थाढकघटोन्मानान्मध्यादिष्ववटेष्वथ ॥१०७॥

नवसु प्रक्षिपेज्जप्त्वा तेषु संपूजयेत् क्रमात् ।
मध्यादिदेवीमन्त्राणि कपालान्तानि देशिकः ॥१०८॥

चक्रं शङ्खमसिं खेटं बाणं चापं त्रिशूलकम् ।
कपालं स्वस्वमन्त्रेण संपूज्यान्ते बलिं हरेत् ॥१०९॥

नक्षत्रग्रहराशीनां लोकेशानां बलिं हरेत् ।
विहिता यत्र रक्षेयं वर्द्धन्ते तत्र संपदः ॥११०॥

क्षुद्रग्रहमहारोगाश्चौरभूतसरीसृपाः ।
अमुना विलयं यान्ति विधिना नात्र संशयः ॥१११॥

सिकतानां विशुद्धानां विकारकुडवं सुधीः ।
पञ्चगव्ययुतं पात्रे ब्रह्मवृक्षविनिर्मिते ॥११२॥

निक्षिप्य विधिना यत्र स्थापयेत्तत्र सम्पदः ।
दिने दिने प्रवर्द्धन्ते कालवृष्ट्यादिभिः सह ॥११३॥

महोत्पाता विनश्यन्ति कृत्याद्रोहमहाग्रहाः ।
पञ्चगव्याशनं कुर्यात् स्थापनं विधिनाऽमुना ॥११४॥

गोमूत्रं प्रस्थमानं स्याद् गोमयं च तदर्धकम् ।
आज्यात् सप्तगुणं क्षीरं गोमूत्रात् त्रिगुणं दधि ॥११५॥

गोमूत्रेण समं सर्पिः सर्वं वा समसुच्यते ।
गावः स्युः कपिलश्वेतहिमधूमारुणप्रभाः ॥११६॥

अभावे गदिताः सर्वाः समं वा कपिलोद्भवम् ।
एकोनपञ्चाशत् कोष्ठे फलके ब्रह्मशाखिनः ॥११७॥

विहाय कोणकोष्ठानि शक्त्याद्यं जातवेदसम् ।
लिखित्वा मध्यकोष्ठेषु पूजयेत् तत्र देवताः ॥११८॥

कृत्वा होमं समं पातं निखनेत्तु यथा पुरा ।
दद्याद्बलिं यथापूर्वं अस्य पूर्वोदितं फलम् ॥११९॥

मध्ये मायाष्टकोष्ठेषु पादानष्टौ कृत्वा मातृकार्णैः परीतम् ।
भूबिम्बस्थं सर्वभूतामयघ्नं रक्षायुःश्रीकीर्तिदं यन्त्रमेतत् ॥१२०॥

आग्नेयास्त्रस्य जानाति विसर्गादानकर्मणी ।
यः पुमान् गुरुणा शिष्टस्तस्याधीनं जगत्त्रयम् ॥१२१॥
जातप्रज्ञोऽथवा राजा द्रविणोऽग्राति वा तथा ।
एवं शब्दस्य शक्तिः स्यात् जातवेदास्तथा स्मृतः ॥१२२॥
यजामहे स्वयं देवं सोमेन भुवनेश्वरम् ।
वह्निरूपेण तिष्ठन्तं परमात्मानमव्ययम् ॥१२३॥
अराते द्रविणं चापि विद्यां चापि हरप्रिये ।
पुत्रादक्षादिकान् सर्वान् सम्यग्ज्ञानं तथैव च ॥१२४॥
दत्त्वा चतुर्हरिर्देवः सर्वलोकपितामहः ।
यः सम्यक् सर्वलोकानां शत्रुत्वं सम्यगाचरेत् ॥१२५॥
चित्रभानुर्महादेवः क्षुत्पिपासादिकं मम ।
व्यपोहतु महादेवः पुरुषार्थविबोधनः ॥१२६॥
नौर्यथा दुस्तरं सिन्धुं तरत्येव न संशयः ।
पुरस्क्रियायुतं चास्य दशांशं घृतहोमतः ॥१२७॥
अश्वत्थवृक्षं संस्पृश्य शनैश्चरदिने जपेत् ।
इष्टसिद्धिमवाप्नोति भयं चाशु विनश्यति ॥१२८॥
यः सहस्रं जपेन्नित्यं ब्रह्माप्नोति न संशयः ।
सर्वदुर्गेषु यो नित्यं स्मरेन्मन्त्रमतन्द्रितः ॥१२९॥
दुर्गाणि निस्तरेत् सद्यो नात्र कार्या विचारणा ।
धन्यं यशस्यमायुष्यमारोग्यं पुष्टिवर्द्धनम् ॥१३०॥
किमत्र बहुनोक्तेन पुरुषार्थचतुष्टयम् ।
दुर्गागारं समाश्रित्य साधयन्ति मनीषिणः ॥१३१॥
सावित्री सहिता दुर्गा महासिद्धिकरी स्मृता ।
पूजिता विधिना सा च सर्वमिष्टं प्रयच्छति ॥१३२॥

---

१. विरोधिनः—ख० घ० । २. चण्ड—ख०, चापि—ग० । ३. नित्य—ख० घ० ।
४. मनस्विनः—ख० घ० । ५. सर्वलोकस्य—ख० घ० ।

अपूजिता वै सर्वेषामनिष्टमपि दास्यति ।
अपामार्गशतं हुत्वा गोष्ठे शान्तिकरी भवेत् ॥१३३॥
सर्वानभिमुखी कर्तुमधुना लवणेन च ।
दुर्गमार्गे भये द्यूते व्यवहारे जले रणे ॥१३४॥
बन्धने व्यसने राज्ञो मन्त्रं तु मनसा जपेत् ।
जपमात्रेण विप्राणां सर्वं संसाधयेद् यथा ॥१३५॥
राजन्यवैश्ययोर्नित्यं जपहोमाभिषेचनैः ।
यमुद्दिश्य जपेद्विप्रस्तत्तदाप्नोत्य[1]संशयम् ॥१३६॥
आदित्यमण्डलं पश्यन् जानुदघ्ने जले स्थितः ।
यावदस्तमनं विप्रः सर्वान् कामानवाप्नुयात् ॥१३७॥
आपदं निस्तरेद्विप्र आत्मनो वा परस्य वा ।
आदित्यमण्डलासीनां दुर्गां दुर्गहरां शिवाम् ॥१३८॥
शङ्खचक्रधरां सौम्यां वरदाभयधारिणीम् ।
चतुर्भुजां त्रिनेत्रां च रक्ताभां जातवेदसीम् ॥१३९॥
चिन्तयित्वा जगद्धात्रीं पश्यन्नादित्यमण्डलम् ।
[3]आस्यदघ्ने जले स्थित्वा जपेत्तद्गतमानसः ॥१४०॥
अष्टोत्तरसहस्रं तु सर्वान् कामानवाप्नुयात् ।
महद्भिः पातकैः सर्वैः पातकैरुपपातकैः ॥१४१॥
पापैश्च मुच्यते घोरैस्तथा रोगभयादिभिः ।
जलस्य मण्डले मन्त्री जुहुयादनया जलम् ॥१४२॥
सूर्यवारं समारभ्य शतमष्टोत्तरं बुधः ।
सुवर्णं लभते मन्त्री सद्यो रत्नान् स्वरूपतः ॥१४३॥
नाभिदघ्ने जले स्थित्वा मण्डलाभिमुखः स्वयम् ।
देव्याऽभिषिच्यमानोऽहं यत्नैरपि विचिन्तयेत् ॥१४४॥

---

१. ति नित्यशः–घ० । २. दिव्यां–घ० । ३. 'आस्यादघ्ने···कौमोदकीं तथा' नास्ति–ख० ।

अभिषिञ्चेत् स्वकं देहं जलैर्मन्त्राभिमन्त्रितैः ।
आयुरारोग्यमैश्वर्यं शत्रुनाशं जलं च यम् ॥१४५॥

सौभाग्यमचलां लक्ष्मीं लभते नात्र संशयः ।
प्रभूतैरिन्धनैरग्निं स्थाप्य प्रज्वाल्य वाग्यतः ॥१४६॥

अष्टदिक्षु च मध्ये च गन्धपुष्पादिभिर्यजेत् ।
प्राच्यामग्निमहादुर्गां मन्त्राणामधिदेवताम् ॥१४७॥

अभ्यर्च्य गन्धपुष्पाद्यैर्मनसा वाथ वै शिवाम् ।
शङ्खं चक्रं धनुश्चापं दधतीं मृत्युतर्जनीम् ॥१४८॥

वामे चक्रमसिं चेषुं सन्नद्धां विविधायुधैः ।
पवित्रां सिंहाधिरूढां गायत्रीं कुमारीं जपेत् ॥१४९॥

ध्यायेदीप्सितसिद्धिदां त्रिनयनां सिंहाधिरूढां शिवाम् ।
ध्यायन् जपेदष्टोत्तरशतं
प्रक्षिपेत् काष्ठशलाकां ज्वलितेऽग्नौ मुहुर्मुहुः ।
सिद्ध्यन्ति सर्वकार्याणि विनश्यन्ति भयानि च ॥१५०॥

किमत्र बहुनोक्तेन राज्यं शत्रुहतं लभेत् ।
आयुरारोग्यकामस्तु समाधाय हुताशनम् ॥१५१॥

प्राच्यामग्नेरधिष्ठात्रीं दुर्गां गन्धादिनाऽर्चयेत् ।
हुनेद् दुर्गां पार्षदाय तथैकैकाहुतिं क्रमात् ॥१५२॥

पार्श्वयोश्च तथा दुर्गां पार्षदेभ्यस्ततः क्रमात् ।
तिलेन जुहुयादाज्यं व्याहृतिभिस्ततः परम् ॥१५३॥

क्रूरग्रहविनाशाय गोमूत्राक्तैः सकण्टकैः ।
तदग्ने जुहुयान्मन्त्री सर्वग्रहं विनश्यति ॥१५४॥

अश्वत्थः प्रथमो ज्ञेयो द्वितीयो वट उच्यते ।
उदुम्बरस्तथा प्लक्षो वृक्षाणां क्रम ईरितः ॥१५५॥

धान्यहोमाद् भवेद्धान्यं पयसा पशुमान् भवेत् ।
विल्वैर्लक्ष्मीमवाप्नोति श्रीपुष्पैश्च तथैव च ॥१७९॥
मधूकाक्तैश्च तत्पत्रैर्विश्वमात्मवशं नयेत् ।
आदित्यमण्डलादग्रे यः कृत्वा भुवि वैरिणः ॥१८०॥
ज्वालानिर्दग्धमानस्तु अधोवदनमारुतम् ।
जानुदघ्ने जले तिष्ठन् ध्यायन् वह्निमयं जलम् ॥१८१॥
अतिदुर्गेति मन्त्रेण गृहीत्वाऽञ्जलिना जलम् ।
रिपुदेहे विनिःक्षिप्य सहस्रं क्रोधसंयुतम् ॥१८२॥
प्रज्वाल्य हस्तैर्हृदयं शतपर्ण्यादिभिः स्पृशेत् ।
प्रोक्षणेन जलस्यैव वैरिणः कारयेद् वधम् ॥१८३॥
आदित्यमण्डलाधस्तादग्निर्नो[2]पोविदर्भितम् ।
तयोर्मध्यगतः शत्रुर्ज्वालामालाकुलावृतः ॥
ध्यातः शत्रुर्विनश्येत नात्र कार्या विचारणा ॥१८४॥

[3]इति जातवेदाद्या अष्टौ दुर्गाः ।

अथो दिनास्त्रं कृत्यास्त्रं वक्ष्ये शत्रुविमर्दनम् ।
अतिदुर्गाभिमनुं प्राहुर्दिनास्त्रं मन्त्रवित्तमाः ॥१८५॥
प्रतिलोममिमं मन्त्रं कृत्यास्त्रं परिचक्षते ।
दिनास्त्रस्य षडङ्गानि प्रतिलोमादितान् विदुः ॥१८६॥
भानुविम्बगतं शत्रुमधोवक्त्रं विषाहतम् ।
मूलादुत्थितया ग्रस्तं कुण्डल्या भावयन् सुधीः ॥१८७॥
मूलाधारे क्षिपेत् सद्यः प्रस्फुरत्कालपावके ।
दिनत्रयाज्ज्वराक्रान्तो रिपुः प्राणान् विमुञ्चति ॥१८८॥
दिनास्त्रेण प्रविद्धाङ्गं स्वाधिष्ठानगतं रिपुम् ।
पञ्चवायुसमिद्धेन वह्निना दग्धविग्रहम् ॥१८९॥
ध्यायन् मनुं जपेत् सद्यः स भवेद् यमवल्लभः ।

---

१. शतं पर्य्यति संस्पृ–क०, शतं वर्वदिति स्पृ०–ख० । २. रापो विजृम्भितम्–ख० घ० ।
३. इति फेत्कारिणीतन्त्रे जातवेदाद्यष्टौदुर्गापटलः–घ० ।

मणिपूरगतं शत्रुमग्निना दग्धविग्रहम् ॥१९०॥
ध्यायन् दिनास्त्रं प्रजपेत् स मृत्युवशतां व्रजेत् ।
अनाहताहितः शत्रुर्निर्दग्धो [1]मन्त्रवह्निना ॥१९१॥

पाशेन बद्ध्वा शीघ्रेण नीयते यमकिङ्करैः ।
विशुद्धस्थानगो वैरी दिनबाणेन पीडितः ॥१९२॥

अधोमुखः स्मृतस्तूर्णं परायुः स्याद् दिनत्रयात् ।
आज्ञायां निहतं शत्रुं दहेज्ज्वालाग्निना धिया ॥१९३॥

पुत्रमित्रकलत्रादीन् हित्वा मृत्युमुपाश्रयेत् ।
नाभिमात्रोदके स्थित्वा ध्यायन् बिम्बं दिनेशितुः ॥१९४॥

वैरिणं दग्धसर्वाङ्गं मन्त्रमष्टोत्तरं शतम् ।
जपेत् सप्तदिनादर्वाक् यमलोकं स गच्छति ॥१९५॥

रवि[2]वारं समारभ्य सप्ताहं प्रजपेन्मनुम् ।
सूर्योदयं समारभ्य यावदस्तमयो भवेत् ॥१९६॥

सन्निपातज्वराविष्टो यमग्रस्तो भवेदरिः ।
स्थित्वा दुर्गालये मन्त्री त्रिरात्रं वर्जिताशनः ॥१९७॥

दिनबाणेन विद्धाङ्गं वैरिणं परिचिन्तयन् ।
जपेन्मनुमिमं शत्रुर्ज्वरितो मरणं व्रजेत् ॥१९८॥

स्पृष्ट्वा दुर्गां जपेन्मन्त्रं [3]मनसा त्रिदिनं स्मरन् ।
शूलप्रोतं निजरिपुं दिनास्त्रेण प्रपीडितम् ॥१९९॥
ज्वरेण महताविष्टो जायतेऽसौ यमातिथिः ।
रविमण्डलगं शत्रुं दष्टं तद्रथपन्नगैः ॥२००॥

---

१. रुद्र–ख० । २. आरवारं समासाद्य सप्ताहं प्रजयेन्मनुम्–ख० घ० ।
३. अनश्नन्–ख० घ० ।

चतुर्णां क्षीरवृक्षाणां सन्निधौ जुहुयात् क्रमात् ।
मध्वक्तैस्तु तथा सर्वैर्वश्याः स्युर्मरणान्तिकम् ॥१५६॥

पुरञ्जनपदं राष्ट्रं तद्वदेव वशं नयेत् ।
तथा वर्णाश्च चत्वारो वश्याः स्युश्च यथाक्रमम् ॥१५७॥

पलाशवृक्षं संस्पृश्य मन्त्रसारैस्तु पञ्चभिः ।
छित्त्वा परशुना भित्त्वा पञ्चधा तं क्रमेण तु ॥१५८॥

प्राच्यां प्राग्दक्षिणांशश्च प्रतीच्यंशस्तथैव च ।
उदीच्यंशश्च सन्ध्यादौ मासपक्षदिनं ततः ॥१५९॥

शङ्खं चक्रं च जलजं ताश्च कौमोदकीं तथा ।
पञ्चगव्येन संगृह्य स्वैस्त्रैर्मन्त्रैर्विधानतः ॥१६०॥

तत्रावाह्य विशोध्य त्वां समाराध्य यथाक्रमम् ।
एवमेव क्रमेणैव मन्त्रयेच्च शतं शतम् ॥१६१॥

समापयेच्चतुःशङ्खं[1] शङ्खादिषु यथाक्रमम् ।
अभ्यर्च्य देवदेवेशीं मनुनानेन भक्तितः ॥१६२॥

स्मृतं नैव जपेन्मन्त्रमभिमन्त्र्य च भक्तितः ।
अग्रहारपुरक्षेत्रगृहवप्रादिषु क्रमात् ॥१६३॥

चतुर्दिक्षु च मध्ये च खनित्वा हस्तमात्रकम् ।
पञ्चगव्यं विनिक्षिप्य तथा शङ्खादि विन्यसेत् ॥१६४॥
स्वे स्वे स्थाने समभ्यर्च्य पूजयित्वा दलान्यपि[2] ।
ध्यायेत् समन्ततो दुर्गां सिंहारूढां यथाविधि ॥१६५॥
यस्यैवं कुरुते राज्ये स देशो निरुपद्रवः ।
धनधान्यसमृद्धश्च सदा निष्कण्टको भवेत् ॥१६६॥

---

१. शतम्–क० ।     २. न्यथ–घ० ।

पञ्चवक्त्रमयं नास्ति न कथञ्चन सम्भवेत् ।
पञ्चशुक्लोत्पलान्यानि गृहीत्वा पूर्ववत् क्रमात् ॥१६७॥
एवमाराध्यतां मन्त्री निखनेत् सर्वशान्तये ।
अथवा पूर्ववन्मन्त्री पञ्चगव्येन मन्त्रितम् ॥१६८॥
महादिदिक्षु मध्ये च निखनेत् सर्वशान्तये ।
एवं च पञ्चदुर्गाया विनियोग उदीरितः ॥१६९॥
शतपत्रसहस्रं तु हुत्वाऽऽज्याक्तं बलिं हरेत् ।
सुवर्णं लभते तद्वदुत्पलैः पुष्टिमाप्नुयात् ॥१७०॥
वासांसि चाप्नुयान्मन्त्री पुष्पवर्णानुरूपतः ।
मध्वाज्याक्तैः सितैः पुष्पैः सर्वान् कामानवाप्नुयात् ॥१७१॥
प्रणम्य[1] पुनराज्याक्तमुपतिष्ठेद् दिवाकरम् ।
जप्त्वाऽयुतं सहस्रं वा मोक्षं गच्छेन्न संशयः ॥१७२॥
ब्रह्मवर्चसकामस्तु पलाशसमिधो हुनेत् ।
न्यग्रोधसमिधो हुत्वा धनधान्यमवाप्नुयात् ॥१७३॥
उदुम्बरसमिद्धोमाद्धनवानन्नवान् भवेत् ।
अश्वत्थसमिधो हुत्वा कार्यमाशु च साधयेत् ॥१७४॥
संमोहोच्चाटनं कुर्वन् रात्रौ नग्नस्तु वाग्यतः ।
दुर्गास्थानेषु नवसु दुर्गाबीजेन शर्करान् ॥१७५॥
यावदेवं रिपुं कृत्वा रिपुमध्ये विनिक्षिपेत् ।
ततो यास्यन्ति सहसा भीताः सद्यः परस्परम् ॥१७६॥
सावित्र्या संपुटीकृत्य दुर्गाबीजं समं न्यसेत् ।
इष्टसिद्धिर्भवत्याशु नात्र कार्या विचारणा ॥१७७॥
आत्मनो वा परस्यापि रोगादिपरिपीडितः ।
समारभ्य जपेन्मन्त्री सद्यः सद्यो विमुच्यते ॥१७८॥

---

१. प्रयाम्य त्व नवाध्यानं–ख०, प्रयास्य पुनवाध्यानं–घ० ।

विषाग्निदग्धसर्वाङ्गं ध्यायन्नुष्णेन वारिणा ।
तर्पयेद् दिनत्रयेण स्यादसौ यमवल्लभः ॥२०१॥
रविबिम्बादागतया ज्वालया ग्रस्तविग्रहम् ।
रिपुं ध्यात्वा जपेन्मन्त्रं स क्रीडति यमान्तिके ॥२०२॥
ग्रहयुक्तार्कबिम्बस्थं विद्धं मन्त्रमयैः शरैः ।
प्रतिपद्य निजं शत्रुं [1]जपेन्मन्त्रवित्तमः ॥२०३॥
रिपुं नयति शीघ्रेण यमदूतो यमालयम् ।
प्रलयानलसंकाशां कालरात्रिमिवापराम् ॥२०४॥
शूलपाशधरां घोरां सिंहस्कन्धनिषेदुषीम् ।
सवितुर्मण्डलान्तःस्थां रक्तनेत्रत्रयोद्धतैः ॥२०५॥
विस्फुलिङ्गैर्निर्दहन्तीं रिपुमाकुलविग्रहम् ।
स्पष्टदंष्ट्राधरां नृत्यद्भ्रुकुटीकुटिलाननाम् ॥२०६॥
तर्जयन्तीं निजं शत्रुं तर्जन्या भीमरूपया ।
दंष्ट्रामयूखज्वालेन द्योतयन्तीं दिग[2]न्तरम् ॥२०७॥
शूलेन वैरिणो वक्षो दारयन्तीं भयङ्करीम् ।
जपेद् दिनत्रयं मन्त्री मारयेद् रिपुमात्मनः ॥२०८॥
अस्त्रमन्त्रकृतन्यासः प्रलयाग्निसमप्रभाम् ।
रक्तवस्त्रधरां क्रूरां रक्तनेत्रत्रयान्विताम् ॥२०९॥
सिंहारूढां धावमानां धावमानं रिपुं प्रति ।
खड्गेन तच्छिरश्छित्त्वा क्षणाद् व्योमतलं गताम् ॥२१०॥
ध्यात्वा दुर्गा[3] जपेन्मत्री त्रिदिनं वर्जितासनः ।
अनेनैव विधानेन रिपुर्मृत्युप्रियो भवेत् ॥२११॥

---

१. जपेदयुतं मन्त्रवित्–घ०, प्रजपेदप्सु मन्त्रवित्–ख० ।

२. दिगम्बरीम्–क० ।

३. दुर्गां–ख० ।

कर्माण्येतानि कुर्वीत दिवसे न तु रात्रिषु ।
पश्चिमामुखलिङ्गस्य सजीवं महिषं पुरः ॥२१२॥

निधाय तस्य शिरसि कुण्डं कृत्वा त्रिकोणकम् ।
तस्मिन् समेधिते वह्नौ यथावद् देशिकोत्तमः ॥२१३॥

सत्रिकोणान् समन्त्रार्णान् साध्यनामसमन्वितान् ।
अजारक्तेन संसिक्तान् कारस्करसमिद्वरान् ॥२१४॥

सहस्रं जुहुयाद् देवीं ध्यात्वा सवितृमण्डले ।
प्रलयाग्निसमां घोरां द्वात्रिंशद्भुजशोभिताम् ॥२१५॥

[1]उद्यदायुधसंदीप्तां नृत्यन्तीं सिंहमस्तके ।
महादंष्ट्रां महाभीमां ज्वलत्केशीं नदन्मुखीम् ॥२१६॥

रक्तार्द्रमांसवदनां घूर्णितोग्रत्रिलोचनाम् ।
अनेन विधिना शत्रुर्महा[2]ज्वरप्रपीडितः ॥२१७॥

विमुञ्चति निजं देहं पुत्रमित्रादिभिः सह ।
[3]ऊर्ध्वमुष्णाम्भसा मन्त्री लम्बयित्वा भुजङ्गमम् ॥२१८॥

भानुबिम्बगतां दुर्गां सहस्रादित्यसन्निभाम् ।
सहस्रपाणिचरणां सहस्राक्षिशिरोमुखीम् ॥२१९॥

सहस्रनागबद्धाङ्गीं त्रासयन्तीं जगत्त्रयम् ।
ध्यायेन्मूलेन सर्पास्ये तर्पयेदुष्णवारिणा ॥२२०॥

संयुतः कालपाशेन वैरी मुञ्चेत् सुजीवितम् ।
मध्याह्नार्कायुतप्रख्यां नदन्तीं नरसिंहवत् ॥२२१॥

घोरसिंहसमासीनां महाभीषणदर्शनाम् ।
शूलप्रोताहितां ध्यायन् जपेन्मन्त्रमनन्यधीः ॥२२२॥

---

१. उद्यदादित्यसंयुक्ताम्–क० ख० ।

२. महाकुलनिपीडितः–क० ।

३. ऊर्ध्वमुष्टचमसौ–क० ।

तर्पयेदुष्णतोयेन सर्पवक्त्रे दिनत्रयम् ।
यमस्य भवनं गच्छेदरातिर्नात्र संशयः ॥२२३॥

ऋक्षवृक्षप्रतिकृतिं प्रतिष्ठितसमीरणाम् ।
उष्णोदके विनिःक्षिप्य विषाढ्यो विधिना ततः ॥२२४॥

अर्केन्द्वनलसङ्काशां खड्गखेटकधारिणीम् ।
नयनत्रयनिर्गच्छद्विस्फुलिङ्गशतार्गलाम्[1] ॥२२५॥

सिंहस्थां सर्पभूषाढ्यां त्रैलोक्यभयदायिनीम् ।
खड्गकृत्याहितां ध्यायन् प्रजपेदयुतं मनुम् ॥२२६॥

विधानेनामुना शत्रुर्ग्रस्तो भवति मृत्युना ।
प्रकल्प्य दुर्गायतने त्रिकोणं कुण्डमुत्तमम् ॥२२७॥

तत्र संज्वलिते वह्नौ [2]महिषीशकृताकृताम् ।
पुत्तलीमजरक्ताक्तां प्रतिष्ठितसमीरणाम् ॥२२८॥

छित्वा छित्वा च जुहुयादजरक्तान्वितां निशि ।
ध्यात्वा दुर्गां प्रनृत्यन्तीं महिषोरःस्थलान्तरे ॥२२९॥

शूलेन महिषस्याङ्गं भिन्दन्तीं घोरदर्शनाम् ।
अट्टहासैरजस्रोत्थैर्भीषितासुरसैनिकाम् ॥२३०॥

प्रलयानलसङ्काशां ज्वलन्नेत्रत्रयान्विताम् ।
संदंष्ट्राधरसंभिन्नां दंष्ट्राभीममुखाम्बुजाम् ॥२३१॥

खड्गखेटकयुक्ताभिः कन्याभिश्च समन्विताम् ।
अनेन विधिना शत्रुः प्रयाति यमसन्निधिम् ॥२३२॥

दिनास्त्रमेतत् कथितं शत्रुनिग्रहकारकम् ।
[3]सर्वान् कृत्योदितान् कुर्यात् प्रयोगान्मन्त्रवित्तमः ॥२३३॥

---

१. शताकुलाम्—क० ।

२. महिषीहविषान्वितान्—क० ।

३. कृत्यास्त्रे चोदितान् कुर्यात् प्रयोगान् मन्त्रवित्तमः—क० ।

आधाराद्वुत्थितां देवीं कुण्डलीं सर्परूपिणीम् ।
सुषुम्नारन्ध्रमार्गेण यातां व्योमस्थलं ततः ॥२३४॥

मुखेन शत्रुमादाय निवृत्तां स्वगृहं प्रति ।
ज्वलत्कालानलैर्दीप्तां विचिन्त्य प्रजपेन्मनुम् ॥२३५॥

सप्तभिर्वासरैः शत्रुर्मृत्युमाप्नोति मोहितः ।
अङ्गारवारे चिताग्नौ सर्षपस्नेहलोडितम् ॥२३६॥

सिद्धार्थगुडसंयुक्तं जुहुयात् पक्षमाद्दतम् ।
कृत्यास्त्रज्वलया दग्धो रिपुर्यमपुरं व्रजेत् ॥२३७॥

चतुर्दश्यामर्धरात्रे चितास्थिन्यथ साधकः ।
व्रणतैलविलिप्तानि चिताग्नौ जुहुयात्ततः ॥२३८॥

अनेन विधिना शत्रुर्मृत्युमेष्यति कातरः ।
तुषास्थिनिर्मितां शत्रोर्व्रणतैलपरिप्लुताम् ॥२३९॥

प्रतिमां स्थापितप्राणां जुहुयान्निशि साधकः ।
छित्वा छित्वाऽजरक्तेन सप्ताहान्म्रियते रिपुः ॥२४०॥

श्मशानवालुकां स्पृष्ट्वा [1]साक्षतां नियुतं जपेत् ।
विकिरेत्तांस्तडागादौ कृत्यास्त्रक्वाथितं जलम् ॥२४१॥

तदीयपीतमरिचं निहन्ति सकलान् जनान् ।
कृष्णाङ्गारचतुर्दश्यां प्रजप्तैः प्रेतभस्मभिः ॥२४२॥

महिषाज्येन लुलितास्तन्मन्त्राक्षरसंख्यया ।
निर्माय गुटिका एताः सम्यग्जप्तसमीरणाः ॥२४३॥

चितिकाष्ठेधिते वह्नौ जुहुयाद् दृढमानसः ।
चतुर्दशीत्रयादर्वाक् शत्रुर्मृत्युवशो भवेत् ॥२४४॥

---

१. आहुतं–क० ।

श्मशानभस्म सिद्धार्थं पञ्चगव्ये विनिःक्षिपेत् ।
माहिषे संस्मरेद् देवीं कालाग्निसदृशप्रभाम् ॥२४५॥
भर्जयेत् प्रजपेन्मन्त्रं ग्रहकाष्ठैश्चितानले ।
दुर्गागारे प्रजुहुयादनेनायुतमन्त्रवित् ॥२४६॥
पुनरादाय तद्भस्म सेनायां वैरिणः क्षिपेत् ।
सा सेना बहुधा भिन्ना ज्वररोगविमोहिता ॥२४७॥
आयुधानि परित्यज्य युद्धकाले पलायते ।
गेहग्रामादिषु क्षिप्तं कुर्यादुच्चाटनं क्षणात् ॥२४८॥
सप्तवारेषु कुलिके दुर्गाविश्मसु शर्कराः ।
सप्तमाहेन्द्रदिग्वज्रं गृहीत्वा प्रजपेन्मनुम् ॥२४९॥
महिषीपञ्चगव्येषु भर्जयेत्तां यथाविधि ।
भूयो जपित्वा विकिरेद् गेहग्रामपुरेष्विमाः ॥२५०॥
स देशो नश्यति क्षिप्रं दग्धमन्त्रभवाग्निना ।
ब्रह्मदण्डी मर्कटिकां करक्रोशनिकात्रयम् ॥२५१॥
भौमवारेषु कुलिके गृहीत्वा प्रजपेन्मनुम् ।
चतुर्दश्यां रिपोर्गेहे मुसलं प्रक्षिपेन्मनुम् ॥२५२॥
सार्द्धं पुत्रकलत्राद्यैरुत्सादो जायते रिपोः ।
एकैकं वा खनेन्मन्त्री मण्डलात्तत्फलं लभेत् ॥२५३॥
षड्बिन्दुपट्कं पुत्तल्यां निखनेदर्कदलान्वितम्[2] ।
स्पृष्ट्वा तां प्रजपेन्मन्त्रं कृष्णाष्टम्यां निशार्द्धतः ॥२५४॥
शत्रोर्नामसमायुक्तां श्मशाने निखनेदिमाम्[1] ।
प्राणांश्च स रिपुः शीघ्रं विमुञ्चति सबान्धवः ।
कपालफलकान्मन्त्री कृत्वाष्टाक्षरसंख्यकान् ॥२५५॥

---

१. निखनेत्–ख० ।
२. निखनेत् गोलकान्वितम्–ख० ।

संस्पृश्य प्रजपेदस्त्रं प्राणस्थापनपूर्वकम् ।
कृष्णाङ्गारचतुर्दश्यां श्मशाने विषवृक्षके ॥२५६॥

जुहुयादजरक्ताक्तान् कृत्यास्त्रज्ज्वालया हतः ।
रिपुर्यमपुरं गच्छेन्महाज्वरविमोहितः ॥२५७॥

अजरक्तेन सम्पूर्णे कलशे निक्षिपेदमुम् ।
कपालेन पिधायैनं छादयेद् रक्तवाससा ॥२५८॥

पूजयेद् रक्तपुष्पाद्यैः स्पृष्ट्वा तमयुतं जपेत् ।
भौमवारे निशामध्ये कारस्करसमेधिते ॥२५९॥

श्मशानवह्नौ जुहुयाद् गच्छेद् यमपुरं रिपुः ।
साध्यनक्षत्रवृक्षेण कृत्वा कुम्भं प्रपूरयेत् ॥२६०॥

माहिषैः पञ्चगव्यैस्तं विराजं तत्र निक्षिपेत् ।
जपपूजादिकं सर्वं यथापूर्वकमाचरेत् ॥२६१॥

कारस्करभवे वह्नौ कृत्यास्त्रेण समेधिते ।
अयुतं व्रणतैलेन हुत्वान्ते तं घटं पुनः ॥२६२॥

आमस्तकं समुद्धृत्य जपेन्मन्त्रमनन्यधीः ।
जुहुयाद् विधिनानेन त्रिदिनान्म्रियते रिपुः ॥२६३॥

सुन्दरं महिषीपुत्रमेकरात्रमुपोषितम् ।
पाययेन्महिषीसर्पिःप्रस्थं मन्त्रेण मन्त्रितम् ॥२६४॥

कुशैराबद्धसर्वाङ्गं स्थापितः प्राणमञ्जसा ।
कारस्करैधिते वह्नौ व्रणतैलेन मन्त्रवित् ॥२६५॥

होमं कृत्वायुतं मन्त्री जुहुयाद् यतमानसः ।
एकेन दिवसेनारिर्गच्छेद् यमपुरं ततः ॥२६६॥

त्रिकोणकुण्डनिहिते वह्नौ मन्त्रेण दीपिते ।
अर्चिते गन्धपुष्पाद्यैरयुतं जुहुयात् क्रमात् ॥२६७॥

राजीभल्लातकतिलतैलैः सप्तदिनं ततः ।
प्रसूतिसमयप्राप्तां महिषीं स्थापितानिलाम् ॥२६८॥

पूजितां गन्धपुष्पाद्यैः स्पृशन् कूर्चेन तं जपेत् ।
[1]मस्तकाद् योनिपर्यन्तं धिया [2]वत्समनुस्मरन् ॥२६९॥

आकृष्य हस्ते पतितं जुहुयादेधितेऽनले ।
एवं कृते समुत्पन्ना कृत्या दीप्ता हुताशनात् ॥२७०॥

भक्षयेदचिराच्छत्रुमीश्वरेणापि रक्षितम् ।
पुनरग्नौ विशत्येषा कर्तारमपि रक्षिणी ॥२७१॥

एवंविधानि कार्याणि यः कुर्यान्मन्त्रवित्तमः ।
स जपेदात्मरक्षार्थं मन्त्रान् मृत्युञ्जयादिकान् ॥२७२॥

इति श्रीफेत्कारिणीतन्त्रे जातवेदादिनवदुर्गाप्रकरणे
पञ्चदशः पटलः ॥

---

श्रीशिव उवाच

अथो लवणमन्त्रस्य विधानमभिधीयते ।
सर्वशान्तिकरो मन्त्रो ग्रहणादेव सिध्यति ॥ १ ॥

व्रतोपवासनियमैः पौरश्चर्यादिभिर्विना ।
[3]छन्दोऽनुष्टुब् महारात्रिर्भद्रकाली च देवता ॥ २ ॥

---

१. आमस्तकं–क० ।

२. कूर्चेन–क० ख० ।

३. 'छन्दोऽनुष्टुब् महारात्रिर्भद्रकाली च देवता' नास्ति–क० ।

ऋगाद्याः कथिताः पूर्वं लवणाम्भसि पूर्विकाः ।
लवणादिद्वितीयाद्या दहत्याः परिकीर्तिताः ॥ ३ ॥

संदहत्या चतुर्थी स्याद् याते पूर्वार्थपञ्चमी ।
अङ्गिरा मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ॥ ४ ॥

अग्निरात्री पुनर्दुर्गा भद्रकाली च देवता ।
चिटिमन्त्राक्षरैः कुर्यात् षडङ्गानि समाहितः ॥ ५ ॥

पञ्चभिर्हृदयं प्रोक्तं त्रिभिर्वर्णैः शिरः स्मृतम् ।
पञ्चवर्णैः शिखा प्रोक्ता कवचं करणाक्षरैः ॥ ६ ॥

पञ्चभिर्नेत्रमुदितं युगलेनास्त्रमीरितम् ।
तारं चिटिद्वयं पश्चाच्चाण्डालि तदनन्तरम् ॥ ७ ॥

महापदाद्यां तां ब्रूयादमुकं मे ततः परम् ।
वशमानय ठद्वन्द्वं[1] चिटिमन्त्र उदाहृतः ॥ ८ ॥

चतुर्विंशत्यक्षरात्मा सर्वकामफलप्रदः ।
( ॐ चिटि चिटि चाण्डालि महाचाण्डालि अमुकं मे वशमानय स्वाहा )

नवकुङ्कुमसन्निभं त्रिनेत्रं रुचिराकल्पशतं भजामि वह्निम् ।
श्रुवशक्तिवराभयानि दोर्भिर्दधतं रक्तसरोरुहे निषण्णम् ॥ ९ ॥

इति वह्निध्यानम्

[2]कालाम्बुदद्युतिमिन्द्रवक्त्रां हारावलीशोभिपयोधराढ्याम् ।
कपालपाशाङ्कुशशूलहस्तां नीलाम्बरां तां युवतीं नमामि ॥१०॥

वह्निस्त्रीध्यानमेतत्

नीलाम्बुदाभामसिशङ्खशूलखड्गाढ्यहस्तां तरुणेन्दुचूडाम् ।
भीमां त्रिनेत्रां जितशत्रुवर्गां दुर्गां स्मरेद् दुर्गविभङ्गदक्षाम् ॥११॥

---

१. ठद्वयम्–क० ।
२. कालाम्बुवाहत्विषमिन्दुवक्त्रा–क० ।

दुर्गाध्यानमेतत्

टङ्कं कापालं डमरुं त्रिशूलं संबिभ्रती चन्द्रकलावतंसा ।
पिङ्गोर्ध्वकेशी सितधूमनेत्रा भूयाद् विभूत्यै मम भद्रकाली ॥१२॥

भद्रकालीध्यानमेतत्

ऋकूपञ्चकं जपेत् सम्यगयुतं तद्दशांशतः ।
महिषीघृतसिक्तेन जुहुयादेधितेऽनले ॥१३॥

एवं कृत्वा पुरश्चर्यां प्रयोगे कुशलो भवेत् ।
अग्नियामवती ध्येयौ वश्याकर्षणकर्मणोः ॥१४॥

ध्यायेद् दुर्गां भद्रकालीं मन्त्री मारणकर्मणि ।
जानुप्रमाणे सलिले स्थित्वा निशि जपेन्मनुम् ॥ १५ ॥

अनेन वाञ्छितः साध्यः किङ्करो जायते क्षणात् ।
नाभिमात्रजले स्थित्वा जपेन्मन्त्रमिमं सुधीः ॥ १६ ॥

अष्टोत्तरसहस्रं यस्तस्य साध्यो वशीभवेत् ।
ऋकूपञ्चकं जपेन्मन्त्री कण्ठमात्राम्भसि स्थितः ॥ १७ ॥

सप्तभिर्दिवसैः साध्यं वशयेद् विधिनामुना ।
विलिख्य तालपत्रे तं साध्यनामविदर्भितम् ॥ १८॥

प्रक्षिप्य क्षीरसंमिश्रे जले तत् क्वाथयेन्निशि ।
वश्यो भवति साध्योऽसौ नात्र कार्या विचारणा ॥१९॥

तालपत्रे लिखित्वैवं भद्रकालीगृहे खनेत् ।
वश्याय सर्वजन्तूनां प्रयोगोऽयमुदाहृतः ॥ २० ॥

ताम्रपात्रे समालिख्य मन्त्रं साध्यविदर्भितम् ।
तापयेत् खादिरे वह्नौ मासाद् वश्यो भवेन्नरः ॥ २१ ॥

---

१. मविशङ्ख—क० ।
२. किङ्करो जायते—क० ख० ।

त्रिकोणकुण्डमापाद्य सम्यक् शास्त्रोक्तलक्षणम् ।
तस्मिन् होमं प्रकुर्वीत संस्कृते हव्यवाहने ॥ २२ ॥

प्रक्षाल्य गव्यदुग्धेन संयोज्य लवणं सुधीः ।
संचूर्णितं तु जुहुयात् सप्ताहाद् वशयेज्जनान् ॥ २३ ॥

दधिमध्वाज्यसंसिक्तैः सैन्धवैर्जुहुयात्तथा ।
वशयेत् सकलान् देवानचिरात् किमु पार्थिवान् ॥ २४ ॥

विशुद्धं लवणप्रस्थं विभक्तं पञ्चधा पृथक् ।
एकैकया प्रजुहुयाद् ऋचा पञ्चाहमादरात् ॥ २५ ॥

यस्य नाम्ना स वश्यः स्यादनेनैव न संशयः ।
शुद्धं लवणमादाय जुहुयान्मधुरान्वितम् ॥ २६ ॥

ऊनपञ्चाशदाहुत्या वशं नयति वाञ्छितम् ।
नित्यं शुद्धेन लोणेन हुत्वा शत्रुं वशं नयेत् ॥ २७ ॥

मधुरत्रयसंयुक्तैर्लवणैः साधुचूर्णितैः ।
जुहुयाद् वशयेन्नारीर्नरान् नरपतीनपि ॥ २८ ॥

मन्त्रं कृष्णतृतीयादौ प्रजपेद् यावदष्टमीम् ।
पुत्तलीः पञ्च कुर्वीत साङ्गोपाङ्गाः समाः शुभाः ॥ २९ ॥

[३]एका साध्यक्रमेण स्यात् पुत्तलीष्टमयी स्मृता ।
लवणं पोतसम्भूतं चूर्णितं परिशोधितम् ॥३०॥

कुडरं[४] प्रोक्षयेत् क्षीरदध्याज्यमधुभिः क्रमात् ।
गुडाज्यमधुभिः सम्यग् मिश्रितेनाम्बुना ततः ॥३१॥

---

१. ताम्रपात्रे—क० ख० ।

२. जनान्—क० ख० ।

३. साध्यक्रमेण…अन्या पिष्टमयी चक्रहस्तमृदान्यस्यान्या सिक्थमयी स्मृता—क०ख० ।

४. कुडवं—क० ख० ।

कुर्वीत पुत्तलीं सौम्यां सर्वावयवशोभिताम् ।
प्राणमन्त्रं कृतं यन्त्रमासां हृदि विनिक्षिपेत् ॥३२॥

आसु प्राणान् प्रतिष्ठाप्य पूजयेत् कुसुमादिभिः ।
पश्चात् कृष्णाष्टमीरात्रौ याममात्रगते सति ॥३३॥

विधाय मातृकान्यासं मन्त्रन्यासमनन्तरम् ।
चिटिमन्त्रसमुद्भूतान् चतुर्विंशतिसंख्यकान् ॥३४॥

ताराद्यान् विन्यसेद् वर्णान् स्थानेष्वेषु समाहितः ।
मूर्ध्नि भाले दृशोः श्रुत्योर्नासास्यचिबुकेष्वपि ॥३५॥

कण्ठहृत्स्तनयुग्मेषु कुक्षौ नाभौ कटिद्वये ।
मेढ्रे पायौ प्रविन्यस्य शिष्टं वर्णचतुष्टयम् ॥३६॥

ऊरुद्वये जानुयुग्मे जङ्घायुग्मे पदद्वये ।
एवं विन्यस्य सर्वाङ्गे रक्तमाल्यानुलेपनः ॥३७॥

रक्तवस्त्रधरः शुद्धः पुत्तलीं दारुणा कृताम् ।
अधोमुखीं खनेत् कुण्डे पिष्टजामासनादधः ॥३८॥

मृण्मयीं प्रतिमां पाददेशे न्यसेत्तथात्मनः ।
मधूच्छिष्टमयीं व्योम्नि कुण्डस्योर्ध्वं प्रलम्बयेत् ॥३९॥

लवणेन कृतां पश्चात् पुत्तलीं संस्पृशन् जपेत् ।
ऋकूपश्चकं यथान्यायमष्टोत्तरसहस्रकम् ॥४०॥

समं कृत्य चिटिमन्त्रान् पुनस्तस्यास्तनौ न्यसेत् ।
अङ्गुलीसन्धिप्रपदजङ्घोरुजानुपायुषु ॥४१॥

लिङ्गदेशे पुनर्नाभौ जठरे हृदयाम्बुजे ।
स्तनद्वये तु स्कन्धे च चिबुके [1]वदने पुनः ॥४२॥

---

१. वशने—क० ख० ।

घ्राणयोः कर्णयोरक्ष्णोर्ल्ललाटे मूर्द्धनि क्रमात् ।
अग्निमादाय संदीप्य साध्यनक्षत्रदारुभिः ॥४३॥
तस्मिन्नभ्यर्च्य मन्त्रोक्तां देवतां दारुपत्रके ।
कुसीतराजिपुष्पाभिर्दत्त्वार्घ्यं प्रणमेत् सुधीः ॥४४॥
मन्त्रैरेतैः प्रयोगादावन्ते संयतमानसः ।
ॐ त्वमनेनाप्यमित्रघ्न[1] निशायां हव्यवाहन ॥४५॥
हविषा मन्त्रदत्तेन तृप्तो भव तया सह ।
जातवेदो महादेव तप्तजाम्बूनदप्रभ ॥४६॥
स्वाहापते विश्वभक्ष्य लवणं दह शत्रुहन्[2] ।
ॐ ईशे सर्वाभिः सर्वाणि ग्रस्तयुक्तं त्वया जगत् ॥४७॥
महादेवि नमस्तुभ्यं वरदे कामदा भव ।
ॐ तमोमयि महादेवि महादेवस्य सुव्रते ॥४८॥
त्रियामे पुरुषं हुत्वा वशमानय देहि मे ।
ॐ दुर्गे दुर्गादिरहिते दुर्गसंबोधनाकुले ॥४९॥
शङ्खचक्रधरे देवि दुष्टशत्रुभयङ्करि ।
ॐ नमस्ते दह मे शत्रुं वशमानय चण्डिके ॥५०॥
शाकम्भरि महादेवि शरणं मे भवानघे ।
ॐ भद्रकालि महातीक्ष्णे भद्रसिद्धिप्रदायिनि ॥५१॥
सपत्नान् मे हन हह दह शोषय तापय ।
शूलासिशक्तिवज्राद्यैरुत्कृत्योत्कृत्य मारय ॥५२॥
महादेवि महाकालि रक्षास्मानक्षतात्मिके ।
साध्यं संस्कृत्य निष्पाद्य पुत्तलीं सप्तधा पुनः ॥५३॥

---

१. कमलेनाप्य–क० ।
२. शत्रुहन् वरदो भव–क० ।

ऋक्पञ्चकं समुच्चार्य जुहुयादेधितेऽनले ।
प्रथमो दक्षिणः पादस्ततकरस्तदनन्तरम् ॥५४॥

शिरस्तृतीयमाख्यातं वामहस्तस्ततः परम् ।
मध्यादूर्ध्वं पञ्चमः स्यादधोंऽशः षष्ठ ईरितः ॥५५॥

सप्तमो वामपादः स्यादेवं भागक्रमः स्मृतः ।
सप्तसप्तविभागो वा प्रोक्तेष्वेषु यथाविधि ॥५६॥

हुत्वैवमर्चयित्वाग्निं प्रणमेद् दण्डवत्ततः ।
यजमानो धनैर्धान्यैः पूजयेद् गुरुमात्मनः ॥५७॥

अनेन विधिना मन्त्री वशयेदसुरान् सुरान् ।
किं पुनर्मनुजान् भूपान् नागाद्यान्नरयोषितः[1] ॥५८॥

मारणे पूर्वसंप्रोक्तं पुत्तलीनां चतुष्टयम् ।
निवेशयेद् यथा पूर्वं साधको विधिना ततः ॥५९॥

अपरान् वक्ष्यमाणेन विधिनानेन कल्पयेत् ।
वाराहपारावतविट्तिलकाष्ठत्र्युषणरामठैः ॥६०॥

व्रणकृन्निम्बनिर्यासं साध्यवामाङ्घ्रिरेणुभिः ।
महिषीमूत्रसंपिष्टैः पूर्वोक्तैर्लवणान्वितैः ॥६१॥

विधाय पुत्तलीं सम्यक् प्राणस्थापनमारभेत् ।
जपपूजादिकं कुर्यात् प्रागुक्तवर्त्मना ततः ॥६२॥

ततः पूर्वोदिते कुण्डे रात्रौ प्रज्वलितेऽनले ।
दुर्गां वा भद्रकालीं वा समभ्यर्च्य यथाविधि ॥६३ ॥

धारयन्निशितं शस्त्रं सव्यहस्तेन साधकः ।
वामपादं समारभ्य दक्षिणाङ्घ्र्यवसानकम् ॥६४॥

---

१. नरकिन्नरयोषितः—क० ।

छित्वा छित्वा प्रजुहुयान्निराहारो जितेन्द्रियः।
कृष्णाष्टमीं समारभ्य यावत् [1]कृष्णचतुर्दशी ॥६५॥

अनेनैव विधानेन कुर्याद् होमं जितेन्द्रियः।
त्रिःसप्ताहप्रयोगेण मारयेद् रिपुमात्मनः ॥६६॥

नीलनीरदसङ्काशो रौद्री सर्वार्थसिद्धिदा।
वारुणो वरुणा नाम ऋषिः सञ्ज्वलनः स्वयम् ॥६७॥

यः सहस्रं जपेत्तावत् तस्य वश्यं भवेज्जगत्।
जानुदघ्ने जले स्थित्वा रजन्यां ध्यानमास्थितः ॥६८॥

यमुद्दिश्य जपेन्मन्त्रं स सद्यो वशमेष्यति।
रक्तपुष्पैः समाराध्य भद्रकालीं स्पृशन् जपन् ॥६९॥

शतं सहस्रं वा ध्यायन् स सद्यो वशमेष्यति।
तालपत्रे लिखेन्मन्त्रं साध्यनामविदर्भितम् ॥७०॥

जप्त्वा शतं सहस्रं वा भद्रकालीगृहे खनेत्।
स दासवद् भवेत्तस्य यावज्जीवं न संशयः ॥७१॥

रक्तपुष्पधरो मन्त्री रक्तमाल्यानुलेपनः।
प्राणायामत्रयं कृत्वा जुहुयात् सुमना भुवि ॥७२॥

गते यामे रजन्यास्तु साध्यनामाङ्किते शुभे।
साध्यवृक्षमये पीठे समासीनो परासने[2] ॥७३॥

प्रणतेनाग्निमध्ये तु कुण्डे वा स्थण्डिलेऽपि वा।
पद्मपुष्पं परिस्तीर्य कुशैः शरमयैरपि ॥७४॥

आराध्याग्निं महारात्रिं प्राच्यामग्निं प्रपूजयेत्।
रक्तवस्त्रेण लवणैः कुर्याच्च प्रतिमां शुभाम् ॥७५॥

---

१. शुक्ल–क०।
२. वरानने–क०।

मधुयुक्तां लोलक्रोडां पूजितामपि सेन्द्रियाम् ।
अक्षराणि न्यसेत्तत्र मन्त्रस्याथ विचक्षणः ॥७६॥

परिदीप्याग्निमाज्येन प्रणवेन हुनेत्ततः ।
पुनर्व्याहृतिवर्णैश्च समस्तैश्च तथैव च ॥७७॥

वामपादे तु चारभ्य यावदापूर्यते करः ।
तावदादाय तेनैव संस्कृतेन करेण तु ॥७८॥

गुरूपदेशसिद्धेन[1] मन्त्रेण प्रणवादिना ।
जुहुयात् सप्तभिर्मन्त्री सप्तधा ध्यानमास्थितः ॥७९॥

पुनर्व्याहृतिभिश्चाज्यं जुहुयात् प्रणवेन च ।
होमान्ते बलिदानं तु नित्यं कुर्याद्विजानता ॥८०॥

तिललाजादिना सक्तुदधिसंमिश्रभोजनम् ।
क्रमेण निक्षिपेद् भूमौ द्विस्त्रिर्वा साधकोत्तमः ॥८१॥

ॐ नमो रात्रिगणेभ्यः सर्ववश्यकरेभ्यः प्रतिगृह्णन्तु
सर्ववश्याय सर्वशान्ताय बलिमिमं स्वाहा ।
दत्त्वा बलिं जपेद् भूयो लवणादिमनुं बुधः ॥८२॥

परिषिच्याग्निमाराध्य महारात्रिं तथैव च ।
शेषं समापयेद् विद्वान् स सद्यो वशमेष्यति ॥८३॥

कृष्णाष्टमीं समारभ्य यावत् शुक्लचतुर्दशी ।
होमान्ते दक्षिणां भूमिं हिरण्यं वा यथाविधि ॥८४॥

ऋत्विग्भ्यो गुरवे वापि दद्याद् विप्राय भोजयेत् ।
यस्त्वेवं कुरुते होमं गुरुशास्त्रोपदेशतः ॥८५॥

आमृत्योर्वशमायाति स मर्त्यो नात्र संशयः ।
तथाकर्षणमिच्छंस्तु नाभिमात्रजले स्थितः ॥८६॥

---

१. विद्धेन—क० ।

सहस्रमधिकं वापि यथाकार्यमनन्यधीः ।
ध्यायेन्नित्यं महारात्रौ जपेन्मन्त्रमतन्द्रितः ॥८७॥

पाशबन्धगतं साध्यं नियमो मातृसन्निधौ ।
ज्वालामालप्रतीकाशां महारात्रिं महाभुजाम् ॥८८॥

दंष्ट्राकरालवदनां स सद्यो वशमेष्यति ।
भद्रकालीं समाराध्य गन्धपुष्पादिभिः क्रमात् ॥८९॥

रक्तपुष्पसहस्रेण प्रतिवारं वदन् क्षिपेत् ।
ध्यायेन्नरं महादेवीं स सद्यस्त्वागमिष्यति ॥९०॥

शत्रुपुत्रनरो नार्यः [1]साध्यनामविदर्भितम् ।
क्षीरमिश्रजले क्षिप्त्वा क्वाथयेद् ध्यानमास्थितः ॥९१॥

जपेच्छतं सहस्रं वा स सद्यस्त्वागमिष्यति
अरुणोऽरुणपङ्कजसन्निहितःस्रुवशक्तिवराभययुक्तकरः
[2]अमृताच्चिरजातवातैर्विमलललसन्नयनत्रितयोऽवतु ।
वोर्द्धहनो नीलतरांशुकाकनकलावनीलतनु-
निबिडस्तनभारा
साङ्कुशपाशसशूलकपालग्रामवती भवतोऽवतु नित्यम् ॥९३॥

ॐ करकमलविराजच्चक्रशङ्खासिशूला
परिलसितकिरीटोत्पाटितानेकदैत्या ।
त्रिनयनलसिताङ्गी तिग्मरश्मिप्रकाशा
पवनसखनिभाङ्गी पातु कात्यायनी वः ॥९४॥

---

१.::::::::::::::::राजा राष्ट्रमजादयः ।
सर्वत्रैवागमिष्यन्ति जपध्यानबलादमी ॥
तालपत्रे लिखेन्मन्त्रं साध्यनामविदर्भितम् । –क० ख० ।

२. अमिताच्चिराय भूगतिर्विमलनयनत्रितयोऽवतु वो दहनः ।
ॐ नीलतरांशुकशुक्लकेशकपाला नीलतनुर्निबिडस्तनभरा साङ्कुशपाशसशूलकपाला
यमवती भवतोऽवतु नित्यम् । –क० ख० ।

ॐ [1]स्वरौद्रस्नुतदंष्ट्रिका त्रिनयनोर्ध्वकेशा
फलककपालपरशुडमरुकर्त्रीशूलाकुला ।
घना घननिभा रणद्रुधिरा[2] किङ्किणीमालिका
भवसिद्धये भवतु भद्रकाली चिरम् ॥९५॥

खेटासिमुषलतोमरकपालशक्तिसपाशशूलान् ।
दधती दंष्ट्रोग्रा ध्येया त्रिनयनविराजिता[3] ॥९६॥

लवणेनाज्ययुक्तेन हुत्वेष्टवाभिभवेद् ध्रुवम् ।
तिलतैलं विमिश्रित्य हुत्वा श्रीमान् भविष्यति ॥९७॥

पुन्नागपुष्पैर्मिश्रित्य हुत्वा पुत्रमवाप्नुयात् ।
मातुलुङ्गफलेनैव सर्वशान्तिर्भवेद् ध्रुवम् ॥९८॥

उन्मत्तबीजहोमेन मत्तो भवति नान्यथा ।
निम्बतैलेन युक्तेन लवणेनाशु मारणम् ॥९९॥

हुत्वा वा लवणेनाशु नष्टद्रव्यं प्रसिध्यति ।
कारस्करोत्थधात्री स्यादुदुम्बरतरुः पुनः ॥१००॥

जम्बूखदिरकृष्णाख्यौ वंशपिप्पलसंज्ञकौ ।
नागरोहिणनामानौ पलाशप्लक्षसंज्ञकौ ॥१०१॥

जम्बुश्च[4] विल्वार्जुनाख्यविकङ्कतमहीरुहाः ।
बकुलः सरलः सर्जो वञ्जुलः पनसार्ककौ ॥१०२॥

शमीकदम्बाम्रनिम्बमधुका ऋक्षशाखिनः ।
आत्मरक्षादिकं सर्वं कुर्यान्मन्त्री यथा पुरा ॥१०३॥

---

१. सुरौद्र-क० ।

२. तरुणरुचिर-क० ।

३. निघ्ननत्रिकालिका-क० ।

४. आयुष्यबिल्वार्कजालाक्ष-क० ।

अमुना विधिना सम्यगभीष्टफलसाधने ।
सदृशो नास्ति मन्त्रोऽन्यः सत्यमेव न चान्यथा ॥१०४॥

आकल्पयन्तीति प्रत्यङ्गिरसो मन्त्रेणापामार्गराजीमृद्‌हवींषि पृथगष्टोत्तरशतं हुत्वा परकृत्याप्रणाशात्मरक्षां कुर्वन् दशदिक्षु बलिं हरेन्मन्त्रैरेतैः ॥१०५॥

यथा—यो मे पूर्वगतः पाप्मा तत् केनेह हेतुना कर्मणा इन्द्रस्त्वं देवराजी जम्भयतु स्तम्भयतु मोहयतु शोषयतु पातयतु तापयतु द्रावयतु त्रासयतु क्षामयतु नाशयतु मारयतु बलिं तस्मै प्रयच्छतु ॥१०६॥

कृतं मम शुभं मम शिवं मम शान्ति स्वस्त्ययनं मम यो मेऽग्निगतो यो मे[1] ईशगतो यो मे ऊर्ध्वगतो यो मे दिविगतो यो मे पातकेनेह कर्मणा ॥१०७॥

सूर्यस्त्वं देवराजो जम्भयतु स्तम्भयतु मोहयतु[2] तापयतु त्रासयतु बलिं तस्यै प्रयच्छतु यत् कृतं मम शिवं शुभं मम शान्तिस्वस्त्ययनं मम यो मे सर्वगतः ॥१०८॥

एवं दिशासु दशसु देवताभ्यो बलिं हरेत् ।
कलावेवं कृतेऽरीणामाशु कृत्या विनश्यति ॥१०९॥

इति श्रीपश्चिमाम्नाये फेत्कारिणीतन्त्रे तन्त्रराजोत्तमे
लवणमन्त्राख्यानं नाम षोडशः पटलः ॥

—:०:—

श्रीशिव उवाच

मन्त्राणां लेखनद्रव्यं चन्दनं रोचना निशा ।
गृहधूमचिताङ्गारौ मारणेषु विषाणि च ॥१॥

---

१. यमगतो यो मे वरुणगतो यो मे वायुगतो यो मे सोमगतो यो मे ईशगतो यो मे अधोगतो यो मे ऊर्ध्वगतो यो मे पातालगतो—क० ।

२. शोषयतु पातयतु तापयतु त्रासयतु क्षामयतु मारयतु नाशयतु—क० ।

सोमाग्निलोणपिण्डानि[1] धुस्तूरकरसस्ततः ।
गृहधूमस्त्रिकटुकं विषाष्टकमुदीरितम् ॥२॥

अथ वक्ष्यामि यन्त्राणां भेदांस्तन्त्रेषु गोपितान् ।
यैः साधयन्ति सततं मन्त्रिणो निजवाञ्छितम् ॥३॥

शूलाङ्किते वह्निगृहस्य युग्मे
धूमावतीमन्त्रं लिखेत् क्रमेण ।
मध्यादिकोणेषु मरुद्गृहस्थं
यन्त्रं हुताशानिलवर्णपीतम् ॥४॥

धूंधूंधूमावतिपदं [2]द्विठो धूमावतीमनुः ।
धूमावती स्मृता काली शत्रुनिग्रहकारिका ॥५॥

विषेण कनकाम्भोभिः प्रेतकर्पटकल्पितैः ।
श्मशाने निखनेदेतच्छत्रुमुच्चाटयेद् ध्रुवम् ॥६॥

स वज्रषट्कोणमध्ये सकर्मसाध्यं धूँ मध्ये विलिख्य प्राच्यादि-कोणाभ्यन्तरे धूँ षट्कोणस्य धूँ धूमावति स्वाहा इति लिखेत् ॥७॥

स्वाहा च त्रिकोणे तद्बहिः षट्बिन्दुलाञ्छितं मातरिश्वनः । इति वायुगृहम् ॥८॥

तद्बहिरसंख्याताभ्यां वायुवर्णाभ्यां वेष्टयेत् ।
[3]नामालिख्य मकारकोष्ठयुगले कोष्ठेषु तस्या लिखेद्
मन्त्रज्ञो अणनामकारसहितां धूमावतीं पत्रगाम् ।

---

१. पित्तानि–क० ।

२. रय–क० ।

३. नागालिख्य–क० ख० ।

वीतं [1]घर्म्घुटिकादिना परमिदं वाय्वद्रिगेहावृतं
यन्त्रं प्रान्तपरेतभूमिनिहितं विद्वेषणं स्याद् द्विपाम् ॥१०॥
पूर्वं घर्मटिकेयुग्मं ततो वर्मटिकेयुगम् ।
घोरे विद्वेषकारिणि विद्वेषोद्वेगकारिणि ॥११॥
अथ घोराघोरयोः स्यादमुकामुकयोस्ततः ।
विद्वेषयद्वयं हुँ फट् विद्या घर्मटिकेरिता ॥१२॥

अष्टदलाभ्यन्तरेऽधः केशरद्वये कोष्ठद्वययुक्तं मकारं लिखेत् । कोष्ठद्वयाभ्यन्तरे मध्ये नाम मकाराभ्यन्तरे कोणचतुष्टये ईशकोणादारभ्य ङ ञ ण न म इति लिखित्वा अष्टपत्रेषु धूमावतीमन्त्रं तद्बहिर्घर्मटिकामन्त्रेण वेष्टयित्वा षड्बिन्दुलाञ्छितं वायुगृहं त्रिभिर्वेष्टयेत् ॥१३॥

प्राक्प्रत्यग्दक्षिणोदग्विधिवदभिलिखेत् स्पष्टरेखाचतुष्कं
कोणोद्यच्छूलयुक्तं वलयुगलयुतं मध्यपूर्वं तदन्तम् ।
मन्त्रस्थार्णान् परस्ताद् वसुपदविवरेष्वष्टवर्णान् लिखित्वा
शूलोद्यद्द्वादशार्णं विधिवदभिहितं प्रेतराजस्य मन्त्रम् ॥१४॥

यमराजमदोमेययमो दारुणधोदयः ।
यत्र योनित्रयस्केय यस्के यच्च निरामयः ।
उक्तो धूमान्धकाराय स्वाहेत्यष्टाक्षरो मनुः ॥१५॥
प्रणवोष्ट्रां ततो दंष्ट्रां तत्परं विकृतं ततः ।
आननाय वधूर्वह्नेर्मन्त्रोऽयं द्वादशाक्षरः ॥१६॥
विषवृक्षस्य फलके नृचर्मणि पटेऽथवा ।
आलिख्याष्टविषैरेतत् श्मशाने निखनेन्निशि ॥१७॥
ज्वरेण महताविष्टो मूर्च्छाकुलितमानसः ।
रिपुर्गच्छति पक्षेण यमलोकं न संशयः ॥१८॥

---

[1] "घुर्घुटिके घुर्घुटिके मर्मटिके मर्मटिके घोरे विद्वेषकारिणि विद्वेषोद्वेगकारिणि घोराघोरयोरमुकामुकयोर्विद्वेषय विद्वेषय हुँ फट्" इत्यधिकः—क० ।

[1]इह चक्रे कुण्डलिनीरूपद्वादशाक्षरचक्रं लिखित्वा कोणचतुष्टयगतां रेखां शूलाङ्कितां कृत्वा शूलाधो वृत्तचतुष्टयं दत्त्वा मध्यादितस्तदन्तं यमराजेत्यादि लिखित्वा मध्यवृत्ताधःकोणस्थाग्नेयकोष्ठादितो धूमान्धकाराय स्वाहेत्यष्टार्णान्तं लिखित्वा शूलचतुष्टये शूलस्य प्रथमशूलाद् दंष्ट्रामन्त्रं लिखेत् ॥१९॥

एकाशीतिपदेषु मध्यदहने साध्यं लिखेद् धूँ पुनः
क्षींश्रींध्रुं इति दिग्गतासु विलिखेद् बीजानि पङ्क्तिष्वथ ।
शिष्टेष्वीशनिशाचरादि विलिखेत् कालीमनुं पङ्क्तिश-
स्तद्बाह्ये यमबीजमग्निपवना[2]बीजश्च[3] यन्त्रं लिखेत् ॥ २० ॥

[4]काली मार रमा वाणी नील मोक्ष क्षमो नली ।
मामोदेत तदेमोमा रक्ष तत्तत्कृतक्षरः ॥ २१ ॥
कालीमनुरयं प्रोक्तः कालरात्रिः स्ववैरिणाम् ।
यमा पाट टमा माय[5] माट मोट टमो टमा ॥ २२ ॥
वामो भुवि[6] विभू मोवा टटवीस्त्वटवी टट ।
[7]यमात्मकोऽयमाख्यातः श्लोको वैरिविनाशनः ॥ २३ ॥
लिखेदष्टविषाङ्गारनिम्बनिर्यासकज्जलैः ।
निग्रहाख्यमिदं यन्त्रं काकपक्षेण कर्पटे ॥ २४ ॥
विभीतवृक्षे वल्मीके श्मशाने वा चतुष्पथे ।
दक्षिणस्थेऽनिले मन्त्री निखनेदर्धरात्रिके ॥ २५ ॥
सर्वथा शत्रुरेतेन सप्ताहान्मरणं व्रजेत् ।
निगृह्यते महारोगैः पतितो वा भवेदयम् ॥ २६ ॥

---

१. इति–क० ।
२. वीतं–क० ।
३. वीजम्–क० ।
४. काली मारय मालिका नीलामाक्ष क्षमालिनी ।
मामोदेत तदेवोमा रक्ष तदन्न तक्षर ॥
५. पामाय–क० ।
६. भूरि रिभूमो वा–क० ।
७. यमाष्टको–क० ।

शिलायामिष्टकायां वा चक्रमेतत् प्रकल्पितम् ।
मर्कटीविषदण्डीभिः[1] समालिप्तमधोमुखम् ॥ २७ ॥
यन्त्रं[2] रात्रौ खनेत्तत्र भूमौ भूयोऽशुभं व्रजेत् ।
ऊर्ध्वाधो दशरेखाभिस्तिर्यग्रेखास्तथा दश ॥ २८ ॥

एवमेकाशीतिकोष्ठकं चक्रमालिख्य पञ्चममध्यकोष्ठे त्रिकोणे तं साध्यं सकर्मालिख्य चतुर्दिक्षु प्रथमकोष्ठे मध्यस्थसाध्यकोष्ठोपकोष्ठादारभ्य निर्गमक्रमेण धूँ क्षीं श्रूं हूं लिखित्वा ईशानकोणादारभ्य प्रथमपङ्क्तौ वसुकोष्ठेषु[3] नीलामोक्षक्षमालिनी तदधो मामोदेत तदे व्रोमा तदधो रक्ष तत्तत्कृतत्त्वर तदधो[4] हूं इत्यादि तदधो रक्ष तत्तत्कृतत्त्वर तदधो मामो देत तदे मोमा तदधो नीलमोक्षक्षमालिनी तदधः काली मार रमा वाणी इति लिखित्वा-वाह्य ईशकोणादारभ्य यमापाटटमामाय इति प्राच्याम्, माट मोट टमो टमा दक्षिणे, वामा भुवि विभूमो वा[5] प्रतीच्याम्, टटवीस्त्वटवीटट इत्युत्तर इति लिखित्वा वृत्तं दत्त्वा तद्बाह्ये वह्निपवनाभ्यां[6] वेष्टयेत् ॥ २९ ॥

इति लिखेच्चतुः षष्टिपदेष्वष्टमीशनिशादिकाल्यादियमात्मकश्लोकेन संवेष्ट्य कृशानुवायुबीजवृतं यन्त्रमिदं विदध्यात्[7] ॥ ३० ॥

इति श्रीपश्चिमाम्नाये फेत्कारिणीतन्त्रे धूमावतीसिद्धयन्त्राख्यानं नाम सप्तदशः पटलः ॥

—:०:—

१. दंष्ट्रीभिः–क० ।
२. अर्धरात्रौ–क० ।
३. काली मार रमा वाणी तदधः कोष्ठेषु–क० ।
४. मामोमेदे तदेमोमा तदधो नील मोक्ष क्षमो नली तदधः–क० ।
५. भूरि रिभूमो वा प्रतीच्याम्–क० ।
६. रयवर्णाभ्यां–क० ।
७. "लिप्तं विषमयी दण्डी मर्कटीभिरधोमुखम् ।
निखनेद् यत्र तत्र स्यात् स्त्रीणा( द्विषां )मुच्चाटनं सदा ॥
सस्यहानिमनावृष्टिं गवां नाशं करोति तत् ।
मध्यमं बीजमित्युक्तम् पूर्वयन्त्रस्य न्यासवदन्यत् ॥" इत्यधिकः–क० ख० ।

श्रीशिव उवाच—

भूतलिप्या पुटीकृत्य यो मन्त्रं भजते नरः ।
क्रमोत्क्रमाच्छतावृत्त्या तस्य सिद्धो भवेन्मनुः ॥ १ ॥
अङ्कोन्मुक्तशशाङ्ककोटिसदृशीमापीनतुङ्गस्तनीं
चन्द्रार्धाङ्कितमस्तकां मधुमदा व्यालोलनेत्रत्रयाम् ।
बिभ्राणामनिशं वरं[1] जपवटीं त्रिद्यां कपालं करै-
राढ्यां यौवनगर्वितां लिपितनुं वागीश्वरीमाश्रये ॥ २ ॥
पञ्चह्रस्वाः सन्धिवर्णा व्योमेराग्निजलं धरा ।
अन्त्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात् ॥ ३ ॥
पञ्चवर्णाक्षराणि स्युरन्ते श्वेतेन्दुभिः सह ।
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः ॥ ४ ॥

अ इ उ ऋ लृ ए ऐ ओ औ ह य व र ल ङ क ख घ ग ञ च छ झ ज ण ट ठ ढ ड न त थ ध द म प फ भ व स ष श स ष श ब भ फ प म द ध थ त न ड ढ ठ ट ण ज झ छ च ञ ग घ ख क ङ ल व र य ह औ ओ ऐ ए लृ ऋ उ इ अ ।

ध्यात्वा जप्त्वा शतावृत्त्या क्रमोत्क्रमविधानतः ।
ज्ञानविज्ञानसम्पन्नो भवेत् सिद्धो न संशयः ॥ ५ ॥

क्रमे आदिपृथिव्यन्ता व्युत्क्रमे [2]सादि आन्तगाः ।
एवं संपूज्य विधिवद् जपन् भूतलिपिं नरः ॥ ६ ॥
क्रमोत्क्रमाच्छतावृत्त्या सर्वान् कामानवाप्नुयात् ।
अनया संपुटीकृत्य योऽमुं मन्त्रं[3] जपेन्नरः ॥ ७ ॥
क्रमोत्क्रमाच्छतावृत्त्या तस्य सिद्धो भवेन्मनुः ।
पाशाङ्कुशपुटाशक्तिर्वाणीबिन्दुविभूषिताः ॥ ८ ॥

---

१. सुधाम्—क० ।
२. क्षादि अन्त्यया—ङ० ।
३. असुमन्त्रं—ङ० ।

याद्याः सप्त सकारान्ता व्योम सत्येन्दुसंयुतम् ।
( यँ रँ लँ वँ शँ षँ सँ )
तदन्ते हंसमन्त्रः स्यात् ततोऽमुष्यपदं भवेत् ॥ ९ ॥
प्राणा इति वदेत् पश्चाद् इह प्राणास्ततः परम् ।
अमुष्य जीव इह च स्थितोऽमुष्यपदं भवेत् ॥ १० ॥
सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः ।
श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम् ॥
तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः ॥ ११ ॥
अमुष्यपदपूर्वं तु पाशाद्यादि प्रयोजयेत् ।
प्रयोगेषु समाख्यातः प्राणाकर्षी महामनुः ॥ १२ ॥

इति श्रीफेत्कारिणीतन्त्रे महातन्त्रराजोत्तमे भूतलिपिप्राणप्रतिष्ठोपदेशकथनं नाम अष्टादशः पटलः ॥

—: ० :—

श्रीशिव उवाच—

मन्त्राणां दश संस्काराः कथ्यन्ते सिद्धिदायिनः ।
जननं जीवनं पश्चात् ताडनं बोधनं तथा ॥ १ ॥
अथाभिषेको विमलीकरणाप्यायने पुनः ।
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥ २ ॥
शोधिताः सकला मन्त्रा भवन्ति किल सिद्धिदाः ।
मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ ३ ॥
प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ।
एतज्जीवनमित्याहुर्मन्त्रतन्त्रविशारदाः ॥ ४ ॥
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ।
प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् ॥ ५ ॥
विलिख्य मन्त्रं तं मन्त्री प्रसूनैः करवीरजैः ।
तन्मन्त्राक्षरसंख्यातैर्हन्याद यत्नेन बोधनम् ॥ ६ ॥

स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया ।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये ॥ ७ ॥
संचिन्त्य मनसा मन्त्री सुषुम्नामूलमध्यतः ।
ज्योतिर्मन्त्रेण विधिवद् दहेन्मन्त्री मलत्रयम् ॥ ८ ॥
मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम् ।
तारं व्योमाग्निमनुयुग् दण्डी ज्योतिर्मनुर्मतः ॥ ९ ॥ (ॐ ह्रौम्)
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ।
तेन मन्त्रेण विधिवद् एतदाप्यायनं स्मृतम् ।
मन्त्रेण वारिणा मन्त्री तर्पणं तर्पणं स्मृतम् ॥ १० ॥
तारमायारमायोगो मनोर्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥ ११ ॥
संस्कारा दश संप्रोक्ताः सर्वतन्त्रेषु गोपिताः ।
यान् कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमाप्नुयात्[1] ॥१२॥

इति मन्त्राणां दोषोद्धाराय दशविधसंस्काराः ॥

अथात्र होमद्रव्याणां प्रमाणमभिधीयते ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥ १४ ॥
उक्तानि पञ्चगव्यानि समानानि मनीषिभिः ।
तत्समं मधु दुग्धञ्च यवमात्रमुदाहृतम् ॥ १५ ॥
दधि प्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसम्मिताः ।
पृथुकास्तत्समानाः स्युः सक्तवोऽपि तथोदिताः ॥ १६ ॥
गुडं पलार्धमानं स्याच्छर्करापि तथा स्मृता[2] ।
ग्रासार्धं चरुमानं स्यादिक्षुः पर्वावधिः स्मृतः ।
एकैकं पत्रपुष्पादि तथा धूपादि कल्पयेत् ॥ १७ ॥
कदलीफलनारङ्गफलान्येकैकशो विदुः ।
मातुलुङ्गं चतुःखण्डं पनसं दशधा स्मृतम् ॥ १८ ॥

---

१. इतः परम्—"मायिकं नाम योषोत्थं पौरुषं कार्मणं मलम् ।
आणवं तद्वद्विज्ञेयं निषिद्धं तु मलत्रयम् ॥" इत्यधिकः—क० ।

२. स्यादेवं शास्त्रविधानतः—ख० ।

अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ।
त्रिधाकृतं फलं विल्वं कपित्थं खण्डितं द्विधा ॥ १९ ॥
उर्वारुकफलं होमे चोदितं खण्डितं द्विधा ।
फलान्यन्यानि खण्डानि समिधः स्युर्दशाङ्गुलाः ॥ २० ॥
दूर्वात्रयं समुद्दिष्टं गुडूची चतुरङ्गुला ।
व्रीहयो मुष्टिमात्राः स्युर्मुद्गा माषा यवा अपि ॥ २१ ॥
तण्डुलाः स्युस्तदर्धांशाः कोद्रवा मुष्टिसम्मिताः ।
गोधूमा रक्तकलमा विहिता मुष्टिमानतः ॥ २२ ॥
तिलाश्चुल्लकमात्राः स्युः सर्षपास्तत्प्रमाणकाः ।
शुक्तिप्रमाणं लवणं मरीचान्यपि विंशतिः ॥ २३ ॥
पुरं वरदमानं स्याद् रामठं तत्समं स्मृतम् ।
चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च ॥ २४ ॥
तिन्तिडीवीजमानानि समुद्दिष्टानि देशिकैः ।
अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते[1] ॥ २५ ॥
अथात्र होमद्रव्याणां फलं शृणु वरानने ।
पालाशैर्मधुरत्रयेण कुसुमैः सिक्तैरशेषान्नरः
कामं चम्पकपाटलादिबकुलैः प्राप्नोति होमात्त्रयम् ।
वाह्यं विन्दुदलैः फलैरपि तथा साम्राज्यमम्भोरुहैर्
आयुः शाद्वलपल्लवैः सह गुडैः शान्तिं सहाज्यैस्तिलैः ॥२६॥
अघोरेण द्रविणं निगदत्वं प्राप्नुयाच्च सिद्धार्थैः ।
प्रीतिं गुडेन पत्रैः पुत्रान् सौख्यं फलैर्मनुजः ॥ २७ ॥
लाजैः सौभाग्यं धान्यमन्येन होमात्
पुष्पैः कादम्बैर्यक्षलोकाधिपत्यम् ।
मर्त्यः पुन्नागैरेभिर्विद्याधरत्वं
पुष्पैर्मालत्याः सिद्धगन्धर्वलोकान् ॥ २८ ॥

---

१. अत्रैवाध्यायसमाप्तिः—ख० ।

आकृष्टिर्यक्षिणीनां त्रिमधुरसहितैरर्जुनैः सर्षपैः स्याद्
वैश्या वश्या भवेयुर्जयरिपुकुसुमैर्किंशुकैश्चापि होमात्।
वश्याः स्युः कर्णिकारैरथ धरणिसुराः क्षत्रियाः काशमर्दै-
र्वैश्या नाकिं किरातैर्गण इव वशगाः पाटलाभिश्च शूद्राः ॥२९॥

छागलाङ्गजजाङ्गलेन होमात्परराष्ट्रं स्ववशं भवेदशेषम्।
अथ वैरिबलं पराङ्मुखं स्यान्मधुराक्तेन महापललेन वापि ॥३०॥

कटुत्रयनिम्बपत्रकेशैः सगुडैर्मारिपलान्वितैर्निशासु।
कटुतैलविमिश्रितैश्च होमादरयस्त्रिमुनिवासरान्म्रियन्ते ॥३१॥

लग्नजिदजरोमहरिद्राखण्डनखैर्विहितः किल होमः।
सप्तदिनात् प्रतिपक्षनृपाणां स्तम्भनकृत् प्रबलस्य बलस्य ॥३२॥

माषैर्मूकत्वं कोद्रवैर्व्याधिबाधा आतङ्केतिः स्यात् कलायैस्तु होमात्।
उन्मत्तस्य वृक्षजाभिः समिद्भिर्मृत्युः सप्ताहात् शाल्मलीवृक्षजाभिः ॥३३॥

कपिलाघृतसंयुक्तैर्मनुष्यो यवगोधूमतिलैः
षडस्रकुण्डे नियतं खेचरत्वमेति।
हुत्वा निशिचारेण समाहितान्तरात्मा
पलाशद्रुमकाष्ठैः परिज्वाल्य हव्याशनं चन्दनाभ्युक्षितैर्बन्धुजीवैः ॥३४॥

समस्तानि भूतानि वश्यानि होमाद्भवेयुः प्रियङ्गुप्रसूनैश्च तद्वत्।
नरो भक्ष्यभोज्यान्नपानानि हुत्वा परां सम्पदं प्राप्नुयादत्र लोके ॥३५॥

वटोदुम्बराद्यङ्कूरैः स्वादुवर्गान्वितैः।
काम्यतां मल्लिकाभिर्यशः स्यात् ॥ ३६ ॥
तुष्टिर्नीलाम्बुजैर्होमात् सौगन्धिकैर्भवेत् पुष्टिः।
कुमुदैर्जनवात्सल्यं पुत्राः मल्लिकुसुमैः स्युः ॥ ३७ ॥

यत्खलु अभीष्टतमं स्याद् भूमितले मनसो मनुजानाम्।
तत्सकलं मधुरत्रयहोमात् स्यादचिरेण स्वशक्तिमुपेतुम् ॥३८॥

घृताहुतिर्द्विगुणितषोडशाङ्गुलाभिर्वरातत इह मध्यमार्धतः।
गजाङ्गुलोन्नतिरधमा तिलोद्भवं तथैव माक्षिकमपि पञ्चगव्ययुक् ॥३९॥

एकं चुल्लकं पयसो दध्नस्तद्वद्घवाग्वाश्च।
एकैकापूपनिकरपायसमक्षप्रमाणञ्च ॥ ४० ॥
कदलीफलमेकैकं मातुलुङ्गनागरङ्गञ्च ।
पनसं दशखण्डं गुडखण्डं स्यात्फलं वैल्वम् ॥ ४१ ॥
करकट्टिका गुडखण्डा दलपुष्पफलान्यखण्डानि।
इत्यादिकं सर्वद्रव्यं होतव्यं विधिना ततः।
सर्वशान्तिमवाप्नोति नात्र कार्या विचारणा ॥ ४२ ॥

ॐ तत्सत् ॐ शान्तिः ॐ शान्तिः ।

इति फेत्कारिणीमहातन्त्रे जननादिदशसंस्कारक्रियाहोमद्रव्य-
संख्यादिकथनं नामोनविंशः पटलः ॥

—: ० :—

श्रीशिव उवाच—

नवधाकृतभूभागे न्यसेन्मध्ये स्वरान् क्रमात्।
कादिवर्णान् सप्तसंख्यानीशाने लक्षमित्यपि ॥ १ ॥

क्षेत्राद्यर्णं त्रये कोष्ठे दीपस्थानं मुखाभिधम्।
हस्तौ कुक्षी च पादौ द्वौ शिष्टं पुच्छमुदाहृतम् ॥ २ ॥

सिद्धिश्चास्ये करेऽल्पायुरुदासत्वं तु पार्श्वयोः।
दुःखं चरणयोः पीडा पुच्छे कूर्मतनौजपात् ॥ ३ ॥

नामाद्यक्षरमारभ्य यावन्मन्त्राद्यदर्शनम्।
सप्तप्लुतं त्रिभिः शिष्टमृणं त्याज्यं धनात्मकम् ॥ ४ ॥

मन्त्राद्यक्षरमारभ्य यावन्नामादिदर्शनम्।
त्रिभिः प्लुतं सप्तशिष्टं स्वग्राह्यमीदृशात्मकम् ॥ ५ ॥

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।
सपिण्डाक्षरमन्त्राणां अरिमित्रं न चार्चयेत् ॥ ६ ॥

एकाक्षरे त्रिकूटे च मालामन्त्रे वरानने ।
स्वप्नलब्धे स्त्रिया दत्ते मित्रामित्रं न चार्चयेत् ॥ ७ ॥

सिद्धः साध्यः सुसिद्धोऽरिश्चतुर्धा तत्स्फुटं भवेत् ।
द्वारशारे अकडमे जिज्ञासान्नसमन्त्रयोः ॥ ८ ॥

नवैकपञ्चमे सिद्धः साध्यः षड्दशयुग्मके ।
सुसिद्धस्त्रिसप्तके रुद्रे द्वादशाष्टचतुर्ष्वरिः ॥ ९ ॥

चतुष्कोष्ठे स्वरान् वर्णानीशानादिक्रमाल्लिखेत् ।
चक्रेऽकथह इत्युक्तः सिद्धादौ नामवर्णयोः ॥१०॥

इति पश्चिमाम्नाये फेत्कारिणीतन्त्रे कूर्मचक्रऋणिधनिसिद्धसाध्या-
ख्यानादिनाम विंशः पटलः ॥

—×—

श्रीशिव उवाच--

क्रोधमन्त्रं जपेल्लक्षं कोट्यादित्यसमप्रभम् ।
अट्टहासं महारौद्रं प्रत्यालीढं महाप्रभम् ॥ १ ॥

दक्षिणे वज्रसंयुक्तं तर्जनीं वामपाणिना ।
विषादिक्रोधवज्रास्त्रं क्रोधराजमहामनुम् ॥ २ ॥

विषं हनपदं गृह्य विध्वंसयपदं ततः ।
नाशयेति पदं चोक्त्वा पाशं क्रोधास्त्रसंयुतम् ॥ ३ ॥

विषं च वज्रज्वालेन हनयुग्ममतः परम् ।
सर्वभूतान् ततः कूर्चमस्त्रान्ते भूतमारणम् ॥ ४ ॥

क्रोधाधिपं व्योमवक्त्रं वज्रपाणिं सुरान्तकम् ।
कालकल्पतरुं नत्वा भूतिनीसिद्धिरुच्यते ॥ ५ ॥

आद्या विभूषिणी देवी परा कुण्डलधारिणी ।
तारिणी सिंहिनी चाथो हंसिनी च ततो नटी ॥ ६ ॥

( ॐ हन विध्वंसय नाशय आँ हूँ फट् )[1]
चेटिका किन्नरी प्रोक्ता भूतिनी तु रतिप्रिया ।
क्रोधास्त्रद्वयनामान्ते भूतवीर्यस्त्रिकूर्चतः ॥ ७ ॥

( आँ हूँ वज्र फट् )
तारलज्जाद्वयादस्त्रद्वयादेव विभूषिणी ।
क्रोधद्वयं तु मन्त्रोऽयं विभूषिण्या उदाहृतः ॥ ८ ॥

( ॐ वज्रज्वालेन हन हन सर्वभूतान् हूँ फट् )
कर्त्री चैककरे परे नरशिरस्तुङ्गाकृतिर्भीषणा
दन्तान्तर्गतमांसशोणितवसासंयु[2]क्तभूतव्रजा ।
कालव्यालकरालशालविटपव्यालम्बिपृष्ठाङ्कका[3]
[4]यस्याः केशकुलाकुलाखिलमही शैलान्तमारक्षतु ॥ ९ ॥

एकवृक्षतटं गत्वा यामिन्यां प्रवसंस्त्व्यहम्[5] ।
जपेदष्टसहस्रं तु ध्यायन्नेकाग्रमानसः ॥ १० ॥
जपान्ते पूजनं नाम्ना पुरो धूपं निवेद्य च ।
प्रजपेदर्धरात्रे तु समायाति विभूषिणी ॥ ११ ॥

चन्दनोदकमिश्रेण दत्तेऽर्घ्ये तुष्यते ध्रुवम् ।
माता वा भगिनी भार्या तुष्टा भवति कामिता ॥ १२ ॥

---

१. हूँ हूँ फट् फट् त्रिभूषिणी भूतिन्यै हूँ हूँ हूँ हूँ ॐ ह्लीं ह्लीं फट् फट्–क० ।
२. संसक्त–क० ।
३. पृष्ठक्षमा–क० ।
४. ध्येया प्रज्वलितदहननिभा विभूषिणी सा रक्षतु-क० ।
५. तु द्वियामके–ख० ।

करामलयितुं कृत्वा माता भूत्वा जगत्त्रयम् ।
शताष्टपरित्रारस्य ददात्यञ्जनभूषणम् ॥ १३ ॥

भगिनी चेन्महाभागा सहस्रयोजनादपि ।
ददाति स्त्रियमानीय दिव्यं रसरसायनम् ॥ १४ ॥

भार्या चेत् पृष्ठमारोप्य स्वर्गं नयति यच्छति ।
दीनाराणां सहस्रं तु रसं चैव रसायनम् ॥ १५ ॥

सर्वाशाः पूरयत्येव सदा देवी विभूषिणी ।
ध्रुवमायास्त्रद्वयतः प्रोक्ता कुण्डलधारिणी ॥ १६ ॥

त्रिकूर्चास्त्रः समाख्यातः कुण्डलधारिणीमनुः ।
( ॐ ॐ ह्रीं ह्रीं फट् फट् कुण्डलधारिणी हूँ हूँ हूँ फट् )
कर्णे कुण्डलधारिणी शशिमुखी वीणावती सम्मिता
शैलश्रोणिविलम्बिकाञ्चिविततव्यामुग्धलोकत्रया ।
मुक्ताहारविहारिणी प्रविलसत्प्रोत्तुङ्गकुम्भस्तनी
पायात्कुण्डलधारिणी त्रिजगतामानन्दसन्दोहभूः ॥ १७ ॥

श्मशाने प्रजपेद् रात्रावयुतं कुण्डलधारिणी ।
आयाति रुधिरेणार्घ्यो देयस्तुष्टो ददात्यपि ॥ १८ ॥
किं कर्तव्यं मया वत्स मातेति भव साधकः ।
पञ्चशतवासराणि त्रैलोक्यमपि दास्यति ॥ १९ ॥

क्रोधद्वयास्त्रयुगतः सिन्दूरहारिणीपदम् ।
कूर्चत्रयास्त्रसंप्रोक्तः सिन्दूरहारिणीमनुः ॥ २० ॥

( हूँ हूँ फट् फट् सिन्दूरहारिणी हूँ हूँ हूँ फट् )
स्वर्णालङ्कृतहारिणी चलदलव्यालोलशाखाम्बरा
सोत्कण्ठीकृतगात्रकल्पसुभगा शुभ्रांशुका सस्मिता ।
अन्तःसन्ततकान्तिकान्तमलिना त्रैलोक्यशोभागता
पायाद् वल्लभमूलराहुलतिका सिन्दूरहारिण्यसौ ॥ २१ ॥

शून्यदेवालयं गत्वा जपेदष्टसहस्रकम् ।
शीघ्रमायात्यागता सा भार्या भवति कामिता ॥ २२ ॥

पञ्चविंशतिदीनारान् वस्त्रालङ्कारभूषणा ।
रक्षति द्वादशजनान् देवी सिन्दूरहारिणी ॥ २३ ॥

लज्जाद्वयास्त्रयुगतः सिंहिनीति पदं ततः ।
क्रोधबीजत्रयाज्ज्ञातः कीर्तितः सिंहिनीमनुः ॥ २४ ॥

( ह्रीं ह्रीं फट् फट् सिंहिनी हूँ हूँ हूँ फट् )

शैलाग्रद्रुमदुर्गदन्तुरदरीदुर्गान्तदैत्यस्थिता
केशस्रस्तसमस्तविश्वचरणा प्रभ्रष्टचन्द्रासनी ।
यावत्तारविदन्तधारणवनप्रक्षुब्धसिद्धाङ्गना
सेयं पातु समस्तमस्तककुलव्यालम्बिमालाकुला ॥ २५ ॥

गत्वैकलिङ्गं यामिन्यां प्रजपेदयुतं मनुम् ।
ततो हृष्टाऽतिवरदा सिंहिन्यायाति पूजिता ॥ २६ ॥

किं करोमि वदत्येवं भार्या भवति कामिता ।
दीनारं वस्त्रयुगलं दधद् रसरसायनम् ॥ २७ ॥

तारस्त्रिमूर्त्यस्त्रयुगाद् हंसिनी भूतिनी ततः ।
त्रिकूर्चास्त्रं च कथितो हंसि(नी)मनुरुत्तमः ॥ २८ ॥

( ॐ ॐ फट् फट् हंसिनी भूतिनी हूँ हूँ हूँ फट् )

शुभ्राशुभ्रसरोजतुल्यनयना नागा गले लम्बिता
प्रारब्धध्वनिमुग्धमाधववधूसंसेविता सादरम् ।
किञ्चित् तिर्यगपाङ्गलोचनवती व्यामुग्धदीक्षामुखी
मुक्तायुक्तविलोलहारलतिका श्रीहंसिनी पातु वः ॥ २९ ॥

वज्रपाणिगृहं गत्वा प्रतिमां शोभनां लिखेत् ।
हयमारेण संपूज्य जपेदयुतसंख्यकम् ॥ ३० ॥
यावदर्धनिशां देवी हंसिन्यायाति निश्चितम् ।
चन्दनार्घ्यप्रदानेन हृष्टा वदति साधकम् ॥ ३१ ॥

किं ते मयाद्य कर्तव्यं किङ्करी भव साधकः ।
वस्त्रालङ्कारभोज्यादि व्ययार्थं संप्रयच्छति ॥ ३२ ॥
तदशेषव्ययाभावाद् न ददाति प्रकुप्यति ।
तारं क्रोधास्त्रयुगतो नटीतिपदमुद्धरेत् ॥ ३३ ॥
कूर्चत्रयोदस्त्रान्तोऽयं कथितो नर्तकीमनुः ।
( [1]ॐ हूँ हूँ फट् फट् नटी हूँ हूँ हूँ फट् )

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि चोटिकासाधनोत्तमम् ।
यत्प्रसादं नरो लब्ध्वा सर्ववाञ्छितमाप्नुयात् ॥ ३४ ॥
ताराचक्राधारयुगं नटीतिपदमुद्धरेत् ।
कूर्चत्रयलज्जान्तोऽयं कथितो नर्तकीमनुः ॥ ३५ ॥
फुल्लेन्दीवरसुन्दराम्बरमुखीमुत्तुङ्गकुम्भस्तनीं
खेलत्खञ्जनयुग्ममीननयनामानन्ददायिस्मिताम् ।
क्षीराम्भोनिधिकूलवन्दिवनितामानीलवासासनीं
चन्द्रोद्यत्सुनखादिनीं मणिकुलव्याहारकारोत्तराम् ॥ ३६ ॥
नीचगामङ्गनां गत्वा सप्ताहं जपपूजने ।
कृत्वार्कास्तमने धूपं चन्दनेन जपेदपि ॥ ३७ ॥
कामभोगप्रदात्री सा भार्या भवति नर्तकी ।
सुवर्णपलमेकं तु व्ययार्थं त्यज्य गच्छति ॥ ३८ ॥
दिने दिने नटी देवी स्थायिनी भवति ध्रुवम् ।
तारकूर्चद्वयं चास्त्रद्वयं चेटी ततः परम् ॥ ३९ ॥
ततः क्रोधद्वयं दत्त्वा चेटीमन्त्रोत्तमो मतः ।
( ॐ हूँ हूँ फट् फट् चेटी हूँ हूँ )

---

१. कोष्ठान्तर्गतं नास्ति—क० ।

गच्छन्ती मितभाषिणी शशिमुखी भ्रष्टोत्तरीयाम्बरा
बिभ्रन्ती कलशं सरोजममलं स्वर्णान्तसीमन्तिनी ।
श्रीखण्डादिविलेपनामलवपुः सौरभ्यसम्भाविता
किञ्चिद् वक्रसमाचितापि कबरी पायाच्चिरं चेटिका ॥ ४० ॥
कुत्रापि भीषणस्थाने नामोच्चारणमात्रतः ।
ध्रुवं चेटी समागत्य चेटीकर्म करोत्यपि ॥ ४१ ॥
अथवा स्वगृहद्वारे त्र्यहं रात्रौ जपं चरेत् ।
आगत्य निलयं देवी चेटीकर्म करोति सा ॥ ४२ ॥
तारकूर्चास्त्रयुग्मं तु कामेश्वरीभूतिन्यतः ।
अन्ते क्रोधद्वयं कामेश्वरीमन्त्र उदाहृतः ॥ ४३ ॥
( ॐ हूँ फट् फट् कामेश्वरी भूतिन्यै हूँ हूँ । )
कामं युद्धसमागता मधुरता वासन्तपुष्पान्विता
गायन्ती मधुरस्वरा स्मितमुखी वीणावती चञ्चला ।
रक्ताम्भोजविलोचना मधुमदैर्युक्ता समन्तादियं
पायात् पुष्पधनुर्धरा मधुमुखी कामेश्वरी भूतिनी ॥ ४४ ॥
मातृस्थानं समागत्य कृत्वा मांसस्य भक्षणम् ।
मांसादीनि बलिं दत्त्वा सहस्रं सप्तवासरान् ॥ ४५ ॥
जपेन्नियतमायाति रुधिरार्घ्यं निवेदयेत् ।
कामेश्वरी भवेत्तुष्टा भार्या भवति कामिता ॥ ४६ ॥
सर्वाशाः पूरयत्येव राज्यं यच्छति निश्चितम् ।
तारं लज्जां च कूर्चास्त्रद्वयमुक्त्वा रतिप्रिये ।
क्रोधद्वयास्त्रयुक् कामेश्वरीतन्त्रोक्तवत् क्रिया ॥ ४७ ॥
( ॐ हूँ फट् फट् रतिप्रिये हूँ हूँ फट् )
हेमप्राकारमध्ये सुरविटपितले हेमपीठाधिरूढा
यक्षीबाला विसर्पत्परिमलकुसुमोद्भासिधम्मिल्लभारा ।
पीनोत्तुङ्गस्तनाढ्या कुवलयनयना रक्तवर्णा कराभ्यां
भ्राम्यद् रक्तोत्पलाभा सकलसुरनता दिव्यभूषाङ्गहारा ॥४८॥

क्रोधद्वयास्त्रयुगतो देवीति पदमुद्धरेत् ।
अन्ते क्रोधद्वयं गृह्य देवीमन्त्रमनुत्तमम् ॥ ४९ ॥

दिव्यकामिकहेमाभा कुमारी दिव्यरूपिणी ॥
( हूँ हूँ फट् फट् देवि हूँ हूँ )
सर्वालङ्कारसंयुक्ता भार्या भवति कामिता ॥ ५० ॥

रात्रौ देवगृहं गत्वा तत्र शय्यां प्रकल्पयेत् ।
सितवस्त्रं चन्दनञ्च जातीपुष्पं प्रदापयेत् ॥ ५१ ॥

धूपञ्च गुग्गुलं कृत्वा सहस्रं प्रजपेन्मनुम् ।
जपान्ते नियतायाति चुम्बनालिङ्गनादिभिः ॥ ५२ ॥

कामिता भव भार्येयं सत्यं देवाङ्गनायिका ।
ददात्यष्टौ दिनान्यन्ते दिव्यं वस्त्रयुगं ततः ॥ ५३ ॥

कामिकं भोजनं दिव्यं परिवारस्य दास्यति ।
अन्यच्च वैश्रवणगृहाद् द्रव्यमानीय यच्छति ॥ ५४ ॥

एतज्जप्त्वा सहस्राणि जपान्ते सिध्यति ध्रुवम् ।
मुहुर्मुहुर्जपेन्मन्त्रमित्याह क्रोधभूपतिः ॥ ५५ ॥

फेत्कारिणीतन्त्र इयं मयोक्ता कृत्या समस्तागमसारभूता ।
शत्रोर्विनाशाय धनाय सम्यक् सद्भिः सदेयं नियतं नियोज्या ॥५६॥

दुःखाय हि दुर्जनसिंहा पराघातिनी कृत्या ।
गदितेष्टसिद्धिदात्री मया तत्र फेत्कारिणीतन्त्रे ॥ ५७ ॥

सृष्टिस्थितिविनाशानामद्वितीयातिभैरवी ।
महाकृत्या स्मृता नित्यमशुभारिविनाशिनी ॥ ५८ ॥

इति श्रीफेत्कारिणीतन्त्रे देवीश्वरसंवादे चेटिकासाधनं नाम
एकविंशतितमः पटलः समाप्तः ॥

समाप्तश्चायं ग्रन्थः ॥

—: ० :—

# ज्ञानसङ्कलिनीतन्त्रम्

कैलाशशिखरासीनं देवदेवं जगद्गुरुम् ।
पृच्छति स्म महादेवी ब्रूहि ज्ञानं महेश्वर ॥ १ ॥

देवी उवाच

कुतः सृष्टिर्भवेद् देव कथं सृष्टिर्विनश्यति ।
ब्रह्मज्ञानं कथं देव सृष्टिसंहारवर्जितम् ॥ २ ॥

ईश्वर उवाच

अव्यक्ताच्च भवेत् सृष्टिरव्यक्ताच्च विनश्यति ।
अव्यक्तं ब्रह्मणो ज्ञानं सृष्टिसंहारवर्जितम् ॥ ३ ॥

ओङ्कारादक्षरात् सर्वास्त्वेता विद्याश्चतुर्दश ।
मन्त्र-पूजा-तपो-ध्यानं कर्माकर्म तथैव च ॥ ४ ॥

षडङ्गं वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रपुराणानि एता विद्याश्चतुर्दश ॥ ५ ॥

तावद् विद्या भवेत् सर्वा यावद् ज्ञानं न जायते ।
ब्रह्मज्ञानं पदं ज्ञात्वा सर्वविद्या स्थिरा भवेत् ॥ ६ ॥

वेदशास्त्रपुराणानि सामान्यगणिका इव ।
या पुनः शाम्भवी विद्या गुप्ता कुलवधूरिव ॥ ७ ॥

देहस्थाः सर्वविद्याश्च देहस्थाः सर्वदेवताः ।
देहस्थाः सर्वतीर्थानि गुरुवाक्येन लभ्यते ॥ ८ ॥

अध्यात्मविद्या हि नृणां सौख्यमोक्षकरी भवेत् ।
धर्मं कर्म तथा जप्यमेतत् सर्वं निवर्तते ॥ ९ ॥

काष्ठमध्ये यथा वह्निः पुष्पे गन्धः पयोऽमृतम् ।
देहमध्ये तथा देवः पुण्यपापविवर्जितः ॥ १० ॥

इडा भगवती गङ्गा पिङ्गला यमुना नदी ।
इडापिङ्गलयोर्मध्ये सुषुम्ना च सरस्वती ॥ ११ ॥

त्रिवेणीसंगमो यत्र तीर्थराजः स उच्यते ।
तत्र स्नानं प्रकुर्वीत सर्वपापैः प्रमुच्यते ॥ १२ ॥

देवी उवाच

कीदृशी खेचरी मुद्रा विद्या च शाम्भवी पुनः ।
कीदृश्यध्यात्मविद्या च तन्मे ब्रूहि महेश्वर ॥ १३ ॥

ईश्वर उवाच

मनः स्थिरं यस्य विनावलम्बनं
वायुः स्थिरो यस्य विना निरोधनम् ।
दृष्टिः स्थिरा यस्य विनावलोकनं
सा एव मुद्रा विचरन्ती खेचरी ॥ १४ ॥

वालस्य मूर्खस्य यथैव चेतः
स्वप्नेन हीनोऽपि करोति निद्राम् ।
ततो गतः पथो निरावलम्बः
सा एव विद्या विचरन्ती शाम्भवी ॥ १५ ॥

देवी उवाच

देवदेव जगन्नाथ ब्रूहि मे परमेश्वर ।
दर्शनानि कथं देव भवन्ति च पृथक् पृथक् ॥ १६ ॥

ईश्वर उवाच

त्रिदण्डी च भवेद् भक्तो वेदाभ्यासरतः सदा ।
प्रकृतिवादरताः शाक्ता बौद्धा शून्यातिवादिनः ॥ १७ ॥

अतोर्ध्वं गामिनो ये वा तत्त्वज्ञा अपि तादृशाः ।
सर्वं नास्तीति चार्वाका जल्पन्ति विषयाश्रिताः ॥ १८ ॥

उमा पृच्छति हे देव पिण्डब्रह्माण्डलक्षणम् ।
पञ्चभूतं कथं देव गुणाः के पञ्चविंशतिः ॥ १९ ॥

ईश्वर उवाच

अस्थि मांसं नखं चैव त्वङ्लोमानि च पञ्चमम् ।
पृथ्वी पञ्चगुणा प्रोक्ता ब्रह्मज्ञानेन भासते ॥ २० ॥
शुक्रशोणितमज्जा च मलं मूत्रं च पञ्चमम् ।
अपां पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भासते ॥ २१ ॥
निद्रा क्षुधा तृषा चैव क्लान्तिरालस्यपञ्चमम् ।
तेजः पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भासते ॥ २२ ॥
धारणं चालनं क्षेपं संकोचं प्रसरं तथा ।
वायोः पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भासते ॥ २३ ॥
कामं क्रोधं तथा मोहं लज्जा लोभश्च पञ्चमम् ।
नभः पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भासते ॥ २४ ॥
आकाशाज्जायते वायुर्वायोरुत्पद्यते रविः ।
रवेरुत्पद्यते तोयं तोयादुत्पद्यते मही ॥ २५ ॥
मही विलीयते तोये तोयं विलीयते रवौ ।
रविर्विलीयते वायौ वायुर्विलीयते तु खे ॥ २६ ॥
पञ्चतत्त्वाद् भवेत् सृष्टिस्तत्त्वात् तत्त्वं विलीयते ।
पञ्चतत्त्वात् परं तत्त्वं तत्त्वातीतं निरञ्जनम् ॥ २७ ॥
स्पर्शनं रसनं चैव घ्राणं चक्षुश्च श्रोत्रकम् ।
पञ्चेन्द्रियमिदं तत्त्वं मनः साधकमिन्द्रियम् ॥ २८ ॥
ब्रह्माण्डलक्षणं सर्वं देहमध्ये व्यवस्थितम् ।
साकाराश्च विनश्यन्ति निराकारो न नश्यति ॥ २९ ॥
निराकारं मनो यस्य निराकारसमो भवेत् ।
तस्मात् सर्वप्रयत्नेन साकारं तु परित्यजेत् ॥ ३० ॥

देवी उवाच

आदिनाथ मयि ब्रूहि सप्तधातुः कथं भवेत् ।
आत्मा चैवान्तरात्मा च परमात्मा कथं भवेत् ॥ ३१ ॥

ईश्वर उवाच

शुक्रशोणितमज्जा च मेदो मांसं च पञ्चमम् ।
अस्थि त्वक् चैव सप्तैते शरीरेषु व्यवस्थिताः ॥ ३२ ॥
शरीरं चैवमात्मानमन्तरात्मा मनो भवेत् ।
परमात्मा भवेच्छून्यं मनो यत्र विलीयते ॥ ३३ ॥
रक्तधातुर्भवेन्माता शुक्रधातुर्भवेत् पिता ।
शून्यधातुर्भवेत् प्राणो गर्भपिण्डं प्रजायते ॥ ३४ ॥

देवी उवाच

कथमुत्पद्यते वाचा कथं वाचा विलीयते ।
वाक्यस्य निर्णयं ब्रूहि पश्य ज्ञानमुदाहर ॥३५॥

ईश्वर उवाच

अव्यक्ताज्जायते प्राणः प्राणादुत्पद्यते मनः ।
मनसोत्पद्यते वाचा मनो वाचा विलीयते ॥३६॥

देवी उवाच

कस्मिन् स्थाने वसेत् सूर्यः कस्मिन् स्थाने वसेच्छशी ।
कस्मिन् स्थाने वसेद् वायुः कस्मिन् स्थाने वसेन्मनः ॥३७॥

ईश्वर उवाच

तालुमूले स्थितश्चन्द्रो नाभिमूले दिवाकरः ।
सूर्याग्रे वसते वायुश्चन्द्राग्रे वसते मनः ॥३८॥
सूर्याग्रे वसते चित्तं चन्द्राग्रे जीवितं प्रिये ।
एतद्युक्तं महादेवि गुरुवाक्येन लभ्यते ॥३९॥

देवी उवाच

कस्मिन् स्थाने वसेच्छक्तिः कस्मिन् स्थाने वसेच्छिवः।
कस्मिन् स्थाने वसेत् कालो जरा केन प्रजायते ॥४०॥

ईश्वर उवाच

पाताले वसते शक्तिर्ब्रह्माण्डे वसते शिवः।
अन्तरिक्षे वसेत् कालो जरा तेन प्रजायते ॥४१॥

देवी उवाच

आहारं काङ्क्षते कोऽसौ भुञ्जते पिबते कथम्।
जाग्रत् स्वप्नसुषुप्तौ च को वाऽसौ प्रतिबुध्यति ॥४२॥

ईश्वर उवाच

आहारं काङ्क्षते प्राणो भुञ्जतेऽपि हुताशनः।
जाग्रत्स्वप्नसुषुप्तौ च वायुश्च प्रतिबुध्यति ॥४३॥

देवी उवाच

को वा करोति कर्माणि को वा लिप्येत पातकैः।
को वा करोति पापानि को वा पापैः प्रमुच्यते ॥४४॥

शिव उवाच

मनः करोति पापानि मनो लिप्येत पातकैः।
मनश्च तन्मना भूत्वा न पुण्यैर्न च पातकैः ॥४५॥

देवी उवाच

जीवः केन प्रकारेण शिवो भवति कस्य च।
कार्यस्य कारणं ब्रूहि कथं किञ्च प्रसादनम् ॥४६॥

शिव उवाच

भ्रान्तिबद्धो भवेज्जीवो भ्रान्तिमुक्तः सदाशिवः।
कार्यं हि कारणं त्वञ्च पुनर्बोधो विशिष्यते ॥४७॥

मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ।
इदं तीर्थमिदं तीर्थं भ्रमन्ति तामसा जनाः ॥४८॥

आत्मतीर्थं न जानाति कथं मोक्षो वरानने ॥

न वेदं वेदमित्याहुर्वेदो ब्रह्म सनातनम् ।
ब्रह्मविद्यारतो यस्तु स विप्रो वेदपारगः ॥४९॥

मथित्वा चतुरो वेदान् सर्वशास्त्राणि चैव हि ।
सारं तु योगिभिः पीतं तक्रं पिबन्ति पण्डिताः ॥५०॥

उच्छिष्टं सर्वशास्त्राणि सर्वा विद्या मुखे मुखे ।
नोच्छिष्टं ब्रह्मणो ज्ञानमव्यक्तं चेतनामयम् ॥५१॥

न तपस्तप इत्याहुर्ब्रह्मचर्यं तपोत्तमम् ।
ऊर्ध्वरेता भवेद् यस्तु स देवो न तु मानुषः ॥५२॥

न ध्यानं ध्यानमित्याहुर्ध्यानं शून्यगतं मनः ।
तस्य ध्यानप्रसादेन सौख्यं मोक्षं न संशयः ॥५३॥

न होमं होममित्याहुः समाधौ तत्तु भूयते ।
ब्रह्माग्नौ हूयते प्राणं होमकर्म तदुच्यते ॥५४॥

पापकर्म भवेद् भव्यं पुण्यं चैव प्रवर्तते ।
तस्मात् सर्वप्रयत्नेन ताद्रूप्यं च त्यजेद् बुधः ॥५५॥

यावद् वर्णं कुलं सर्वं तावज्ज्ञानं न जायते ।
ब्रह्मज्ञानपदं ज्ञात्वा सर्ववर्णविवर्जितः ॥५६॥

देवी उवाच—

यत्त्वया कथितं ज्ञानं नाहं जानामि शङ्कर ।
निश्चयं ब्रूहि देवेश मनो यत्र विलीयते ॥५७॥

शंकर उवाच—

मनो वाक्यं तथा कर्म तृतीयं यत्र लीयते।
विना स्वप्नं यथा निद्रा ब्रह्मज्ञानं तदुच्यते ॥५९॥

एकाकी निस्पृहः शान्तश्चिन्तानिद्राविवर्जितः।
बालभावस्तथा भावो ब्रह्मज्ञानं तदुच्यते ॥६०॥

श्लोकार्धं तु प्रवक्ष्यामि यदुक्तं तत्त्वदर्शिभिः।
सर्वचिन्तापरित्यागो निश्चिन्तो योग उच्यते ॥६१॥

निमिषं निमिषार्द्धं वा समाधिमधिगच्छति।
शतजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥६२॥

देवी उवाच—

कस्य नाम भवेच्छक्तिः कस्य नाम भवेच्छिवः।
एतन्मे ब्रूहि भो देव पश्चाज्ज्ञानं प्रकाशय ॥६३॥

ईश्वर उवाच—

चलच्चित्ते वसेच्छक्तिः स्थिरचित्ते वसेच्छिवः।
स्थिरचित्तो भवेद्देवि स देहस्थोऽपि सिध्यति ॥६४॥

देवी उवाच—

कस्मिन् स्थाने त्रिधा शक्तिः षट्चक्रं च तथैव च।
एकविंशतिब्रह्माण्डं सप्तपातालमेव च ॥६५॥

ईश्वर उवाच—

ऊर्ध्वशक्तिर्भवेत् कण्ठः अधशक्तिर्भवेद् गुदः।
मध्यशक्तिर्भवेन्नाभिः शक्त्यतीतं निरञ्जनम् ॥६६॥

आधारं गुह्यचक्रं तु स्वाधिष्ठानं च लिङ्गकम्।
चक्रभेदं मयाख्यातं चक्रातीतं नमो नमः ॥६७॥

कायोर्ध्वं च ब्रह्मलोकः स्वाधः पातालमेव च ।
ऊर्ध्वमूलमधःशाखं वृक्षाकारं कलेवरम् ॥६८॥

देवी उवाच—

शिव शंकर ईशान ब्रूहि मे परमेश्वर ।
दशवायुः कथं देव दशद्वाराणि चैव हि ॥६९॥

ईश्वर उवाच—

हृदि प्राणः स्थितो वायुरपानो गुदसंस्थितः ।
समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥७०॥
व्यानः सर्वगतो देहे सर्वगात्रेषु संस्थितः ।
नाग ऊर्ध्वगतो वायुः कूर्मस्तीर्थानि संस्थितः ॥७१॥
कृकरः क्षोभिते चैव देवदत्तोऽपि जृम्भणे ।
धनञ्जयो नादघोषे निविशेच्चैव शाम्यति ॥ ७२ ॥
एष वायुर्निरालम्बो योगिनां योगसम्मतः ।
नवद्वारं च प्रात्यक्षं दशमं मन उच्यते ॥ ७३ ॥

देवी उवाच—

नाडीभेदं च मे ब्रूहि सर्वगात्रेषु संस्थितम् ।
शक्तिः कुण्डलिनी चैव प्रसूता दशनाडिका ॥ ७४ ॥

ईश्वर उवाच—

इडा च पिङ्गला चैव सुषुम्ना चोर्ध्वगामिनी ।
गान्धारी हस्तिजिह्वा च प्रसवा गमनायता ॥ ७५ ॥
अलम्बुसा यशा चैव दक्षिणाङ्गे च संस्थिताः ।
कुलश्च शङ्खिनी चैव वामाङ्गे च व्यवस्थिताः ॥ ७६ ॥
एतासु दशनाडीषु नानानाडीप्रसूतिका ।
द्विसप्ततिसहस्राणि शरीरे नाडिकाः स्मृताः ॥ ७७ ॥

एता यो विन्दते योगी स योगी योगलक्षणः ।
ज्ञाननाडी भवेद्देवी योगिनां सिद्धिदायिनी ॥ ७८ ॥

देवी उवाच—

भूतनाथ महादेव ब्रूहि मे परमेश्वर ।
त्रयो देवा कथं देव त्रयो भावास्त्रयो गुणाः ॥ ७९ ॥

ईश्वर उवाच—

रजोभावस्थितो ब्रह्मा सत्त्वभावस्थितो हरिः ।
क्रोधभावस्थितो रुद्रस्त्रयो देवास्त्रयो गुणाः ॥ ८० ॥
एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।
नानाभावं मनो यस्य तस्य मुक्तिर्न जायते ॥ १ ॥
वीर्यरूपी भवेद् ब्रह्मा वायुरूपः स्थितो हरिः ।
मनोरूपः स्थितो रुद्रस्त्रयो देवास्त्रयो गुणाः ॥ ८२ ॥
दयाभावस्थितो ब्रह्मा शुद्धभावस्थितो हरिः ।
अग्निभावस्थितो रुद्रस्त्रयो देवास्त्रयो गुणाः ॥ ८३ ॥
एकं भूतं परं ब्रह्म जगत् सर्वं चराचरम् ।
नानाभावं मनो यस्य तस्य मुक्तिर्न जायते ॥ ८४ ॥
अहं सृष्टिरहं कालोऽप्यहं ब्रह्माऽप्यहं हरिः ।
अहं रुद्रोऽप्यहं शून्यमहं व्यापी निरञ्जनम् ॥ ८५ ॥
अहं सर्वात्मको देवि निष्कामो गगनोपमः ।
स्वभावनिर्मलं स्वान्तं स एवाहं न संशयः ॥ ८६ ॥
जितेन्द्रियो भवेच्छूरो ब्रह्मचारी सुपण्डितः ।
सत्यवादी भवेद् भक्तो दाता धीरो हितेरतः ॥ ८७ ॥
ब्रह्मचर्यं तपोमूलं धर्ममूला दया स्मृता ।
तस्मात् सर्वप्रयत्नेन दयाधर्मं समाश्रयेत् ॥ ८८ ॥

देवी उवाच—

योगेश्वर जगन्नाथ उमायाः प्राणवल्लभ ।
वेदसन्ध्या तपो ध्यानं होमकर्म कुलं कथम् ॥ ८९ ॥

ईश्वर उवाच—

अश्वमेधसहस्राणि वाजपेयशतानि च ।
ब्रह्मज्ञानसमं पुण्यं कलां नार्हति षोडशीम् ॥ ९० ॥

सर्वदा सर्वतीर्थेषु यत् फलं लभते शुचिः ।
ब्रह्मज्ञानसमं पुण्यं कलां नार्हति षोडशीम् ॥ ९१ ॥

न मित्रं न च पुत्राश्च न पिता न च बान्धवाः ।
न स्वामी च गुरोस्तुल्यं यद्दृष्टं परमं पदम् ॥ ९२ ॥

न च विद्यागुरोस्तुल्यं न तीर्थं न च देवताः ।
गुरोस्तुल्यं न वै कोऽपि यद्दृष्टं परमं पदम् ॥ ९३ ॥

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा चानृणी भवेत् ॥ ९४ ॥

यस्य कस्य न दातव्यं ब्रह्मज्ञानं सुगोपितम् ।
यस्य कस्यापि भक्तस्य सद्गुरुस्तस्य दीयते ॥ ९५ ॥

मन्त्रं पूजां तपो ध्यानं होमं जप्यं बलिक्रियाम् ।
संन्यासं सर्वकर्माणि लौकिकानि त्यजेद् बुधः ॥ ९६ ॥

संसर्गाद् बहवो दोषा निःसङ्गाद् बहवो गुणाः ।
तस्मात् सर्वप्रयत्नेन यतिः सङ्गं परित्यजेत् ॥ ९७ ॥

अकारः सात्त्विको ज्ञेय उकारो राजसः स्मृतः ।
मकारस्तामसः प्रोक्तस्त्रिभिः प्रकृतिरुच्यते ॥ ९८ ॥

अक्षरा प्रकृतिः प्रोक्ता ह्यक्षरः स्वयमीश्वरः ।
ईश्वरान्निर्गता सा हि प्रकृतिर्गुणबन्धना ॥ ९९ ॥

सा माया पालिनी शक्तिः सृष्टिसंहारकारिणी ।
अविद्या मोहिनी या सा शब्दरूपा यशस्विनी ॥१००॥
अकारश्चैव ऋग्वेद उकारो यजुरुच्यते ।
मकारः सामवेदस्तु त्रिषु युक्तोऽप्यथर्वणः ॥१०१॥
ओङ्कारस्तु प्लुतो ज्ञेयस्त्रिनाद इति संज्ञितः ।
अकारस्त्वथ भूर्लोक उकारो भुव उच्यते ॥१०२॥
सव्यञ्जनो मकारस्तु स्वर्लोकस्तु विधीयते ।
अक्षरैस्त्रिभिरेतैश्च भवेदात्मा व्यवस्थितः ॥१०३॥
अकारः पृथिवी ज्ञेया पीतवर्णेन संयुतः ।
अन्तरीक्षं उकारस्तु विद्युद्वर्ण इहोच्यते ॥१०४॥
मकारः स्वरिति ज्ञेयः शुक्लवर्णेन संयुतः ।
ध्रुवमेकाक्षरं ब्रह्म ॐ इत्येवं व्यवस्थितम् ॥१०५॥
स्थिरासनो भवेन्नित्यं चिन्तानिद्राविवर्जितः ।
आसु स जायते योगी नान्यथा शिवभाषितम् ॥१०६॥
य इदं पठते नित्यं शृणोति च दिने दिने ।
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति ॥१०७॥

देवी उवाच—

स्थूलस्य लक्षणं ब्रूहि कथं मनो विलीयते ।
परमार्थं च निर्वाणं स्थूलसूक्ष्मस्य लक्षणम् ॥१०८॥

शिव उवाच—

येन ज्ञानेन हे देवि विद्यते न च किल्बिषी ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
स्थूलरूपी स्थितोऽयं च सूक्ष्मश्च अन्यथा स्थितः ॥१०९॥

इति ज्ञानसङ्कलिनीतन्त्रं समाप्तम् ॥

—*—

# देवीकालोत्तरागमः सवृत्तिकः

श्रीमत्परमेश्वरमुखोद्भूतं देवीकालोत्तरमित्युक्तं दिव्यागमज्ञानपादे। पार्वती मुमुक्षुजनानुग्रहार्थं कृपाशब्दसूचितान्तरङ्गकृतपरमेश्वरनमस्कारवती परमुक्तिसाधनज्ञानाचारस्वरूपप्रकटनार्थं परमेश्वरं पृच्छति—

सर्वेषामपि मुक्त्यर्थं मुक्तिमार्गस्य दर्शनम्।
देवेश ज्ञानमाचारं कृपया कथयस्व मे ॥१॥

हे देवेश देवानां ब्रह्मविष्णवादीनां ईश प्रेरकत्वेन प्रवर्तक इत्यर्थः, ईशः प्रवर्तक इति श्रुतेः। सर्वेषामपि तीव्रतीव्रतरादिशक्तिपातागतपवित्रान्तःकरणभूतसमस्तानां मुक्त्यर्थं मलमायाकर्मबैन्दवतिरोधानाभिधानपञ्चविधपाशविनिश्चैषार्थमित्यर्थः। मुक्तिमार्गस्य पशुत्वभावनिवृत्त्यविनाभूतपतित्वप्राप्तिसाधनभूतमोक्षमार्गस्य दर्शनं प्रकाशकभूतं ज्ञानमाचारं च कृपया मे घृणया मम कथयस्व वद ॥१॥

ईश्वर उवाच—

पार्वतीप्रश्नप्रेरितहृदयेन परमेश्वरेण तां पार्वतीं प्रति ज्ञानाचारप्रबोधनार्थं प्रतिज्ञा क्रियते—

ज्ञानाचारौ वरारोहे कथयामि तवाधुना।
प्रविशन्ति यतो मोक्षं ज्ञानिनो ध्वस्तकल्मषम् ॥२॥

वरारोहे देवि, तव ते, अधुना इदानीं ज्ञानाचारौ ज्ञानं च आचारश्च ज्ञानाचारौ तौ ज्ञानाचारौ, कथयामि वक्ष्यामि, यतो यस्मात् ज्ञानिनः प्रपञ्चवैमुख्य ऊर्ध्वमुखीभूता इत्यर्थः। ते ध्वस्तकल्मषतया (यथा तथा) ध्वस्तं विनाशीकृतं आत्यन्तिकं विनष्टं कल्मषं मन्त्रशक्तिर्यस्मिन कर्मणि तद्यथा तथा मोक्षं परसायुज्यम्। प्रविशन्ति प्राप्नुवन्तीत्यर्थः। तौ ज्ञानाचारौ वक्ष्यामीत्यर्थः ॥२॥

वक्ष्यमाणयोः प्रतिज्ञातज्ञानाचारयोर्मध्ये प्रथमतोऽज्ञातस्य करणासम्भवादिति न्यायेन आचारात् पूर्वमेवोद्दिष्टस्य ज्ञानस्य स्वरूपं निरूपयितुं प्रारभते—

येषां बोधेन संजातं कालज्ञानं वरानने।
न तेषां जायते बोधः शास्त्रकोटिशतैरपि ॥३॥

वरानने हे उत्तममुखि, येषां केषां पुरुषाणां बोधे चैतन्ये, कालज्ञानं काले उद्भूतं ज्ञानं कालज्ञानम्, काले चित्तचलनरहिते काले यद् ज्ञानमस्ति तद् ज्ञानं न संजातं बुद्धौ नोत्पद्यते, तेषां कालज्ञानरहितानाम्, शास्त्रकोटिशतैरपि ज्ञानकोटिशास्त्रैरपि

बोधः चैतन्यं न जायते नोत्पद्यते बौद्धार्हत-चार्वाक-नैयायिक-वैशेषिक-भाट्ट-प्राभाकर-सांख्यपातञ्जलाद्यनेकपशुशास्त्राभ्यासजनिताऽयथार्थाऽवभासनज्ञानजनितवासनया च तत्तत्समयशास्त्रप्रतिपादितानुष्ठानसमुत्पन्नक्रियावासनया च मलिनीभूतबुद्धयध्यवसितेन च बोधोऽपि मलिनीभवतीत्यर्थः ॥ ३ ॥

सविस्तरं वक्ष्यमाणमोक्षोपायरूपज्ञानसाधकस्वरूपमनुग्राहयति—

अतो हि निर्भयो विद्वान् निःशङ्को विगतस्पृहः ।
ज्ञानोत्साहपरो भूयात् श्रद्धानो निराकुलः ॥४॥

अतः अस्मात् कारणात् पशुशास्त्राभ्यासेन ज्ञानोद्बोधाभावकारणादित्यर्थः । हीति प्रसिद्धे । विद्वान् विवेकी साधकः, निर्भयः अन्यशास्त्रानुष्ठानतत्परोद्भावितविधिनिषेधेषु भयरहितः सन् निःशङ्कः पशुशास्त्रानुष्ठानत्यागे शिवशास्त्रानुष्ठानग्रहणे च संकल्पविकल्परहित इत्यर्थः । विगतस्पृहः विगता स्पृहा यस्यासौ विगतस्पृहः । पराङ्मुखः परापरभोगपराङ्मुख इत्यर्थः । श्रद्धान आचार्यागमशास्त्रेषु तत्प्रतिपादितज्ञानाचारयोर्विश्वासपरः । निराकुल इति तनुकरणभुवनभोगार्थचिन्तारहितः । अनवरतं ज्ञानोत्साहपरः साधनात्मकव्यापारनिष्ठो भूयात् ॥४॥

पश्चादपि तदधिकारिणः स्वरूपं निरूपयति—

निर्ममः करुणोपेतः सर्वभूताभयप्रदः ।
भजेत् कालोत्तरं देवि मुमुक्षुर्योगतत्परः ॥५॥

हे देवि, निर्ममः भोग्यरूपाद्यनेकवस्तुनि प्रतिगर्व इत्युक्तग्राहकाध्यवसायरूपभूतममतारहित इत्यर्थः । करुणोपेतः दुःखितात्मनां कृपया युक्तः । सर्वभूताभयप्रदः भयं नास्तीत्यभयम्, भयशब्देन अध्यात्माधिभूताधिदैविकानि दुःखत्रयाण्युच्यन्ते, तानि दुःखान्यस्य महात्मनो दर्शनस्पर्शनेन नश्यन्ति, अतः कारणादभयप्रद इत्यर्थः । योगतत्परः योगप्रवृत्तो युक्तशक्त्यात्मकव्यापारोपरतानवच्छिन्नस्वपरप्रकाशकसंविद्वस्तुताद्रूप्यभूतयोगे तत्पर आसक्तभूतः । मुमुक्षुः मोक्षकाङ्क्षकः । कालोत्तरं कालस्य चित्तचलनकालस्य, उत्तरम् उपरिभूतं निर्विकल्पकं भजेत् ॥ ५ ॥

एवंभूतमुमुक्षोर्मोक्षोपायं ग्रन्थद्वयेन प्रतिपादयितुं तदुपलभ्यफलानि सविस्तरं वक्ष्यति—

स ब्रह्मा स शिवो विष्णुः स इन्द्रः स षडाननः ।
स गुरुः सर्वदेवाश्च स योगी स तपोधनः ॥६॥
पण्डितः स महाभागः कृतार्थः परमार्थतः ।
चलद्वायुसमं चित्तं ध्रियते येन निश्चलम् ॥७॥

स ग्रन्थद्वयानन्तरवक्ष्यमाणप्रतिपादितमोक्षोपायसाधक एव ब्रह्मा भवति, ज्ञानोपायप्रवृत्त्या पुण्यापुण्यात्मकोभयकर्मनाशतः प्रवृत्तेश्वरशक्तिप्रेरणया प्रेरितब्रह्मसृष्ट्यन्तर्भूतविरहत्वात् स्वयमेव ब्रह्मेत्यभिप्रायः। स शिवः। अत्र शिवशब्देन रुद्रो विवक्षितः, शिवशब्दस्य ब्रह्मविष्णुपदमध्यपठितत्वाद् रुद्रस्यैव ब्रह्मविष्णुभ्यां साहचर्यसत्त्वाच्च स एव शिवो रुद्रो भवति, रुद्रव्यापारस्तनुकरणादि-संहारः शिवशक्त्युत्तेजितात्मज्ञानशक्त्यैव भवतीत्यर्थः। स एव विष्णुः, भोगकाङ्क्षा-विरहत्वादेव विष्णुकार्यरक्षणव्यापारव्यतिरिक्त इत्यर्थः। स एवेन्द्रः, देवेन्द्रभोगसदृश-दुःखरहितदिव्यभोगीत्यर्थः। स एव षडाननः षण्मुखसदृशसिद्धान्तज्ञानसिद्ध इत्यर्थः। स एव गुरुराचार्यः, मोक्षोपायसाधनबोधनाभ्यासफलबन्धविमोचक इत्यर्थः। स एव योगी योगीश्वरः। स एव तपोधनः, तप एव धनं द्रव्यं यस्य स तपोधनः। स एव महाभागः। परमार्थतः यथार्थतः, कृतार्थः कृतः प्राप्तोऽर्थो येन सः परापरमोक्षभागित्यर्थः। मतान्तरसिद्धवन्नाभिमानिकसिद्ध इत्यर्थः। येन केनचित् पुरुषेण चलद्वायुसमं चलनवायुना समस्तापानादिवायुव्यापारमूलभूत-प्राणवायुना समं सदृश चित्तं मनः, निश्चलं चलनरहितं ध्रियते, स एव पूर्वोक्त-ब्रह्मादिसकलगुणविशिष्ट इत्यर्थः ॥ ६–७ ॥

पूर्वोक्तश्लोकद्वयेन उपायसाधकस्य विशिष्टतामुक्त्वा तदुपायसाधनविशि-ष्टता वक्ष्यमाणग्रन्थद्वयेन कथ्यते—

स उपायो विमोक्षस्य सदुपात्तगुणस्तु सः।
सा प्रज्ञा तदिह स्थैर्यं तत्पुण्यं व्यवसायिनाम् ॥८॥

तदेवं तीर्थं दानं च स तपश्च न संशयः।
येनोपायेन बध्येत वायुभिश्चलनं मनः ॥९॥

स एव विमोक्षस्य विशिष्टनिःश्रेयसस्य उपायः। सः सदुपात्तगुणः सद्भिः स्वीकार्यगुण इत्यर्थः। सा प्रज्ञा सैव त्रिकालार्थनिश्चयबुद्धिः; तत् तदेव, इह अत्र, स्थैर्यं स्थिरत्वम्, तदेव व्यवसायिनां सत्कर्मानुष्ठानवतां पुण्यं तदेव तीर्थं तदेव दानं सत्पात्रप्रतिपादितधनम्, स एव तपः, न च संशयः सन्देहो नास्ति। येन केनचि-दुपायेन वायुभिः प्राणादिवायुभिः, चलनं बाह्यविषयग्रहणार्थं बाह्यकरणेषु तत्तद्विषय-संस्कारवशादन्तरङ्गचञ्चलभूतं मनः चेतः, बध्येत बद्धुं शक्येत। स एवोपायः पूर्वोक्तगुणविशिष्ट इत्यर्थः॥ ॥ ८–९. ॥

अस्योपायस्यानङ्गीकाराङ्गीकाराभ्यां बन्धमोक्षहेतुत्वाद् मुमुक्षुरात्मा अमुमेवो-पायं साधयितुमीष्ट इत्याह—

चित्ते चलति संसारो निश्चले मोक्ष एव तु ।
तस्माच्चित्तं स्थिरं कुर्यात् प्रज्ञया परया बुधः ॥१०॥

चित्ते मनसि, चलति चञ्चले सति, संसारः सुखदुःखमोहस्वरूपः संसारो भवति। निश्चले मनसि वैखर्यादिचतुर्विधशब्दव्यापारोपरतौ निश्चलभूते, मोक्ष एव निर्वाणमेव, तस्माद् मनोनिश्चलताभावे मोक्षाभावात्, बुधो विवेकी पुरुषः, परया सकललोकव्यवहारानध्यासितत्वाल्लोकोत्तरीभूतया प्रज्ञया त्रिकालविषयबुद्ध्या। चित्तं मनः स्थिरं स्थैर्ययुक्तं कुर्याद् विषयवति शून्यं कुर्यादित्यर्थः ॥१०॥

मनोनैश्चल्योत्तरकालप्रकाशितपरतत्त्वासक्त एव विवेकीत्युच्यते —

ऐकान्तिकं सुखं यत्र तथैवात्यन्तिकं भवेत् ।
निष्कर्मणि परे तत्त्वे को न रज्येत पण्डितः ॥११॥

यत्र यस्मिन् ऐकान्तिकं विषयसुखसदृशक्षणभङ्गुरस्याभावतः स्थिरभूतं सुखं भवेत्। तथैवात्यन्तिकं स्वसमानभूतस्वविशिष्टरूपसुखाभावतः, एवं लोकोत्तरं भवेत्। एवं प्रकारेण विद्यमाने निष्कर्मणि ध्यानधारणादिकर्मरहिते, परे नादबिन्दु-कलाद्यतीते, तत्त्वे शिवपदे, कः को वा पण्डितः, न रज्येत आसक्तो न भवति, आसक्त एवेत्यर्थः ॥११॥

निष्कलज्ञानासक्तसाधक एव प्राप्यपरसायुज्यवानिति कथ्यते—

निवृत्तो विषयज्ञानाद् निष्कलज्ञानतत्परः ।
अनिच्छन्नपि मेधावी लभते मोक्षमक्षयम् ॥१२॥

विषयाणां मन्त्रमन्त्रेश्वरमन्त्रमहेश्वरसदाशिवाद्यनेकविषयाणां ज्ञानात्, निवृत्तः पराङ्मुखः। निष्कलज्ञानतत्परो निष्कलज्ञानभूतशिवस्य ज्ञाने तत्परः अनुरक्तभूतः। मेधावी विवेकी पुरुषः, अनिच्छन्नपि अनाकाङ्क्षमाणोऽपि, आकाङ्क्षाया दुःखहेतुत्वादुपरतमोक्षाकाङ्क्षोऽपि, अक्षयमिति समयान्तराभिमतनिःश्रेयसाश्रित-पुनरावृत्त्याद्यनेकदोषरहितत्वाद् विनाशशून्यमित्यर्थः। मोक्षं निर्वाणं लभते प्राप्नुते ॥ १२ ॥

निष्कलज्ञानस्वरूपकथनार्थं सकलादिस्वरूपाणि निरूप्यन्ते—

अस्मिताकलया युक्तं चैतन्यं सकलं स्मृतम् ।
अस्मितारहितं चेतश्चैतन्यं शक्तिरुच्यते ॥१३॥

अस्मिताकलया मायाजन्यकलोद्बलितचैतन्यद्वारा 'सुखवानस्मि, दुःख-वानस्मि' इत्यादिग्राहकाध्यवसायरूपभूतास्मितेत्युक्तकलया युक्तं लीनं चैतन्यं सकलं

स्मृतं सकलमित्युच्यते। अस्मितारहितं या अस्मितायाः कारणभूता कला तस्याः सकाशात् निवृत्तम् अस्मितारहितं चेतश् चित्तं चैतन्यं ज्ञानक्रियारूपम्, शक्तिः निष्कलभूतभूतशक्तिरित्युच्यते। स्तनं पिबतीत्यधिष्ठानाधिष्ठेययोरभेदप्रतिपादकव्यवहारसादृश्येन चेतश्शब्दश्चेतोऽधिष्ठितचैतन्यवाचक इत्यभिप्रायः ॥ १३ ॥

अस्मिताकलारहितचिच्छक्तिरेव निष्कलज्ञानशब्दवाच्यमित्युच्यते—

तया प्रकाशितं विश्वं शक्तिध्यानमुदाहृतम्।
सर्वालम्बविनिर्मुक्तं निष्कलं ज्ञानमुच्यते ॥१४॥

तया तदस्मिताकलया रहितं चिच्छक्त्या प्रकाशितं यथास्थितानन्तवस्तुस्वरूपानतिक्रमेण प्रकाशितं विश्वं पृथिव्यादिशिवतत्त्वान्ततत्त्वतात्त्विकसमूहं शक्तिध्यानं निजशक्तेर्ध्यानं देशकालाद्यनवच्छिन्नमलकर्माद्यनुपहतस्वरूपध्यानमिति उदाहृतं कथितम्। एतत् शक्तिध्यानमेव, सर्वालम्बविनिर्मुक्तं हेयोपादेयव्यतिरिक्तमहदुपेक्षारूपभूतविरतिसम्भवेन विनिर्मुक्तं निष्कलं ज्ञानं सर्वसाक्षिकमात्रपर्यवसितज्ञानमित्युच्यते ॥ १४ ॥

साधकस्यैतन्निष्कलज्ञानमेव मोक्षसाधनमिति वक्ष्यते—

अहमंशेन यच्छून्यं चिन्मात्रालोकमद्वयम्।
मुक्तिबीजं तदाख्यातं परयोगप्रवर्तकम् ॥१५॥

यत् किञ्चिद् ज्ञानम्, अहमंशेन बिन्दुजन्यशब्दमायाजनिताहङ्कारसंमेलनभूताहमंशेन शून्यं रहितं नैयायिकाद्युक्तिवज्ज्ञानाभावं न भवतीत्यर्थः। अद्वयं पूज्यपूजकध्यातृध्येयज्ञातृज्ञेयस्वरूपाद्यनेकभेदव्यापाररहितम्। चिन्मात्रालोकं ज्ञेयकार्योपाधिव्यतिरिक्तसंविन्मात्रालोकनं यत् स्फुरणमस्ति, तदेव परयोगप्रवर्तकं मन्त्रलयरूपराजयोगानामुत्तरभूतयोगे प्रवर्तकं संचारकं मुक्तिबीजं मोक्षस्य बीजं कारणमिति आख्यातम् उक्तम् ॥ १५ ॥

पूर्वोक्तनिर्विकल्पसंविद्रूपनियतकारणेन परकैवल्यमात्राभिलाषिभूतसाधकनाडीचक्राद्यनन्तसविकल्पव्यवहरणानि त्यजेदिति ग्रन्थद्वयेन प्रतिपादयिष्यति—

चक्राणि नाडयः पद्मदेवताबीजमण्डलम्।
रूपमित्यादिकं किञ्चिद् ध्येयं नैव कदाचन ॥१६॥

चक्राणि मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञादिचक्राणि च नाडयः सुषुम्नापिङ्गलाऽलम्बुषागान्धारीडादिद्वात्रिंशन्नाडयश्च पद्मदेवताबीजमण्डलं पद्मानि चतुष्षडष्टद्वादशषोडशद्विदलानि कमलानि च, देवता ब्रह्मविष्णु-

रुद्रेश्वरसदाशिवपरमात्मादिदेवताश्च, बीजानि नकारमकारशिकारवाकारयकार-प्रणवादिबीजाक्षराणि च, मण्डलं सूर्यसोमाग्नीनां मण्डलत्रयं च, रूपं रक्तविद्यु-द्रत्नहेमाग्निमाणिक्यवर्णाभिधानरूपं च, इत्यादि एवमादि, आदिशब्देन ओड्या-णादिबन्धनानि षण्मुख्यादिकारणानि च भेरीमृदङ्गाद्यनेकनादादि च ग्राह्याणि, किञ्चित् कदाचन ध्येयं न भवति ॥१६॥

कुहकं मन्त्रजालं च प्राणायामादि धारणम् ।
सर्वमेतन्न कर्तव्यं मोक्षमक्षयमिच्छता ॥१७॥

कुहकं मारणस्तम्भनमोहनाकर्षणोच्चाटनवश्यकरणाद्यनेकम्, कुहकं च मन्त्र-जालं च समूहं च प्राणायामादि षट्त्रिंशद्द्वादशमात्रोत्तममध्यमाधमभूतप्राणाया-मश्च आदिशब्देन प्रत्याहारध्याने च, धारणम् अव्याकीर्णमनस्समेतामलबुद्धिप्रवाह-संतानरूपभूतध्याने ध्येयनिश्चलीभूतधारणं च, एतत् सर्वं समस्तम्, अक्षयं पुनरावृत्तिरहितम्, मोक्षं निःश्रेयसमिच्छता अभिलषता, न कर्तव्यं कर्तुं न योग्यमित्यर्थः ॥ १७ ॥

स्वनिमित्तपञ्चकृत्योपरतपरमनिरुपाधिकचिन्मात्रवस्तुताद्रूप्यसम्बन्धिनो जीव-न्मुक्तस्य सोपाधिकमात्रनिमग्नपूज्यपूजकादिकव्यापारो नास्तीति वदति—

नात्र पूजा नमस्कारो न जपो ध्यानमेव च ।
केवलं ज्ञेयमित्युक्तं वेदितव्यं न किञ्चन ॥१८॥

अत्र निरुपाधिकनिर्विकल्पयोगरूपकनिजावस्थायामित्यर्थः । न पूजा अष्टविधा-र्चनादिबहिरङ्गपूजा नास्ति, बहिरङ्गपूजानिमित्तपदार्थप्राप्तिहेतुप्रारब्धकर्मभोगानवरत-विलक्षितरूपेण शिथिलकारणत्वात् पूजा नास्तीत्यर्थः । नमस्कार उरसा शिरसा दृष्ट्या मनसा श्रद्धया गिरा पद्भ्यामुभाभ्यां बाहुभ्यां प्रणामोऽष्टाङ्ग उच्यते । प्रणा-मस्य ब्रह्मविष्णुरुद्रादिपदप्राप्तिफलत्वात् तदपि जीवन्मुक्तस्य नास्तीत्यर्थः । न जपः, जपो वाचिकोपांशुमानसभूतरूपः । 'एकाक्षरं द्व्यक्षरं वा षडक्षरमथापि वा । अष्टाक्षरं वा मोक्षाय मन्त्रयोगी जपेत् सदा ॥" इत्युक्तमन्त्रस्मरणरूपम्, अतो जपोऽपि नास्ति । ध्यानमपि नास्ति । शुद्धबुद्ध्यात्मकभावभावितानां तद्ध्येयाकारचिन्तारूप-मयान्तःकरणपूजाऽपि नास्ति । केवलं ज्ञेयमित्युक्तम् अन्तर्भूतनदीप्रवाह-महासमुद्रवद् ज्ञातृज्ञानव्यवहारनिवृत्तिपरसमरसीभूतचिन्मात्रैकरूप एवेत्यर्थः । वेदितव्यं वेदितुं योग्यं किञ्चन किमपि नास्ति । स्वसंविदतिक्रान्तवस्तुभावत्वा-दित्यर्थः ॥ १८ ॥

साक्षात्कृतनिश्शेषविशेषानेकवस्तुपरिप्रेप्सुपरप्रकाशकसंविद्रूपपरमशिवसम-रसीभूतनिजसंवित्करणद्वारा बहिर्मुखे सति बन्धनं स्यादिति वदति—

बहिराहितचित्तानां जायन्ते बन्धहेतवः ।
बहिश्चित्तं निवार्यैव विन्दन् लोके न सीदति ॥१९॥

बहिर्बाह्ये परशिवव्यतिरिक्तबिन्दुमायाजन्यानेकजडवस्तुनीत्यर्थः । आहितचित्तानाम् अध्यासीकृतचित्तानाम्, बन्धहेतवः कलादितत्त्वतात्त्विकरूपबन्धस्य कारणभूतपुण्यात्मकरूपकर्मसंस्काराः, जायन्ते जन्यन्ते, शुद्धाध्वयोगसाधनभूततत्त्वतात्त्विका अपि जन्यन्ते । अस्मात् कारणाद् बहिः बाह्यमुखीभूतं चित्तं चेतः निवार्य त्यक्त्वा विन्दन् ज्ञायमानः पुरुषो लोके कालाग्न्याद्यनाश्रितान्तभुवनेषु न सीदति तत्तच्छरीरोपाधिको न भवति ॥ १९ ॥

निवृत्तबहिर्मुखव्यापारसंविन्मात्रपुरुषस्य एकदेशीयत्वादिकं नास्तीति कथयति—

नात्र किञ्चिद् बहिर्नान्तं न मध्यं नाप्यधः क्वचित् ।
सर्वाकारं निराकारं स्वसंवेद्यं विराजते ॥२०॥

अत्र निजसंविदि बहिर्भूतशब्दादिविषयश्च बहिर्लक्ष्यादिकमित्युक्तम्, किञ्चित किमपि नास्ति । अन्तं नाशश्च अन्तर्लक्ष्यादिकमित्युक्तं च नास्ति । मध्यम् अहङ्कारादिकारणमध्यस्थितिश्च मध्यलक्ष्यादिकमित्युक्तं च नास्ति । अधः वर्णपदमन्त्रभुवनतत्त्वकलानां वश्यत्वं च किञ्चिदपि कुत्रापि नास्ति । सर्वमेतत् पूर्वोक्तसमस्तवस्त्वेव आकारो यस्य तत् सर्वाकारं च निराकारमाकारशून्यं च स्वसंवेद्यं स्वप्रकाशरूपं भूत्वा विराजते ॥ २० ॥

सर्वाकारं निराकारमित्युक्तोभयशब्दाभ्यां निर्दिष्ट आत्मा यद्यद्वस्त्वाश्रयति स तत्तदाश्रयानुसारगतिर्भवतीति कथयति—

यद्यदालोक्य यो जन्तुः कुरुते कर्मसंचयम् ।
तद्गतिर्जायते यस्मान्निरालोकं तु चिन्तयेत् ॥२१॥

यः कश्चिद् जन्तुः जीवः, यद्यत् तत्त्वमालोक्य उत्तरत्राभिमानतो निश्चित्य कर्मसंचयं कर्मणां स्वस्वविहितकर्मणां सञ्चयं समूहं कुरुते करिष्यते, तस्य तस्य पुरुषस्य तद्गतिः स्वस्य स्वस्य क्रियानुसारभूता गतिः प्राप्यस्थानगमनं जायते जनिष्यते । स्वस्वसमयविहिताचारानुष्ठानसिद्धिप्राप्तस्थानभूतरूपा भूतगतयः काः का इत्युच्यन्ते । कौलानां पिशाचपदप्राप्तिः, चार्वाकज्यौतिषपूर्वमीमांसकानां स्थूलभूतान्तरप्राप्तिः, स्मार्तानां तन्मात्राप्राप्तिः, इन्द्रियचैतन्यवादिनाम् इन्द्रियप्राप्तिः, मनश्चैतन्यवादिनां मनःप्राप्तिः, अहङ्कारचैतन्यप्रमाणचैतन्यवादिनाम् अहङ्कारप्राप्तिः, बौद्धनैयायिकवैशेषिकाणां बुद्धितत्त्वप्राप्तिः, आर्हतानां सत्त्वसंभोगवादिनां च गुणतत्त्वप्राप्तिः, पाञ्चरात्रिकाणां प्रकृतितत्त्वप्राप्तिः, अद्वैतवादिनां पुरुषतत्त्वप्राप्तिः,

सांख्यपातञ्जलानां गुणतत्त्वोर्ध्वपुरुषतत्त्वोर्ध्वपुरुषतत्त्वभुवनप्राप्तिः, पौराणिकानां रागतत्त्वप्राप्तिः, कापालिकानां कालतत्त्वप्राप्तिः, पाशुपतानामुत्पत्तिसौम्यवादिनामावेशसाम्यवादिनां च मायातत्त्वप्राप्तिः, महाव्रतानां शुद्धविद्यातत्त्वप्राप्तिः, शिवप्रयोज्यकर्तृत्ववादिनाम् ईश्वरौदासीन्यम्, उक्तकर्तृत्ववादिनां च ईश्वरतत्त्वप्राप्तिः, शाक्तानां शक्तितत्त्वप्राप्तिः, गारुडभैरववामभूततन्त्राणां च निवृत्त्यादिभुवनप्राप्तिः । एवमेव गतिर्भवतीत्यर्थः । यस्मात् कारणाद् निरालोकं तु निरुपाधिकमेव चिन्तयेत्, स्वसंवेद्यशब्देनापि यथाक्रमेण परप्रकाशस्वप्रकाशरूपतः शक्तिमन्तौ कथ्येते इत्यर्थः ॥ २१ ॥

अस्य जीवन्मुक्तस्य संविदः सर्वाधिष्ठातृत्वेन सर्वाकारत्वोपचारकरणत्वाद् वेदान्तशास्त्रोक्तप्रकारेण परिणामो नास्तीति सूचयन् निराकारस्वरूपमेव हेतुतः समर्थयते—

**हेतुर्नास्ति फलं नास्ति नास्ति कर्म स्वभावतः ।**
**असद्भूतमिदं सर्वं नास्ति लोको न लौकिकः ॥२२॥**

हेतुः शुद्धाशुद्धमायाबीजाङ्कुरकारणभूताणवमलो नास्ति । तीव्रतरादिशक्तिपातस्वरूपदीक्षाया विशिष्टत्वादित्यर्थः । फलं तत्त्वभुवनकरणभोगाद्याकारं फलं नास्तीत्यर्थः । पूर्वजन्मकृतक्रियाचर्याद्यनुष्ठानातिशयेन दग्धपटमात्र इवावशिष्ट इत्यर्थः । कर्म पुण्यापुण्यमेव स्वभावतः स्वरूपतयैव नास्ति । परमेश्वरानुग्रहकरणभूतदीक्षारूपक्रियाशक्त्या संचितकर्मनाशः, निष्कामविहितानुष्ठानेनागामिकर्मणो निरोधः, चरमशरीरस्थितिसाधनप्रारब्धकर्मनिश्शेषभोगकारणेन वासनाशेषमित्यर्थः । इदं दृश्यभूतशिथिलकर्मकरणादि सर्वमसद्भूतं तत्तत्स्वरूपाभासमित्यर्थः । तस्मात् कारणाद् लोको भुवनं नास्ति । लौकिको भुवनान्तर्गतव्यवहारो नास्ति ॥२२॥

लोकलौकिकव्यवहारविलक्षणता निरुपाधिकत्वस्य हेतुरिति वदति—

**निरालम्बमिदं सर्वं निरालम्बप्रकाशितम् ।**
**निरालम्बमिदं कृत्वा निरालम्बो भविष्यति ॥२३॥**

निरालम्बप्रकाशितं निरुपाधिकपरमशिवेन प्रकाशितं परिणामरूपभूताभिव्यक्तिसहितम्, इदम् एतद् दृश्यमानभूतं सर्वं तनुकरणादिवस्तुसमूहः, निरालम्बं निराकारबिन्दुमायास्वरूपम् अव्यावृत्तापरपर्यायप्रकृतिविकृतिरूपमायाबिन्दुपरिणामेषु तत्त्वतात्त्विकादिस्थूलरूपविकृतित्वमेवोपचारकारणत्वाद् निराकारात्मप्रकृतित्वमेव बिन्दुमाययोः सहजत्वात् कारणस्वरूपेण दृश्यमानप्रपञ्च एव जीवन्मुक्त इत्यर्थः । इदमेतज्ज्ञानं निरालम्बं निरुपाधिकभूतं कृत्वा कल्पयित्वा निरालम्बः समस्तोपाधिरहितो भविष्यति ॥ २३ ॥

सोपाधिकत्वं संसृतिर्भवतीति दृष्टान्तपुरस्सरं वक्ष्यति—

व्योमाकारं महाशून्यं व्यापकं यो न भावयेत् ।
संसारी स भवेल्लोके बीजकोशक्रिमिर्यथा ॥२४॥

व्योमाकारं व्योम चिदाकाशः, आकारः स्वरूपं यस्य चिदाकाशमेव स्वरूपं इत्यर्थः। महाशून्यं बिन्दुमायाद्यनेकनिराकारवस्तुगर्भीकरणसामर्थ्येन परशून्यरूपभूतमित्यर्थः। व्यापकं पृथिव्यादिशिवतत्त्वान्ततत्त्वतात्त्विकाद्यनवच्छिन्नत्वं यो न कश्चिद् भावयेद् न विचिन्तयेत्। निरुपाधिकचिदात्मानं न जानातीत्यर्थः। स एवं प्रकारभावनारहितो बीजकोशक्रिमिः बीजस्य कोशे भवः क्रिमिः बीजकोशक्रिमिः चणकादिबीजस्य कोशे छिद्रे क्रिमिः प्राणी यथा तथा लोके राज्ये संसारी जननमरणादियुक्तो भवेत्। चणकादिबीजाभ्यन्तरजनितप्राणिवर्गनिश्शेषभक्षितस्वाश्रयशून्यभावाद् उत्तरभोगनिमित्तशिष्टबीजांशे सति तद्बीजस्य पाथःपवनतेजस्संयोगतः सस्याकारत्वात् तत्क्रमीणां सस्याङ्कुरोत्पत्तिसमये मरणफले सिद्धे पुनर्जननं यथा भवति, तथैवात्मा स्वशरीरे निरुपाधिकरहितः सोपाधिकयुक्तश्चेद् जननमरणादिसंसारी भवेदित्यर्थः। पूर्वोक्तवादिनां सालम्बनतया पुनरावृत्तिसाधनाभिमानिकमोक्षत्वहेतुना निरालम्बमेवाश्रयेदित्यर्थः ॥ २४ ॥

पुनरावृत्तिसंभवमहादुःखनिवृत्त्यर्थं निरालम्बमेवाश्रयितुमिष्टमिति कथयति—

ज्ञानोत्पत्तिनिमित्तं तु क्रियाश्चर्याः प्रकीर्तिताः ।
योगं सालम्बनं त्यक्त्वा निष्प्रपञ्चं विचिन्तयेत् ॥२५॥

क्रियाः क्रियापादप्रतिपाद्यमानमन्त्रोद्धारपूजासमयविशेषनिर्वाणसंस्काराचार्याभिषेकसाधकाभिषेकसबीजनिर्बीजलोकधर्मिणीशिवधर्मिणीभौतिकीनैष्ठिकीदीक्षानुष्ठानानि, चर्याः चर्यापादप्रतिपाद्यमानप्रायश्चित्तलिङ्गलक्षणस्कन्दनन्द्यादिगणेश्वरलक्षणजपमालालक्षणजटाधारणलक्षणानि। एवंभूताः क्रियाश्चर्या ज्ञानोत्पत्तिनिमित्तं ज्ञानोत्पत्तेः कारणम्, ज्ञानं निरुपाधिकवस्तुरूपसामरस्यरूपम्, ज्ञानस्य उत्पत्तिरभिव्यक्तिरेव निमित्तं प्रयोजनं यस्मिन् तद्यथा तथा यद्वा ज्ञानोत्पत्त्यर्थं प्रकीर्तिताः कामिकादिवातुलान्ततन्त्रसमुदायेनानुग्राह्यानुग्राहकतारतम्यानुसारतः परमेश्वरेण प्रकर्षेण निरूपिताः, तयोः क्रियाचर्ययोरनुष्ठानफलरूपज्ञानेन सालम्बनं बिन्दुनादमन्त्राद्यालम्बनेन सहितं योगमणिमाद्यैश्वर्यसाधनप्राणायाममयोगं त्यक्त्वा विसृज्य निष्प्रपञ्चं सकलनिष्कलादिप्रपञ्चव्यतिरिक्तभूतचिद्घनैकवस्तु एव चिन्तयेद् ध्यायेत् ॥ २५ ॥

१. "सर्वयोनिषु सर्वस्य महत्क्लेशः पुनः पुनः । सर्वक्लेशं परित्यक्तं महाशून्यं विचिन्तयेत् ॥"
क. पुस्तके. २५ श्लोकः

शुद्धाशुद्धभोगाकाङ्क्षारहितत्वं विना निरालम्बयोगो न भवतीति कथयति—

पातालात् शक्तिपर्यन्तं सर्वमेतदभीप्सितम् ।
भग्नं यैः शून्यमन्त्रेण ते स्मृताः शून्यवेदिनः ॥२६॥

पातालात् पातालस्थितकालाग्निरुद्रभुवनमारभ्य शक्तिपर्यन्तं शक्तितत्त्वावसानम्, अभीप्सितं भोगासक्तिहेतभूतशुद्धितारतम्येनाभिलषितं एतद् इदं सर्वं शुद्धाशुद्धरूपभूतचतुर्विंशोत्तरद्विशतभुवनानां समस्तभोगजातं यैः शून्यमन्त्रेण शून्यमिति स्वनिमित्तसृष्टिस्थितिसंहारतिरोभावरूपकृत्यचतुष्टयेन शून्यभूतमन्त्ररूपानुग्रहशक्तिप्रेरणया भग्नं नाशीकृतं ते शून्यवेदिनो निरुपाधिकवस्तुज्ञाना इति स्मृताः ॥ २६ ॥

चित्तचाञ्चल्यस्य भोगाशक्तिरेव निमित्तमिति दृष्टान्तपुरस्सरं समर्थयन् काले निरालम्बपदस्थितिनिश्चलीभूते मानसमेव मोक्षस्थानगमनयोग्यमिति वदति—

विषये लोलुपं चित्तं मर्कटादपि चञ्चलम् ।
सर्वशून्यपदे स्थित्वा ततो निर्वाणमेष्यति ॥२७॥

विषये शुद्धाशुद्धरूपविषये, लोलुपमासक्तं मर्कटादपि वानरादपि अतिमधुरपक्वफलनिचयलसितरसालशाखावलम्बितक्षुद्बाधितवानरादपीत्यर्थः । चञ्चलं मन्त्रमन्त्रमहेश्वरादिपददिव्यभोगाकाङ्क्षया चञ्चलं चपलं चित्तं सर्वशून्यपदे समस्तोपाधिना शून्यभूते, पदे प्राप्यस्थाने, स्थित्वा उसित्वा, ततः तस्याः स्थितेः, निर्वाणम् अपुनर्भवरूपनिर्वृतिम्, एष्यति प्राप्स्यति, चित्तशब्देन चित्तोपाधिकात्मनिजसंविदित्यर्थः सूचितः ॥ २७ ॥

परनिवृत्तियोग्यचैतन्यस्य सहजस्वरूपं कथयति—

सर्वतत्त्वाद्यसंभिन्नं देहाद् भिन्नं तथैव च ।
अहमस्माद्यसंभिन्नं चैतन्यं सर्वतोमुखम् ॥२८॥

चैतन्यं शुद्धावस्थासंयुक्तं चैतन्यं सर्वतत्त्वाद्यसंभिन्नं सर्वतत्त्वप्रमुखैः सह आदिशब्देन भुवनादिभिश्च सह असंभिन्नम् असंबद्धम् अहमस्माद्यसंभिन्नं त्रिंशत्तत्त्वात्मकसूक्ष्मशरीरोपाधिकव्यापारभूताहमस्म्यादिसंकल्पजालतः असंभिन्नञ्च असंबद्धम्, सर्वतोमुखं व्यापकम्, व्यापकत्वतः सकलप्रपञ्चसम्बन्धत्वेऽप्यध्यासशून्यत्वमेतीत्यर्थः ॥ २८ ॥

"पाशावलोकनं त्यक्त्वा स्वरूपालोकनं हि यत् । आत्मव्याप्तिर्भवेदेषा शिवव्याप्तिस्ततोऽन्यथा ॥" इत्युक्तग्रन्थानुसारतस्तत्त्वतात्त्विकावलोकनात्मिकाधोमुखतो

निवृत्तः स्वस्वरूपलाभोत्तरताप्राप्तिसंविदा निरुपाधिकचिद्घनैकरूपपरवस्तुदर्शक एव प्राप्तनिजसुख इति कथयति—

**आकाशमिव सर्वं तु सबाह्याभ्यन्तरं प्रिये।**
**परानन्दमरूपं तु पश्यन्नानन्दभाग् भवेत् ॥२९॥**

प्रिये, सर्वं तु घटमठाद्यनेकवस्तुनि आकाशमिव आकाशं यथा व्याप्यावतिष्ठते तथा सबाह्याभ्यन्तरं कलादिषडध्वबहिरङ्गान्तरङ्गैः सह युक्तं परानन्दं बैन्दवानन्दव्यतिरिक्तपरानन्दरूपम् अरूपं तु नादबिन्द्वादिरूपरहितत्वेन स्थितं परमशिवं पश्यन् चैतन्यं दृष्ट्वा अपरोक्षीकृतः स आनन्दभाक् परानन्दभोक्ता भवति ॥ २९ ॥

निरालम्बात्मकसंविदनुसंधानेन मनोनाशं दृष्टान्तपुरस्सरं समर्थयति—

**निरिन्धनो यथा वह्निः स्वयमेव प्रशाम्यति।**
**ग्राह्याभावान्मनस्तद्वत् स्वयमेव प्रलीयते ॥३०॥**

निरिन्धने दह्यमानकाष्ठाभावे वह्निरग्निः अङ्गारावस्थो यथा स्वयमेव नाशकहेतुभूतसलिलाद्यभावेऽपीत्यर्थः, प्रशाम्यति नश्यति, स्वाश्रयस्वनाशकरूपप्रकर्षतः शमनं यातीत्यर्थः। तद्वद् मनः चित्तं ग्राह्याभावाद् ग्राह्याणां ग्रहीतुं योग्यानां वस्तूनाम् अभावादलाभात् स्वयमेव विलीयते विशेषेण लयीभवेत्। काष्ठप्रवर्तितो वह्निः काष्ठेन सह शाम्यति, नादप्रवर्तितं चित्तं नादेन सह शाम्यति इत्युक्तग्रन्थानुसारतो नादेन सह मनोनाशः कार्य इत्यर्थः ॥ ३० ॥

अनाद्यविद्यासंबन्धात्मकबोधानभिव्यक्तितो मायाजन्यगुणजयात्मकसुषुप्त्याद्यवस्थासमुदायानां विलक्षणो भूत्वा वर्तितुं युज्यत इति कथ्यते—

**मोहिका मूर्च्छिका माया स्वप्नश्चेति चतुर्विधः।**
**सुषुप्तिर्जागृतिश्चैव सर्वमेतत् परित्यजेत् ॥३१॥**

मोहिका शुद्धाशुद्धभोगासक्तिहेतुत्वेन स्थिता, मूर्च्छिका आत्मचैतन्यरोधकत्वाद् विषयमूर्च्छाकारकारिणीत्वेन स्थिता मलशक्तिश्च माया अनात्मरूपभूतमनोबुद्ध्यहङ्कारदेहादिष्वात्मधर्मारोपिणी भूता आत्मन्यनात्मभूतदेहकारणानां जननमरणसुखदुःखादिजडधर्मारोपिणी भूता माया च स्वप्नश्च अनुभूतार्थस्मरणरूपान्तःकरणव्यापाररूपभूतस्वप्नश्च इत्युक्तश्चतुर्विधः चतुष्प्रकारश्च सुषुप्तिः तमोगुणतिरोहितमनोरूपभूता सुषुप्तिश्च जागृतिश्च श्रोत्रादीन्द्रियद्वारा विकीर्णमनोऽवभिरूपभूता जागृतिश्च एवेति शब्देनेत्युक्त इत्यर्थः। एतत्सर्वमिदं समस्तं परित्यजेद् विसर्जयेत् ॥ ३१ ॥

निर्विकल्पावस्थाचलितचैतन्यप्रवृत्तिनिवृत्तिपरम्परासोपाधिकभूतशरीरादिभि-न्नतापरोक्षकारणेन पूर्वोदितावस्थावलोकनपुरस्सरं स्वस्वरूपनिश्चयो भवेदिति कथयति—

देहात् सूक्ष्मगतात् प्राणात् चित्ताद् बुद्धेरहङ्कृतेः ।
सर्वस्मात् भिन्न एवाहं चिन्तयन् लभते चितम् ॥३२॥

देहाद् भुवनजशरीरात् सूक्ष्मगतात् सूक्ष्मयुक्तात् प्राणात् सनश्चञ्चलभूत-प्राणात् चित्तादक्षार्थसंकल्पकारिणो मनसश्च बुद्धेस्तु कल्पितार्थनिश्चयहेतुभूताया बुद्धेश्च अहङ्कृते विषयनिश्चयात्मकभोग्यरूपबुद्धिभोगार्थभूतग्राहकाध्यवसायसाधनहेतु भूताहङ्कारतश्च सर्वस्मात् समस्ततत्त्वात् तात्त्विकसमूहाच्च भिन्न एव विविक्तः सन् चिन्तयन् स्मृतिव्यतिरिक्तज्ञानस्य विलक्षणभूतोऽयं साधकः चित्तं ज्ञानक्रियात्मकं शिवतत्त्वं लभते प्राप्नुते । मद्देहमत्प्राणमच्चित्तमद्बुद्धिमदहङ्कृत्यादिसकलविकल्पानु-स्यूतमदंशताशून्येन चिद्विवेको भवतीत्यर्थः ॥३२॥

तत्त्वविलक्षणोन्मीलितशुद्धबोधतिरोधायकनिद्राध्यवसितसाधनजागरोन्मज्ज-नादिप्रयत्नकृत् स्वस्थो भवेदिति वदति—

सदाभिभूयते चित्तं निद्रया स्मरणादिना ।
बोधयित्वा प्रयत्नेन कुर्यात् स्वस्थं पुनः पुनः ॥३३॥

चित्तं चैतन्याधिष्ठितं मन इत्यर्थः । सदा आश्रयान्तं निद्रया स्वेतरानभिज्ञानता-रूपसुषुप्त्या च स्मरणादिना अनुभूतार्थस्मरणादिरूपमयचिन्तया च आदिशब्देन जागरणाद्यवस्थया च अभिभूयते तिरस्क्रियते, अनधिगतार्थगन्तृत्वस्यैव चित्स्वरूप-भूतकरणत्वाद् अनुभूतार्थग्रहणस्मरणचैतन्यस्यान्यथाऽध्यासद्वारा तिरोधायकत्वाद-विद्यासदृशाकारकत्वं न भवतीत्यर्थः । एतत्तिरस्कारगतचित्तं प्रयत्नेन जागरोन्मज्जना-द्यनुसंधानादिनिर्वृत्तिरूपप्रत्यक्षव्यापारेण बोधयित्वा उद्बोध्य पुनः पुनः शान्तं स्वस्थं चलनशून्यं कुर्यात् । अनेन प्रकारेण मनसः स्वस्थतया चिदंशविषयाध्यासो न भवतीत्यर्थः ॥३३॥

"संश्लिष्टं च स्वलीनं च विक्षिप्तं च गतागतम् । मनश्चतुर्विधं प्रोक्तं तस्य भेद-मिदं(मं) शृणु ॥" इत्युक्तनिःश्वासकारिकाग्रन्थानुसारतो मन्त्रमननमन्त्राध्यात्मैकत्रिपुटी-रहितानन्यरूपभूतगुणातीतभूततास्वलीनतेत्युक्त्वा अनुभूयमानविषयानध्यासितज्ञेय-निश्चलात्मकभूतसात्त्विकरूपमेव संश्लिष्टताज्ञानाज्ञानाकारमयरजोगुणात्मकभूतता-गतागततविषयभोगार्थोभूत्वा कालव्याकुलात्मभूततमोगुणरूपभूततांविक्षिप्ततेत्युक्त्वा एतेषु उत्तममध्यमाधमाधमाधमा इत्युक्तचतुर्विधमनोव्यापारेषु संश्लिष्टावस्थारूप-भूतमनःस्वलीनावस्थां प्रापयेदिति ग्रन्थद्वयेन समर्थयति—

यदा स्थिरं भवेच्चित्तं नैव चालयन् कथञ्चन ।
न किञ्चिच्चिन्तयेत्तत्र स्थिरमेव तु कारयेत् ॥३४॥

यदा चित्तं मनः स्थिरं भवेत् स्थैर्यं याति तस्मिन् समये कथञ्चन केनापि प्रकारेण कदाचिदपि न चालयन् चालितुं योग्यं न भवति तत्र मनःस्थिरत्वकाले किञ्चिद् मन्त्रभुवनविग्रहबिन्द्वादिध्येयरूपाणि न चिन्तयेद् न ध्यायेत् स्थिरमेव निश्चलमेव कारयेत् कुर्यात् ॥३४॥

आश्रयालम्बनं चित्तं तद्वत् कुर्यान्निराश्रयम् ।
चञ्चलं निश्चलं कुर्याद् निश्चलं न तु चालयेत् ॥३५॥

आश्रयालम्बनम् आश्रयो बैन्दवमायेयानेकवस्तुरूपमाश्रयमालम्बते इत्याश्रयालम्बनं चित्तं तद्वत् तथैव आश्रयादर्थान्तरेषु चलनवदित्यर्थः । निराश्रयं निरालम्बं कुर्यात् कारयेत् । पूर्वं ग्रन्थप्रतिपादितमर्थं क्रोडीकृत्य कथयति—चञ्चलं चलनभूतं मनः निश्चलमचलं कुर्यात् निश्चलं निश्चलीभूतं मनः नैव चालयेत् चालयितुं योग्यं न भवेत् ॥३५॥

मनोनिश्चलतया निरालम्बे सत्यभिव्यक्तिभूतनिर्मलाकाश एव पाशानामूर्ध्वभावी भूतात्मनः स्वरूपमिति कथ्यते—

सर्वभूतालये जाते यद्यद् व्योम सुनिर्मलम् ।
तत्तद् रूपं स्वकं ध्यायेद् व्याप्तं चैव तु निर्मलम् ॥३६॥

सर्वभूतलये सर्वेषां भूतशब्देनोपलक्षिततत्त्वतात्त्विकानां लये व्यवहारनाशे जाते पूर्वोक्तसाधकचैतन्यस्य यद्यत् सुनिर्मलं परनिर्मूलभूतं व्योम आकाशमस्ति तद्रूपं तत्तदाकाशरूपं व्याप्तं चैव सर्वगतं च सुनिर्मलम् अत्यन्तनिर्मलं स्वकं स्वसंबन्धरूपं ध्यायेत् । "अत्र पाशोपरि ह्यात्मा व्योमवस्तु सुनिर्मलम् । शिवतत्त्वगुणामोदात् शिवधर्मावलोकनः ॥" इति स्वतन्त्रागमोक्तग्रन्थानुसारेण आत्मस्वरूपलाभत उपरि शिवतत्त्वमेव जानातीत्यर्थः ॥३६॥

अस्य निर्मलत्वस्य प्राप्तेः साधनभूतमनोनिश्चलतां प्राप्त एवं कृतार्थ इति कथ्यते—

तदेव जन्मसाफल्यं पाण्डित्यमिदमेव हि ।
चलद्वायुसमं चित्तं निश्चलं ध्रियते हि यत् ॥३७॥

तदेव जन्म साफल्यं जन्मन उत्पत्तेः साफल्यं सफलत्वं परशिवकृतान्तमहासृष्ट्यवान्तरसृष्टिरूपे भूतमिदं जन्मैव सफलमित्यर्थः । इदमेव हि एतदेव पाण्डित्यं

सामर्थ्यं वेदवेदान्तपुराणेतिहासविद्याभ्यासजनितपण्डितत्वत एतदेव सामर्थ्यमित्यर्थः। चलद्वायुसमं चलितप्राणवायुना सह समं चित्तं मनो निश्चलम् अचञ्चलं ध्रियते हि धार्यते हि, हि प्रसिद्धे. इति यत् तदेवेत्यर्थः ॥३७॥

मानसं योगसाधनादूर्ध्वाधोगतिषु न धारयित्वा निरालम्बमेव कारयेदिति कथयति--

नैवोर्ध्वं धारयेच्चित्तं न मध्यं नाप्यधः क्वचित् ।
अन्तर्भावविनिर्मुक्तं सदा कुर्यान्निराश्रयम् ॥३८॥

चित्तं मनः, ऊर्ध्वं पश्चिमद्वारगमनत ऊर्ध्वमुखं न धारयेद् मध्यमाज्ञादिचक्रेषु प्रयातुं मध्यं न धारयेत्, अधः कुण्डलिनीजालनाडीनिमित्ततः क्वचिदपि न धारयेत्, अन्तः अन्तरे भावविनिर्मुक्तं भावत आकाराद्यभिव्यञ्जकबुद्धिधर्मतो विनिर्मुक्तं विशेषेण वर्जितं निराश्रयम् आश्रयरहितं सदा सन्ततं कुर्यात् कारयेत् ॥३८॥

"ज्ञानेन शिष्यते यस्माद् इन्द्रियार्थपरायणः। त्रिकालमाकुलो नित्यं स तु विक्षिप्त उच्यते ॥" इत्युक्तविक्षिप्तावस्थायां सुषुप्त्यवस्थायां मध्यगतं ज्ञानं निश्चलं कुर्यादिति वदति--

निद्रायां बोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ।
पक्षद्वयपरित्यागे संप्राप्ते नैव चालयेत् ॥३९॥

चित्तं मानसं निद्रायां स्वेतरज्ञाननिवृत्ततमोगुणात्मभूतसुषुप्तौ बोधयेत् प्रबुद्धं कुर्यात् विक्षिप्तं पुनरिन्द्रियद्वारत आकुलीभूतं सततं शमयेत् एकाग्ररूपतो विनिवर्तयेत्, पक्षद्वयपरित्यागात् पक्षद्वयात् सुषुप्तिजागृतीत्युक्तोभयपक्षतः परित्यागे संप्राप्ते मनसि निराश्रयभूते सति नैव चालयेत् तयावस्थया न चलितुं युज्यते, कारणवर्गैः सह ज्ञायमाने सविकल्पो भवेद् अन्तर्हिते सति अज्ञानं स्यात् तस्मात् कारणाद् उभयावस्थाव्यतिरिक्तं निर्विकल्पस्वरूपो भूत्वाऽवस्थितं स्यादित्यर्थः ॥३९॥

"न मनो नापि मन्तव्यो न मन्ता च विभाव्यते । स्वलीनो विषयैर्मुक्त एकीभूतः सुषुप्तिवत् ॥" इत्युक्तग्रन्थानुसारतो गुणातीतमनःस्वलीनतारूपावस्था एव मोक्षस्वरूपसाधनमिति ग्रन्थद्वयेन प्रतिपादयति—

निराश्रयं सदा चित्तं सर्वालम्बनवर्जितम् ।
मनोऽवस्थाविनिर्मुक्तं विज्ञेयं मुक्तिलक्षणम् ॥४०॥

सदा जाग्रदवस्थामयसमस्तकार्येषु निराश्रयं करणविषयादिष्वध्यासितरहितत्वाद् बाह्यान्तराश्रयाभावेन स्थितं सर्वालम्बनवर्जितं सर्वं समस्तमालम्बनं विन्दु-

नादाद्याभ्यन्तरालम्बनं तस्माद् वर्जितं विलक्षणं मनोऽवस्थाविनिर्मुक्तं विशेषेण विश्लिष्टं चित्तं चित्तशब्दोपलक्षितचैतन्यमेव मुक्तिलक्षणं मोक्षस्वरूपमिति विज्ञेयं विशेषेण निश्चयत्वेन ज्ञेयम् ॥४०॥

सर्वालम्बनशून्यं च धारयित्वा मनो हृदि ।
यद् ज्ञानं जायते स्पष्टं तदभ्यासपरो भवेत् ॥४१॥

सर्वालम्बनशून्यम् आलम्बनमाश्रयः सर्वं च तद् आलम्बनं च सर्वालम्बनं सर्वालम्बनशून्यं निर्विकल्पं मनश्च हृदि हृदये धारयित्वा अनया धारणया यद् ज्ञानं निजचैतन्यं स्पष्टं व्यक्तं जायते अभिव्यक्तिमुपयाति, तदभ्यासपरः तस्य चैतन्यस्य अभ्यासः अनुसंधानरूपम् , तस्मिन् परस्तत्परो भवेद् मनोनिश्चलोत्तरभावि-निर्विकल्पसंविदनुसंधाननिष्ठो भवेदित्यर्थः ॥४१॥

पूर्वोक्तनिर्विकल्पकचैतन्येन निष्कलवस्तुध्यानतत्परस्य परसायुज्यप्राप्तिर्भवे-दिति कथयति--

ये ध्यायन्ति परं शून्यं निष्कलं निरवस्थितम् ।
ते यान्ति परमं स्थानं जन्ममृत्युविवर्जितम् ॥४२॥

परं स्वशक्तिव्यापारान्तर्भूतचेतनाचेतनवस्तुसमूहस्य उत्तरभूतं शून्यं चिदा-काशरूपं शशविषाणगगनकुसुमादिवत् त्रैकाल्याभावरूपशून्यं न भवतीत्यर्थः । निष्कलम् अष्टत्रिंशत्कलारहितं निरवस्थितं प्रवृत्त्याद्यवस्थारहितं ये केचित् सलिलपवि-त्रितात्मानो ध्यायन्ति चैतन्ययोजनमात्ररूपध्यानेन ध्यायन्ति, ते जीवन्त एव मुक्ता जन्ममृत्युविवर्जितम् इच्छानुष्ठानतः समुत्पद्यमानयोः पुण्यपापयोः फलभूतसृष्टि-संहाराभ्यां परित्यक्तं परमं सृष्टिसंहारान्तर्भूतमन्त्रमन्त्रेश्वरादिप्राप्यस्थानानामुत्तरभूतं स्थानं परमशिवसायुज्यपदं यान्ति ॥४२॥

परसायुज्यगमनोन्मुखस्य बन्धनकारणानि सालम्बनानि कथयति—

देवा देव्यस्तथा चान्ये धर्माधर्मौ च तत्फलम् ।
आश्रयाश्रयिविज्ञानं संसारस्य च बन्धनम् ॥४३॥

देवाः सदाशिवमहेश्वरपुरुषरुद्रविष्णुब्रह्मभास्करमहेन्द्राग्न्यादिदेवाश्च, देव्यः क्रमेण मनोन्मनीमायाप्रकृतिरुद्राणीलक्ष्मीब्रह्माणीप्रभावतीशचीस्वाहादेव्यादिदेव्यश्च, तथा च तदन्यपूर्वोक्तदेवतास्वरूपेभ्यो भिन्नाः, धर्माधर्मौ च तत्र विहितनिषिद्धानुष्ठानतो जाते पुण्यपापे तत्फलं तयोः पुण्यपापयोः फलं च, आश्रयाश्रयिविज्ञानम् आश्रयः स्वदेहः, आश्रयी देहयुक्तो देही विज्ञानमहमिति विकल्पज्ञानं च पूर्वजन्मान्तरानुभूत-संसारसाम्यत्वेन स्थितसंसारस्य बन्धनम् उत्तरजननबीजरूपभूतबन्धनं भवेदित्य-

ध्याहार्यम्। देवतामूर्तिध्यानपुण्यापुण्यज्ञानदेहदेहिज्ञानरूपभूतसविकल्पजालतयोत्त-रोत्तरजननं भवेदित्यर्थः ॥ ४४ ॥

निरालम्बयोगज्ञानरूपभूतप्रभावतः प्रारब्धवासनामात्रशेषभूतदेहत्वेऽपि निर्देहीभूतजीवन्मुक्तस्य देहपातानन्तरमेव परमोक्षो भवतीति कथयति--

आश्रयो द्वन्द्वमित्युक्तं द्वन्द्वत्यागात् परोदयः।
जीवन्मुक्तस्तदा योगी देहत्यागाद्विमुच्यते ॥४४॥

आश्रयश्चैतन्याधारभूतदेह एव द्वन्द्वमिति देहदेहिरूपसंसार इत्युक्तम् द्वन्द्व-त्यागाद् देहदेहिरूपमयद्वन्द्वस्य त्यागाद् विसर्जनतो निरभिमानतारूपमयपरित्यागतः परोदयः अपुनर्भवरूपभूतपरतत्त्वस्योदयः, परशिवसदृशत्वमस्य भवेदित्यर्थः। जीवन्मुक्तो देहकारणविषयानध्यासितत्वेन शिवसामरस्यवान् योगी शिवयोगी तदा तदानीं प्रारब्धवासनानिश्शेषक्षयत इत्यर्थः। देहत्यागात् देहस्य अविद्यामूलमाया-कारणजनितषट्त्रिंशत्तत्त्वात्मकभूतसूक्ष्मदेहेन सह पञ्चभूतात्मकभूतस्थूलदेहसम-त्यागाद् विरामतो विमुच्यत ऊर्ध्वगशक्तिव्यापारोत्तरोत्तरशिवसायुज्यं प्राप्नोति ॥४४॥

जीवन्मुक्तस्य देहत्यागतः परमोक्षत्वाद् वैराग्यादिप्रयत्नव्यतिरिक्तप्रयत्नगत-शरीरो भवेदिति कथयति--

वैराग्येण वपुस्त्यागो न वै कार्यो मनीषिणा।
आरम्भतः क्रियानाशे स्वयमेव विपत्स्यते ॥४५॥

मनीषिणा पूर्वोक्तज्ञानवता विवेकिना वैराग्येण शरीरे विरागेण वपुषः शरीरस्य त्यागो विसर्जनं नैव कार्यं कर्तुं न योग्यम्, हेयबुद्धिवदुपादेयबुद्धिरप्यनया भवेत्। तस्मादुभयविलक्षणभूतोपेक्षारूपेण सह स्थीयतामित्यर्थः। क्रियानाशे क्रियाया हेयोपादेयहानोपादानरूपव्यापारस्य नाशे, शून्ये आरम्भत उद्योगिन-स्तस्य स्वयमेव अप्रयत्नतः शरीरं विपत्स्यते नङ्क्ष्यति ॥ ४५ ॥

एवंप्रकारेण परमुक्तजीवन्मुक्तस्वरूपमुक्त्वा परमोक्षनिमित्तभूतदेहत्यागोपाय-मुक्त्वा शिवदीक्षाभिव्यक्तशिवत्वमुक्तजीवन्मुक्तस्य चैतन्यस्य देहत्यागपर्यन्तं विद्यमानप्रकारं कथयति--

हृत्सरोजे ह्यहंरूपा या चितिर्निर्मलाऽचला।
अहङ्कारपरित्यागात् सा चितिर्मोक्षदायिनी ॥४६॥

हृत्सरोजे हृदयकमले, हि प्रसिद्धे, अहंरूपा शिवोऽहमित्युक्तरूपा निर्मला अहङ्कारादिकरणधर्मसम्बन्धरहितत्वेन शुद्धा अचला निर्विकल्परूपभूतकरणत्वाद् अचञ्चला या चितिः चैतन्यमस्ति, सा चितिः तच्चैतन्यम्, अहङ्कारपरित्यागात् अह-

ङ्कारत्वधर्मभूतसुख्यहं दुःख्यहं जीवोऽहमित्युक्तप्राकृतभूतग्राहकाध्यवसायरूपमयाहङ्कारस्य परित्यागाद् विमोक्षतो मोक्षदायिनी परमोक्षं ददाति ॥ ४६ ॥

षडध्वातीतशिवसमरसीभूतजीवन्मुक्तः शिवोऽहं शर्वोऽहमित्युक्तशिवयोगचिन्तया प्रारब्धकर्मजनितभोगेष्वासक्तिं विसर्जयेदिति ग्रन्थद्वयेन प्रतिपादयिष्यति—

सर्वोपाधिविनिर्मुक्तं चिद्रूपं यन्निरन्तरम् ।
तच्छिवोऽहमिति ध्यात्वा सर्वासक्तिं विसर्जयेत् ॥४७॥

निरन्तरं देशकालाद्यनवच्छिन्नं सर्वोपाधिविनिर्मुक्तं समस्तोपाधिभ्यो नादाद्याश्रयेभ्यो विनिर्मुक्तं विसर्जितं यच्चिद्रूपं ज्ञानरूपमस्ति, तच्छिवोऽहमिति तच्छिवस्वरूपमेवाहमिति ध्यात्वा सर्वासक्तिं सर्वेषु भोगेष्वभिलाषं विसर्जयेद् विशेषेण परित्यजेत् ॥ ४७ ॥

देशजात्यादिसम्बद्धान् वर्णाश्रमसमन्वितान् ।
भावानेतान् परित्यज्य स्वभावं भावयेद् बुधः ॥४८॥

देशजात्यादिसंबद्धान् देशैः काश्मीरमगधमालवादिभिः कर्णाटकद्राविडादिभिः । आदिशब्देन गृहक्षेत्रोपवनादिभिश्च सम्बद्धान् संयुक्तान् वर्णाश्रमसमन्वितान् वर्णैः ब्राह्मणक्षत्रियवैश्यशूद्ररूपैर्वर्णैः, आश्रमैः ब्रह्मचर्यगार्हस्थ्यवानप्रस्थभिक्षुस्वरूपैराश्रमैश्च समन्वितान् संयुक्तान् पुरोवर्तिलौकिकेषु दृश्यमानान् भावान् मद्देश इति मज्जातिरिति ब्राह्मणोऽहं गृहस्थोऽहमिति पूर्वपुण्यपापानुसारतो बुद्धौ कल्पितान् भावान् परित्यज्य सर्वत्र त्यक्त्वा बुधस्तीव्रशक्तिपातेन स्वेतरविवेकज्ञानो जीवन्मुक्तः स्वभावं शिवदीक्षयाऽभिव्यक्तनिजत्वमेव भावयेत् शिवोऽहं शिवोऽहमिति ज्ञापयेत् ॥ ४८ ॥

क्षीरे क्षीरं घृते घृतमित्युक्तन्यायतः स्वसत्ताहीनान्यभावशिवसमानताजनितशिवसायुज्ये स्थितजीवन्मुक्तस्य निर्लेपभूतपरमशिवस्वतन्त्रतां ग्रन्थद्वयेन प्रतिपादयिष्यति—

अहमेको न मे कश्चिद् नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं तं न पश्यामि यो मम ॥४९॥

अहं शिवसामरस्यप्राप्तोऽहम् एको ज्ञातृज्ञानज्ञेयत्रिपुटीरहितभूतैक्यरूपवान् मे मम कश्चिद् आप्तानाप्तरूपी कश्चिन्नास्ति अन्यस्याविद्यासम्बन्धेन भिन्नस्य कस्यचिदेकस्यापि अहं न शत्रुमित्रादिरूपं न भवामि यस्य सर्वज्ञत्वसर्वकर्तृत्वयुक्तपरशिवस्याहं पूजकवेदकादिरूपी तं शिवं न पश्यामि दृश्यरूपित्वेन न जानामि, मम मे यः परमशिवः पूज्यध्येयादिरूपी तं न पश्यामि विषयत्वेन न पश्यामि ॥४९॥

अहमेव परं ब्रह्म जगन्नाथो महेश्वरः ।
इति स्यान्निश्चितो मुक्तो बद्धः स्यादन्यथा पुमान् ॥५०॥

अहमेव परं सर्वोत्तरभूतं ब्रह्मस्वरूपी, अहं जगन्नाथो जगतां लोकानां नाथः कर्तृभूत ईश्वर इत्येवंप्रकारेण निश्चितो निर्णीतः, मुक्तः स्याद् बन्धरहितो भवेत् । अन्यथा एवंप्रकारराहित्ये रजस्तमोगुणद्वयोर्ध्वभूतप्रकाशात्मकसत्त्वगुणे, अस्य सुषुप्त्यवस्थायामभिमानरूपेण प्रमातृभूताहंब्रह्मेति कारणाध्यासज्ञानमेव मोक्ष इत्युक्त इत्यर्थः । पुमान् कलाकालविद्यानियतिरागपञ्चकञ्चुकमुक्तपुरुषतत्त्वरूपभूतो बद्धः स्यात् ॥ ५० ॥

ततश्चेतनाचेतनान्योन्याध्यासितैकरूपपृथक्कृतपटुतरानुग्राहिकाशक्त्युन्मीलितचिद्दृष्ट्या तनुकरणादिभिन्नशिवानन्यतास्वरूपदर्शनेन स्वपरप्रकाशतारूपजीवन्मुक्तः स्यादिति वदति--

अशरीरं यदात्मानं पश्यति ज्ञानचक्षुषा ।
तदा भवति शान्तात्मा सर्वतो विगतस्पृहः ॥५१॥

यदा यस्मिन् समये आत्मानं स्वम्, अशरीरं स्थूलसूक्ष्मशरीरतोऽन्यम्, इह शरीरशब्देन सह नञ्समासः । नञ आदेशभूतोऽकारस्तदन्यार्थवाचकः । ज्ञानचक्षुषा ज्ञानेन उन्मीलनशक्त्यभिव्यक्तचैतन्यमित्युक्तचक्षुषा दृष्ट्या पश्यति अपरोक्षीकरोति, तदा तस्मिन् समये, सर्वतः अशुद्धाशुद्धरूपमयसमस्तवस्तुनः सकाशात्, विगतस्पृहो विशेषेण गता नष्टा स्पृहा यस्य सः, शान्तात्मा निर्विकारस्वरूपो भवति ॥ ५१ ॥

अचिद्विलक्षीकृतः चित्स्वरूपशिवानन्यताशिवोऽहंभावरूपयोगनिश्चय इति कथयति—

योऽसौ सर्वेषु शास्त्रेषु पठ्यते ह्यज ईश्वरः ।
अकायो निर्गुणो ह्यात्मा सोऽहमस्मि न संशयः ॥५२॥

यः पुरुषः, असौ अपरोक्षरूपभूतः शिवः, सर्वेषु शास्त्रेषु दिव्यागमेषु, अजः जन्मरहित इति, ईश्वरः सकलकर्तेति, अकायः शरीररहित इति, निर्गुणः गुणरहित इति, आत्मा चैतन्यरूपीति च, हि प्रसिद्धे, पठ्यते उच्यते, स शिव एवाहमस्मि भवामि न संशयः सन्देह एव नास्ति ॥ ५२ ॥

निर्विकल्पात्मकशिवानन्ययोगप्रवृत्तचित्स्फुरणेन परिपूर्णपरमस्वतन्त्रात्मकशिवानन्यतारूपी भूत्वा स्थितो भवतीति विज्ञप्तिभागो हीत्युक्तपूर्वज्ञानमेवं वरारोहे इत्युक्तग्रन्थपर्यन्तं कथयति—

विज्ञप्तिमात्रो हि सदा विशुद्धः सर्वत्र यस्मात् सततं विमुक्तः ।
नादेयहेयो ह्यहमप्रतर्क्यस्तस्मात् सदा ब्रह्ममयो विशोकः ॥५३॥

अहं यस्मात् कारणात् सदा सन्ततं विज्ञप्तिमात्रः सकलदोषनिवृत्तत्वेन विशिष्ट-भूतचैतन्यमेव स्वरूपं यस्य स तथोक्तः सर्वत्र तनुकरणादिविषयसमस्तवस्तुषु विशुद्ध-निर्लेपरूपविशेषनिजशुद्धिमान् सततमनवरतं विमुक्तः अपुनर्भवरूपविशेषमुक्तिमान् नादेयहेयः इदं ममेति ग्रहीतुं योग्यं वस्तु च मास्त्विति त्यक्तुं योग्यं वस्तु च आदेयहेये ते न यस्य स नादेयहेयः, हि प्रसिद्धौ, अप्रतर्क्यः मनस्संकल्परूपभूतस्य अहङ्कारस्य अशक्यः, तस्मात् कारणात् सदा अनिशं ब्रह्ममयो ब्रह्मस्वरूपी विशोकः आत्यन्तिकदुःखनिवर्तनेनानन्दस्वरूपभूतः ॥ ५३ ॥

चक्रभ्रमणवत् प्रारब्धवासनामात्रशेषभूतं शरीरं बन्धनरूपं न भवतीति कथयति—

आमस्तकं पादतलावसानं सान्तर्बहिश्चर्मपटावनद्धम् ।
तत्कृत्स्नमेवामृतरूपमन्यत् चिद्रूपमात्मानमनन्यसिद्धम् ॥५४॥

अनन्यसिद्धं अनन्यमिति सामुद्रनादेयजलसम्बन्धसादृश्येन शिवस्यानन्यो भूत्वा सिद्धं चिद्रूपं चिदेव रूपं यस्य तम् आत्मानं स्वकं प्रति अन्यदचेतनरूपत्वेन भिन्नम् आमस्तकं मूर्धानमारभ्य पादतलावसानं पादतलमेवावसानमन्त्यं यस्य तत् तथोक्तम्, सान्तर्बहिश्चर्मपटावनद्धं अन्तर्बहिश्चर्म एव पटस्तेन त्वगम्बरेण अवनद्धं पिनद्धं तत् कृत्स्नं सकलतत्त्वरूपभूतशरीरम्, अमृतरूपमेव मोक्षस्वरूपमेव ॥ ५४ ॥

ईशोऽहमेवास्य चराचरस्य
पिता च माता च पितामहश्च ।
ध्यानं समास्थाय पदं चतुर्थं
ध्यायन्ति मामेव विमुक्तिकामाः ॥५५ ॥

अस्य पूर्ववर्तिनश्चराचरस्य चेतनाचेतनरूपभूतप्रपञ्चस्य अहमेवेशः कर्ता, पिता जनकश्च, माता च जननी च, पितामहश्च पितुः पिता च, अहमेव सृष्टिकर्तृ-भूतः शिवश्च, तच्छिवसमवेतरूपिणी सृष्टिकारिणी शक्तिश्च, शक्तिव्यवहारोर्ध्वभावी भूतानाख्यभूतवस्तु च स्वयमेवेत्यर्थः । ध्यानं समास्थाय निश्चलरूपत्वे स्थित्वा चतुर्थं तृतीयान्तं पदं सायुज्यपदं मामेव विमुक्तिकामा मोक्षाभिलाषिणो विवेकिनो ध्यायन्ति ध्यानं कुर्वन्ति ॥ ५५ ॥

ब्रह्मादिभिर्देवमनुष्यनागै-
र्गन्धर्वयक्षाप्सरसां गणैश्च ।
यज्ञैरनेकैरहमेव पूज्यो
मामेव सर्वे प्रतिपूजयन्ति ॥५६॥

ब्रह्मादिभिः ब्रह्ममुखैः, आदिशब्देन विष्ण्वादिभिश्च देवैः सुरलोकनिवासिभिः, अनेकैश्च मनुष्यैः मर्त्यलोकस्थितानेकपुरुषैश्च, नागैः पातालवासिभिरनेकैर्नागैश्च, गन्धर्वयक्षाप्सरस इति देवताभेदाः, तेषां गणैः समूहैश्च अनेकैरसंख्यातैः यज्ञैः ज्योतिष्टोमाश्वमेधराजसूयादियज्ञैश्च, अहमेव पूज्यः पूजितुं योग्यः, सर्वे समस्ता मामेव पूजयन्ति अर्चयन्ति ॥ ५६ ॥

तपोभिरुग्रैर्विविधैश्च दानै-
र्मामेव सर्वे प्रतिपूजयन्ति ।
भूतानि चाहं स्थिरजङ्गमानि
यावन्ति चान्यान्यहमेव तानि ॥५७॥

उग्रैः क्रूरैः, तपोभिः निराहाराल्पाहारावाहारवायुपर्णाशित्वकन्दमूलाद्याहारपञ्चाग्निमध्यस्थित्यादिभिश्च विविधैर्नानाप्रकारैर्दानैः भूकपिलाकन्यागजकल्पवृक्षमहामेरुदानादिदानैश्च सर्वे समस्ता मां प्रत्येव पूजयन्ति अर्चयन्ति, भूतानि च स्थूलसूक्ष्मरूपमयानि भूतानि च, अहं स्थिरजङ्गमानि चेतनाचेतनरूपमयानि स्थावरजङ्गमानि च अन्यानि पूर्वोक्तवस्तुव्यतिरिक्तानि यावन्ति यावत् परिमितवस्तूनि सन्ति तानि तच्चाहमेव ॥ ५७ ॥

अस्य जीवन्मुक्तस्य सोपाधिकावस्थाप्राप्तशिवानन्यत्वमुक्त्वा निरुपाधिकावस्थां गतं शिवानन्यत्वं कथयति—

न स्थूलसूक्ष्मो न च शून्यरूपो ज्ञानैकरूपो जगदेकबन्धुः ।
निरन्तरो निर्मल ईश्वरोऽहं स्वप्नाद्यवस्थाच्युतिनिष्प्रपञ्चः ॥५८॥

न स्थूलसूक्ष्मः स्थूलरूपश्च सूक्ष्मरूपश्च न भवामि स्थूलत्वसूक्ष्मत्वरूपपरिणामस्य कार्यकारणरूपाचेतनबिन्दुमायाधर्मत्वाद् अभिन्ननिमित्तोपादानादिदेहपरिणतात्मवादिनां प्रकारेण स्थूलसूक्ष्मरूपो न भवतीत्यभिप्रायः। न च शून्यरूपः शून्यभाव एव स्वरूपो यस्य स न भवति शशविषाणवत् शून्यरूपो नहि असद्रूपो नेत्यर्थः। ज्ञानैकरूपः चैतन्यैकरूपः, एकबन्धुः अद्वितीयबन्धुः, आप्तः अनिष्टदोषनिवारणेषु निःश्रेयसपदशब्दनिमित्तप्रदत्वात् परमाप्त इत्यर्थः। निरन्तरो देशकालाभ्यामपरिमितः

निर्मलः अनादिमलरहितः, एवंभूत ईश्वरः परमेश्वरः, अहं पूर्वोक्तसकलगुणविशिष्ट-परमशिव एवाहम्। अजातनिर्मितत्वात् स्वप्नाद्यवस्थाच्युतिनिष्प्रपञ्चः प्रपञ्चान्त-र्भूतत्वव्यतिरिक्तः ॥ ५८ ॥

सकलविकल्पातीतशिवसामरस्यात्मकशिवाऽहंभावनापरिपूर्त्या यथा जलं जले क्षिप्तं क्षीरे क्षीरं घृते घृतम् अविशेषो भवेत्तद्वदात्मा तु परमात्मनीत्युक्तग्रन्था-नुसारेण समस्तश्रेयोमौलीभूतपरमनिर्वाणपदप्राप्तो भवेदिति ग्रन्थद्वयेन प्रतिपाद-यिष्यति—

अनादिविज्ञानमजं पुराणं गुहाशयं निष्कलमप्रपञ्चम्।
निरञ्जनं निष्प्रतिमं निरीशमदृश्यमग्राह्यमचिन्त्यरूपम् ॥५९॥

अनादिविज्ञानं अनादि च तद् विज्ञानं च अनादिविज्ञानं तत्त्वतात्त्विकादि-व्यञ्जकानपेक्षापुरस्सरानवरतोद्बोधरूपपरानपेक्षणतानादिविज्ञानं चराचरात्मकानन्त-निरवशेषविश्वसाक्षिकतारूपविशिष्टत्वानन्यतात्मकचिच्छक्तित्वम्, अजं स्वसंपादि-तान्यसंपादितसर्गादिपञ्चकानन्तर्भूतम्, नित्यं पुराणमनादिम्, गुहाशयं बिन्दु-मध्यगतं सूक्ष्मं सुषिरज्योतिरूपकं दृष्टान्तं सर्वभूतात्मा सशान्तवद्दीपकमित्युक्त-मित्यधिष्ठेयरूपबिन्दुनामकगुहामावासत्वेन प्राप्तम् निष्कलं शान्त्यतीतादिकलोपाधि-रहितम्, अप्रपञ्चं बिन्दुमायाजन्यतत्त्वतात्त्विकादिरूपानन्तप्रपञ्चलेशालिप्तं शून्यम्, निरञ्जनम् अनाद्यविद्यादोषरहितम् निष्प्रतिमं असदृशरूपम्, "आत्मानं गगनं कृत्वा बिन्दुं कृत्वा तथैव च। द्वयं समरसं कुर्यादमनस्का कला हि सा" इत्युक्तसदृश-व्यवहारदूरम्, निरीशम् ईशशब्दोपलक्षितप्रवृत्तोद्युक्तशक्तव्यवहारनिवृत्तम्, अदृश्यं विपयत्वेनानवस्थितम्, अग्राह्यं ग्रहीतुमयोग्यं "न चासौ इन्द्रियग्राह्यो न करणेन चक्षुषा। आत्मनैवात्मनि ग्राह्यः सर्वगः प्रभुरीश्वरः ॥" इत्युक्तग्राह्यताव्यतिरिक्त इत्यर्थः। अचिन्त्यरूपम् "अतीतः सर्वभावानामचिन्त्यो गुणवर्जितः। सर्वकृत् सर्वगः सर्वः सर्वभूतः सनातनः ॥" इति कथितग्रन्थानुसारतश्चिन्तयितुमयोग्यमित्यर्थः ॥५९॥

सनातनं ब्रह्म निरन्तरं यत्
पदे पदे सोऽहमिति प्रपश्येत्।
यो भावतस्तिष्ठति निष्प्रकम्पः
स ब्रह्मभूतोऽमृततामुपैति ॥६०॥

सनातनं नाशशून्यं निरन्तरं व्यापकं यद् ब्रह्म स एवाहमिति पदे पदे सकल-निश्चये प्रपश्येत् प्रकर्षेण विलोकयेत्, यः कश्चिद् भावतः शिवोऽहंभावनाभावतः निष्प्रकम्पो "विरजं विमलं शान्तं प्रपञ्चातीतगोचरम् निष्कम्पं करणातीतं सर्वज्ञं

सर्वतोमुखम् ।।" इत्युक्तग्रन्थानुसारतो निश्चलीभूत्वा तिष्ठति अवस्थितो भवेत्, ब्रह्मभूतः ब्रह्मसदृशः- सोऽमृततां मुक्तत्वम्, उपैति प्राप्नोति ॥ ६० ॥

एवं प्रकारेण परमेश्वरपरसायुज्यसाधनभूतं ज्ञानस्वरूपं देव्या निरूप्य तदनन्तरमुद्देशानुसारतस्तस्या ज्ञानानुसारीभूतमाचारं निरूपयितुं प्रतिजानीते—

ज्ञानमेवं वरारोहे कथितं मोक्षसिद्धये ।
आचारं कथ्यमानं तु साम्प्रतं शृणु तं मया ॥६१॥

हे वरारोहे इत्यवबोधने, एवमेतत्प्रकारम् मोक्षसिद्धये मुक्तेः प्राप्तये, ज्ञानमुक्तं कथितम् । मया कथ्यमानं वक्ष्यमाणं तं प्रकृतपूर्वप्रतिपादितज्ञानोचितम् आचारं साम्प्रतं शृणु । पूर्वसमर्थितज्ञानपूर्वं वक्ष्यमाणाचाररूपोभयसाधनसम्मेलनेन परमनिःश्रेयससिद्धिर्भवेदित्यर्थः ॥ ६१ ॥

पूर्वोक्तज्ञानयुक्तजीवन्मुक्तस्य त्याज्ययोग्यपूर्वक्रिया न स्नानं न जप इत्युक्त ग्रन्थाद्यात्मारामो भवेद्योगीत्युक्तग्रन्थान्तं समर्थयति—

न स्नानं न जपः पूजा होमो नैव च साधनम् ।
अग्निकार्यादिकार्यं च नैतस्यास्ति महेश्वरि ॥६२॥

स्नानं वारुणादिस्नानं च नास्ति, जपो गायत्र्यादिजपो न, पूजा "शैवं च वैष्णवं चापि स्कान्दं वैनायकं तथा शाक्तिकं चेति" उक्तपञ्चविधपूजा च न, होमो ज्योतिष्टोमादियज्ञो न, साधनं फलसाधनं न, अग्निकार्यादिकार्यं च अग्निपूर्वकार्यं च न, नाभ्यन्तरस्थितं वह्निसदृशं विस्फुलिङ्गवत् । निर्गम्य पावके बाह्ये नीलबिम्बाकृति स्मरेत् ॥" इत्युक्ताग्निस्मरणपूर्वाग्निकार्यं च, एतस्य जीवन्मुक्तस्य नास्ति ॥ ६२ ॥

नियमोऽपि न तस्यास्ति क्षेत्रपीठे च सेवनम् ।
नार्चनं पितृकार्यादि तीर्थयात्रा व्रतानि च ॥६३॥

तस्य जीवन्मुक्तस्य नियमोऽपि "शौचं तूष्णीं तपश्चैव जपः प्रणतिरेव च" इति पञ्चप्रभेद इत्युक्तग्रन्थविवृतनियमश्च नास्ति, क्षेत्रपीठे "पौरुषे च आर्षके च बाणे दैविकसम्भवे । शतवृद्धः सपर्यायाः शिवक्षेत्रमिदं भवेत् ॥" इत्युक्तक्षेत्रपीठे च सेवनं च नास्ति, पितृकार्यादि पितृकार्यपूर्वार्चनम् तीर्थयात्रा व्रतानि च "तपःसंतोषमास्तिक्यं दानमीश्वरपूजनम् । सिद्धान्तश्रवणं लज्जा मतिर्जाप्यं व्रतं दश ॥" इत्युक्तव्रतानि च न सन्ति ॥ ६३ ॥

धर्माधर्मफलं नास्ति न तिथिर्लौकिकक्रिया ।
सन्त्यजेत् सर्वकर्माणि लोकाचारं च सर्वशः ॥६४॥

धर्माधर्मफलं पुण्यपापयोः फलं सुखदुःखं नास्ति, लौकिकक्रिया लोकधर्मक्रिया तिथिर्नास्ति, सर्वकर्माणि समस्तयोगान् लोकाचारं च लोकानां जनानामाचारं सन्ध्यावन्दनाद्याचारं च सर्वशः सर्वत्र सन्त्यजेत् सम्यक् परित्यजेत् ॥ ६४ ॥

समयाचारनिश्शेषान् कृत्यजातं तु बन्धनम् ।
संकल्पं च विकल्पं च ये चान्ये कुलधार्मिकाः ॥६५॥

समयाचारनिश्शेषान् समयात् समयदीक्षाया अनन्तरं भाविन आचारान् "मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् । स्वयमभ्यर्चनं भक्त्या मदर्थे चाङ्गचेष्टनम् ॥ मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया । ममानुस्मरणं नित्यं मम कैतववर्जितम् ॥ एतदष्टविधम्" इत्युक्तपूर्वोक्तरूपान् आचारान् निश्शेषान् शेषरहितान्, कृत्यजातं कारयितुं योग्यं पूर्वक्रियाजातम्, बन्धनं संकल्पं च इच्छारूपं मनस्संकल्पं च विकल्पं च पूर्वावस्थाजातिधर्मादिज्ञानं च बन्धनमित्याहार्यत्वाद् बन्धनं ये कुलधार्मिका आत्मीयाभिमानितकुलाचारा अन्ये च तान् सर्वान् बन्धनं संसारकारणं संत्यजेत् ॥ ६५ ॥

सिद्धीश्च विविधाकारा पातालादि रसायनम् ।
प्रत्यक्षेणापि लभ्येरन् नैव गृह्णीत साधकः ॥६६॥
सर्वे ते पशुबन्धाः स्युरधोमार्गप्रदायकाः ।
एतैर्नास्ति परा मुक्तिश्चिद्रूपं व्यापकं विना ॥६७॥

अधोमार्गप्रदायकाः पुनरावृत्तिपरप्रेर्यत्वादिरूपभूताधोमार्गप्रदायका अधोमार्गप्रदातार एते पूर्वोक्ताः सर्वे समस्ताः कृत्यानि पशुबन्धाः पशुविषयसादृश्यरूपदोषाजनितज्ञानमात्रनिवर्त्यशुक्तिकारजतरज्जुसर्पादिविपर्ययजनमूलभ्रान्तिव्यतिरिक्त पीतशङ्खद्विचन्द्रादिविपर्ययज्ञानमूलचक्षुर्वैद्यचिकित्सारूपक्रियानिवर्तककाचकामलपटलादिनेत्रदोषवद्दीक्षारूपशिवानुग्रहात्मिकया निवर्त्यभूता सकलमायाजननमूलभूतानेकात्मावारकानेकशक्तिसमवेतानाद्यविद्यापरपर्यायश्रुतपशुत्ववासनया समवेतपशुवर्गाणां बन्धाः स्युर्भवेयुः, व्यापकं सर्वत्रावस्थितं चिद्रूपं चैतन्यं विना अभावे एतैः पूर्वोक्तैः परा सर्वातीता मुक्तिर्मोक्षो नास्ति ॥ ६६–८७ ॥

येन केन विशेषेण सर्वावस्थोऽपि योगधृत् ।
क्षेत्रपीठे च सन्देहाद् वर्जयेद्यदि कौतुकम् ॥६८॥

पूर्वोक्तयोगाद् जीवन्मुक्तो येन केन विशेषेण सर्वावस्थोऽपि समस्तावस्थोऽपि क्षेत्रपीठे च कौतुकं अभिलाषं यदि संदेहाद् विवर्जयेत् त्यजेत् ॥ ६८ ॥

क्रृमिकीटपतङ्गांश्च तथा देवि वनस्पतीन्।
न नाशयेद् बुधो जीवान् परमार्थमतिर्यतः ॥६९॥

हे देवि, तव बोधने क्रृमिकीटपतङ्गान् स्वेदजान् क्रृमीन् क्रृमिकीटपतङ्गाख्य-प्राणिभेदांश्च तथा तद्वत् जीवान् आश्वासितान् वनस्पतीन् उद्भिदः तृणगुल्म-लतादीन्, बुधः चराचराणामुत्पत्तिस्थितिज्ञानी न नाशयेत् न हन्यात्, परमार्थमतिः "आत्मनः प्रतिकूलानि परेषां न समाचरेत्" इति परमार्थबुद्धिमत्त्वात् ॥ ६९ ॥

न मूलोत्पाटनं कुर्यात् पत्रच्छेदं विवर्जयेत्।
भूतपीडां न कुर्वीत पुष्पाणां च निकृन्तनम् ॥७०॥

मूलोत्पाटनं मूलसहितगुल्मादेरुत्पाटनम् उद्धृतिं न कुर्यात् पत्रच्छेदं पत्रनिकृन्तनं न कुर्यात्, भूतपीडां स्थावरजङ्गमरूपप्राणिनां पीडां बाधां च पुष्पाणां सुमनसां निकृन्तनं न कुर्वीत न कारयेत् ॥ ७० ॥

स्वयंपतितपुष्पैस्तु कर्तव्यं शिवपूजनम्।
मारणोच्चाटनादीनि विद्वेषस्तम्भने तथा ॥७१॥

स्वयंपतितैः पुरुषप्रयत्नं विना स्वपरिपाकतः पतितैः गलितैः पुष्पैः शिवपूजनं परमेश्वरपूजनं कुर्यात्, मारणोच्चाटनादीनि मारणम् अभिचारकर्मजनितव्याध्यादिद्वारा अकालमरणकरणम्, उच्चाटनादीनि पूर्वाश्रितसुखाश्रयोद्वेजनपलायनादिरूपाणि तथा तद्वत् विद्वेषस्तम्भने विद्वेषः प्राणिनां हितान्योन्यविरोधकरणम्, स्तम्भनम् अग्नि-स्तम्भनजलस्तम्भनेन्द्रियस्तम्भनादिकम्, न कुर्यादित्युत्तरग्रन्थस्थितक्रियापदमिहाप्य-ध्याहर्तव्यम् ॥ ७१ ॥

ज्वरभूतग्रहावेशवश्याकर्षणमोहनम्।
न कुर्यात् क्षुद्रकर्माणि काष्ठपाषाणपूजनम् ॥७२॥

ज्वरो वातपित्तश्लेष्मरूपज्वरजननं च, भूतो मन्त्रसामर्थ्यागतभूतकार्येणेष्टानिष्ट-कार्यकरणं च ग्रहावेशः दिग्बन्धनादिविविधक्रियापुरस्सरं स्त्रीव्यक्तिषु पुरुषव्यक्तिषु ग्रहावेशनं च, वश्यः राजवश्यजनवश्यस्त्रीवश्यादि वश्यं च, आकर्षणं च वस्त्रा-भरणवाहनाद्यनेकभोग्यवस्त्वप्रयत्नाकर्षणं च, मोहनं सुषुप्तिविषमूर्च्छाकरणादिसदृश-मूर्च्छाकरणं चेत्युक्तानि क्षुद्राणि भूतकर्माणि कृत्यानि काष्ठपाषाणपूजनं काष्ठं श्वेतार्क-मूलादिसंपादितलम्बोदराद्याकारकाष्ठेषु पाषाणेषु पाषाणे भैरवाद्यनेकदेवताकार-पाषाणेषु पूजनं तत्तद्देवतायोग्यवस्तुसमर्पणात्मकपूजनं तच्च न कुर्यात् ॥ ७२ ॥

समोऽमित्रे च मित्रे च समो लोष्ठे च काञ्चने ।
अभिलाषो न कर्तव्य इन्द्रियार्थे कदाचन ॥७३॥

अमित्रे शत्रौ मित्रे स्नेहिते च समः समानबुद्धिः स्यादित्यध्याहर्तव्यम्, लोष्ठे कपाले काञ्चने स्वर्णे च समः समानबुद्धिः स्यात् कुर्तुमिष्टमनिष्टं वा प्राप्तं प्रभुविधिना कर्तारमन्यमारोप्य लोकस्तु व्यतिकुप्यति । उक्तप्रकारं ज्ञात्वा प्रारब्धपुण्यपापानुसारत ईष्टानिष्टकारिणा कर्त्रा अनन्यत्वकारणात् सकलसाक्षिकत्वरूपसमानबुद्धिरेव भवेदित्यर्थः । कदाचन कदापि । इन्द्रियार्थे इन्द्रियाणि श्रोत्रादीनि, अर्थाः शब्दादिविषयाः, तयोरभिलाष इच्छा न कर्तव्यः न कर्तुमिष्टः ॥ ७३ ॥

जीवन्मुक्तस्य ज्ञानिनस्त्यक्तुं योग्याः पूर्वक्रियाः स्वयं पतितपुष्पैरित्याद्युक्त्वा तस्य न्यायं वदति—

आत्मारामो भवेद्योगी निर्भयो विगतस्पृहः ।
समनिन्दाप्रशंसश्च सर्वभूतसमस्तथा ॥ ७४ ॥

निर्भयो जरामरणादिभयशून्यः, विगतस्पृहो विशेषेण नष्टाभिलाषः, समनिन्दाप्रशंसश्च समः समानो निन्दायामुपक्रोशे प्रशंसायां स्तुतौ समः समबुद्धिः, तथा तद्वत् सर्वभूतसमः समस्तप्राणिषु समः समानबुद्धिः योगी अनन्ययोगयोगी आत्मारामः आत्मनि स्वपरप्रकाशरूपे आरामः क्रीडायुक्तो भवेत् ॥ ७४ ॥

एतेन "न हृष्यत्युपकारेण नापकारेण कुप्यति । यः समः सर्वभूतेषु जीवन्मुक्तः स उच्यते ॥" इत्युक्तग्रन्थानुसारेण वर्तितव्यमित्युक्तम्, "आत्मवत् सर्वभूतानि यः पश्यति स पश्यति" इत्युक्तार्थप्रतिपादनेन त्यक्तुं योग्यव्यवहारान् वदति—

समदृष्टिस्तु कर्तव्या यथात्मनि तथापरे ।
विवादं लोकगोष्ठीं च कलहांश्च विवर्जयेत् ॥७५॥

आत्मनि स्वस्मिन् यथा सुखदुःखानीति बुद्धिर्भवति, तथा तद्वत् परे अन्यस्मिन् समदृष्टिस्तु समबुद्धिस्तु कर्तव्या कर्तुमिष्टा । विवादं च विशेषेण वादं च वीतरागवादं च विजिगीषाकथारूपं वादञ्च, स्वमतस्थापनपरदूषणरूपं जल्पं च, परमतदूषणमात्रां वितण्डां च एतत् त्रितयं च वर्जयेत्, लोकगोष्ठीं च लोकैर्जनैः सह सहकृतगोष्ठीं च सभां च कलहांश्च विवर्जयेद् वर्जयेत् ॥ ७५ ॥

अस्य आत्मारामयोगिनो जीवन्मुक्तस्य शास्त्रगोष्ठ्यपि सविकल्पत्वात् संसारकारणत्वात् त्यक्तुं योग्येति ग्रन्थार्थतः कथयति—

शास्त्रगोष्ठीं न कुर्वीत कुभाषितसुभाषितान् ॥७६॥

शास्त्राणां निरीश्वरवैदिकाद्यनेकेषामनेकैकात्मपादरूपाणां गोष्ठीं च कुभाषित-सुभाषितान् परनिन्दारूपवचनानि च सुष्ठुवचनानि च न कुर्वीत ॥ ७६ ॥

बहिरङ्गे त्याज्यवस्तून्युक्त्वाऽन्तरङ्गे त्याज्ययोग्यगुणान् कथयति—

ईर्ष्यां पैशून्यदम्भे च रागं मात्सर्यमेव च ।
कामक्रोधौ भयं शोकं त्यज्येत् सर्वं शनैः शनैः ॥७७॥

ईर्ष्यामसूयां च पैशून्यं पिशुनत्वं च दम्भं कपटं च रागं वाञ्छामपि मात्सर्यं मत्सरत्वं च कामक्रोधौ कामं मन्मथविकारं च क्रोधं कोपं च भयं भीतिं च शोकं व्याकुलत्वं च सर्वं समस्तं शनैः शनैः मन्दं मन्दं त्यजेत् ॥ ७७ ॥

सर्वद्वन्द्वविनिर्मुक्तः सन्ततं जनवर्जितः ।
अनेनैव शरीरेण सर्वज्ञः सन् प्रकाशते ॥७८॥

सर्वद्वन्द्वविनिर्मुक्तः सर्वैः पुण्यपापसुखदुःखरागद्वेषक्षुत्पिपासावैराग्यावैराग्यै-श्वर्यानैश्वर्यज्ञानाज्ञानद्वन्द्वैर्विनिर्मुक्तो विशेषेण शून्यः सन्ततं सततं जनवर्जितः प्राणिभिस्त्यक्तः स आत्मा अनेनैव शरीरेण वर्तमानदेहेनैव सर्वज्ञः सन् सर्ववित् भूत्वा प्रकाशते राजते ॥ ७८ ॥

निःश्रेयसात्मकैकफलमात्राकाङ्क्षाप्रवर्तकसाधकस्य प्रयत्नावान्तरफलतया प्राप्ता-णिमादिसिद्ध्यपेक्षाप्यनुचितेत्युदाहरति—

ज्ञानेनैव यथा मोक्षस्तथा सिद्धिर्निरर्थिका ।
तथापि भोगमिच्छन्ति सिद्धिमिच्छन्ति साधकाः ॥७९॥

यथा ज्ञानेन दृशा मोक्ष एव प्रयोजनं तथा ज्ञानेन समुपार्जिता सिद्धिर्निरर्थिका निष्प्रयोजना, तथापि सिद्धयो निरर्थिका अपि भोगमिच्छन्तः साधकाचार्यादयः सिद्धिमिच्छन्ति ॥ ८९ ॥

अणिमादिगुणावाप्तिर्जायतां वा न जायताम् ।
तथापि मुच्यते देही पतिं विज्ञाय निर्मलम् ॥८०॥

अणिमादिगुणावाप्तिः अणिमा आदिर्यस्य सः अणिमादिः, अणिमादीनां गुणानां प्राप्तिः । आदिशब्देन तदनन्तरा महिमा, गरिमा, द्राघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वम्, वशित्वम् इत्युक्तगुणा ये बुद्धिधर्मास्तेषामवाप्तिः लाभो जायतां वा संभवि-

ष्यति वा तथाविधाणिमादिसिद्धयो भविष्यन्ति वा न वा देही निर्मलमनादिमलशून्यं पतिं चेतनाचेतनकर्तृभूतपरमेश्वरं विज्ञाय पूर्वोक्तप्रकारेण ज्ञात्वा मुच्यते मोक्षं याति ॥ ८१ ॥

परसायुज्यस्य परशिवस्वरूपैकज्ञानैकलभ्यत्वमुक्त्वा सकलात्मवर्गस्थूलभतात्मस्थूलशरीराधिष्ठातृत्वेन परशिवस्य समीपस्थतां व्यक्तीकरिष्यति—

पञ्चभूतात्मको देहः शिवस्तत्रैव तिष्ठति ।
शिवाद्यवनिपर्यन्तो लोकोऽयं शङ्करात्मकः ॥८१॥

देहो देहिनो भुवनजदेहः, पञ्चभूतात्मकः पृथिव्यादिपञ्चभूतमयस्तत्रैव एवं पञ्चभूतमयदेहे शिवः परमेश्वरस्तिष्ठति वर्तते । शिवाद्यवनिपर्यन्तः शिवतत्त्वमेव आदिर्यस्य सः, अवनितत्त्वं पर्यन्तं यस्य सः शिवाद्यवनिपर्यन्तः, एवंभूतोऽयं लोकः शङ्करात्मकः परमेश्वरात्मकः परमेश्वररूपः शिवाद्यवनिपर्यन्तः षट्त्रिंशत्तत्त्वेषु निःशेषावशेषबाह्याभ्यन्तराधिष्ठितपरशिवाकारत्वेन परशिवो मोक्षसाधको मुमुक्षुमार्गाणामदूर इत्यर्थः ॥ ८२ ॥

पूर्वोक्तशिवानन्यतासिद्धजीवन्मुक्तस्य जीवनं स्वरूपप्रयोजनात्मकमिति सार्धग्रन्थद्वयेन प्रतिपादयिष्यति—

ईदृशं ज्ञानिनं दृष्ट्वा पूजयन्ति च ये नराः ।
गन्धं पुष्पं फलं धूपं स्नानं वस्त्रं च भोजनम् ॥८२॥
निवेदयन्ति ये केचिद् वाङ्मनःकायकर्मभिः ।
तथैव ते विमुच्यन्ते मुक्तिमार्गाभिकाङ्क्षिणः ॥८३॥
स्तुतिनिन्दाकरास्तस्य पुण्यपापे समाप्नुयुः ।

ईदृशम् एवंप्रकारभूतं ज्ञानिनं दृष्ट्वा निरीक्ष्य ये नरा मनुष्याश्च पूजयन्ति अर्चयन्ति, गन्धं कर्पूरकस्तूरीकुङ्कुमादिसंमेलितं मलयजगन्धम्, पुष्पम् अरविन्दोत्पलजातियूथिकानवमालिकादिपुष्पं च, फलं जम्बूफलपनसफलकदलीद्राक्षासहकारादिफलम्, धूपं लाक्षादिधूपं च, स्नानं तैलाभ्यङ्गादि, वस्त्रं पट्टादिकं च, भोजनं भक्ष्यभोज्यलेह्यादिकम्, ये केचित् वाङ्मनःकायकर्मभिः वागुपचाररूपं मनो विश्वासरूपं कायो निरहङ्कारतया नम्ररूपः, कर्मभिः सेवारूपक्रियाभिः सह निवेदयन्ति समर्पयन्ति, मुक्तिमार्गाभिकाङ्क्षिणो मोक्षगमनाभिलाषिणः, ते पूजका मुच्यन्ते मोक्षं प्रविशन्ति, तस्य ज्ञानिनः स्तुतिनिन्दाकराः स्तोत्रकारिणो निन्दाकारिणश्च क्रमतः पुण्यपापे पुण्यं च पापं च समाप्नुयुः ॥ ८२–८३ ॥

सकलशङ्कानिवृत्तिमुदितपार्वतीलालनपुरस्सरं परमेश्वरो ज्ञानाचारस्वरूपनिरूपणपटले परिसमाप्तिं कथयति—

यद् ज्ञानाचरणं पृष्टं तत् सर्वं कथितं मया ।
कालज्ञानं वरारोहे किमन्यत् परिपृच्छसि ॥८४॥

वरारोहे पार्वति, यद् ज्ञानाचरणं ज्ञानाचारात्मकं कालज्ञानं पृष्टं त्वया अनुयुक्तं तत्सर्वं समस्तं कालज्ञानं मया कथितम् उक्तम् । अन्यत् पूर्वप्रतिपादिताद् अन्यद् अपरं किं परिपृच्छसि ॥ ८४ ॥

इति श्रीमदनन्तमुक्तिसीमन्तिनीसीमन्तसरणविहारलोलयोगीन्द्र-
परमशिवानन्यतायोगयोजकेन पुरातनगीतगोप्यार्थदर्श-
नेन निरञ्जनसिद्धेन सिद्धजनाभिधानेन गुरूत्तमेन
कर्णाटभाषया कृतव्याख्यामवलोक्य संस्कृ-
तेन व्याख्या संपूर्णीकृता ॥

देवीकालोत्तरागमः सवृत्तिकः परिसमाप्तः ॥



# तन्त्रसंग्रह-द्वितीयभाग-श्लोकार्धानुक्रमणी

## निर्वाणतन्त्रस्य

३५७ पृष्ठे मन्त्रवायुसमायुक्त २६' इति पङ्क्त्युत्तरं पठनीयम्

## तोडलतन्त्रस्य



## कामधेनुतन्त्रस्य

## फेत्कारिणीतन्त्रस्य



## ज्ञानसङ्कलिनीतन्त्रस्य

---

## देवीकालोत्तरागमस्य

